शब्दान् जनयदाकाशं नैकं स्यात्। अपि च विलक्षणं घटं चिकीर्षुः कुलालोऽनभिमतभावं घटमुपादाय तदात्मना मृदा चाभिमतं निर्मिमीते। जलमाजिहीर्षुर्येन मृत्पिण्डमादत्ते तत, तत्र तस्यानुपयोगात्, छिद्रघटवत्, नहि जलमाजिहीर्षुश्छिद्रघटमुपादत्ते तत्र तस्यानुपयोगात्, न हि भवति छिद्रघटो घटादन्यः। अनुपयोगहेतुश्चावस्थाभेदो न तु तेन स्वरूपभेदसिद्धिः। अनन्यत्वे विशिष्टा युक्तिरप्यस्ति दधिघटकुण्डलादिकाम्यया प्रतिनियतं दुग्धमृत्तिकाहिरण्यादिकमुपादीयते, न वैपरीत्येन, तत् कुतो हेतोः? प्रागुत्पत्तेः कार्यस्य स्वकारणे सत्त्वात्, यद्यसत् कार्य्यं स्यात् असत्त्वाविशेषेण दधिकामो मृदमुपाददीत, घटकामो वा दुग्धमिति प्रतिनियमभङ्गः प्रसज्येत।

अथ घटं चिकीर्षुर्दण्डचक्रे पटं चिकीर्षुस्तुरीवेमानौ चोपादत्ते नतु वैपरीत्येन, किं नाम घटेन दण्डचक्रयोः पटेन वा तुरीवेम्नोरनन्यत्वं भवति? नो चेत्, सत्कार्य्यवादिनामुपादाने नियमोऽनन्यत्वसाधनाय नालं भवति व्यभिचारादिति चेत्, उपादानप्राधान्यप्रयुक्तिरुपादानविशेषो ह्यनन्यत्वं साधयतीत्यत्र तात्पर्य्याददोषः। नहि घटं चिकीर्षुरनुपात्तमृद्भारः, पटं चिकीर्षुर्वा अनुपात्ततन्तुः, दण्डचक्रे वा तुरीवेमानौ वा गृह्णाति; अथ प्रथमं यन्त्रसंग्रहश्चेदुपादानवैलक्षण्यं तत्रापि स्वीकार्यमेवानुभवानुरोधात्। उपादानकारणादेवानन्यत्वस्य साधनीयत्वाद्वा नोक्तदोषसम्भवः। अपि च तिलेभ्यस्तैलं न सिकताभ्यः इत्यनेन वैधर्म्येण निश्चीयते कार्य्यं सदिति—यत्र कार्य्यमुत्पत्तेः-

पूर्वं नास्ति तत्र कदापि न कार्य्योत्पादः, अन्यथा असत्त्वावि-शेषेण सिकताभ्योऽपि तैलं स्यात्। अथ तैलोत्पादिका शक्ति-स्तिलेष्वेव न सिकतासु तदसत्त्वाविशेषेऽपि तैलस्य शक्तिविशेषात् तिलेभ्यो भवत्युत्पत्तिर्न सिकताभ्यः इति चेदियं शक्तिः शक्य-सम्बद्धा वा तदसम्बद्धा वा सम्बन्धस्वीकारे नासता सम्बन्ध इति सत्कार्य्यसिद्धिः, असम्बन्धे सर्वत्र सर्वकार्य्योत्पादः स्यात्। तस्मात् सदेव कार्य्यम्। नित्यसमवायं सम्बन्धसत्त्वेन सम्बन्धिसत्तां चाऽयुपगच्छन्तः समवायिनि कथमनुत्पन्नस्यापि सत्त्वमपह्नुवीरन्, तस्मात् सत्कार्य्यसिद्धिरुपपन्ना। नन्वेवं कार्य्यार्थं कर्त्तृव्यापारो विफलः, कारणे कार्य्यस्य प्रागुत्-पत्तेरपि सत्त्वादिति चेत् अन्धतमसावृतस्य सतो घटस्य प्रकाशार्थं प्रदीपज्वालनवत् कर्त्तृव्यापारस्यानागतावस्थकार्य्य-प्रकाशेन सार्थकयात्। तस्मात् क्षीरादीन्युपादानान्येव दध्यादिभावेनावतिष्ठमानानि कार्य्याख्यां लभन्ते इति नोपा-दानकारणादन्यत् कार्य्यम्।

युक्तिदार्ढ्याय हेत्वन्तरमाह 'शब्दान्तराच्च।'

पूर्वसूत्रेऽसद्बोधकश्रुतेरुदाहरणादत्र तदन्यश्रुत्यभिप्राय-कमन्तरपदं तेन असद्बोधकश्रुतिभिन्नश्रुतेरित्यर्थः। तच्च शब्दान्तरं 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयम्' इत्यादि, तत्र चासत्पक्षनिराकरणेन सदनन्यत्वावधार-णार्था पुनः सदेव सोम्येदमग्र आसीदिति श्रुतिः। तत्रेदं-पदार्थस्य प्रागुत्पत्तेः सच्छब्दवाच्येन कारणेनाभेदबोध-

कसमानविभक्तिवचननिर्देशात् कार्य्ये कारणाभेदसिद्धिः । एतच्छ्रुतिव्याख्यानं कृतपूर्वमत्रालोचनीयम् । २।१।१८।

ननु प्रकृतिविकृतिभावः सामान्यविशेषभावेन द्विविधः, एकाया घटव्यक्तेः प्रकृतिर्या तत्कपालात्मिका मृत् सा न घटान्तरस्य प्रकृतिरेव स्थिते तद्घटोत्पत्तेः पूर्वं दृष्टपूर्वतत्कपालात्मकमृदः पुरुषस्य तद्घटोत्पत्त्यनन्तरं तत्कपालात्मकमृदियमिति प्रत्यभिज्ञा स्यात्, न चासौ भवति; तत्कपालात्मकमृद्व्यक्तिगतविशेषस्य प्रत्यक्षदृष्टस्य तद्घटोत्पत्तिदशायामसत्त्वात्तयोरनन्यत्वे तु तादृशविशेषस्यापगमासम्भव इत्यवयवावयविनोः प्रकृतिविकृतिभावेऽपि भेदस्याभ्युपगन्तव्यतया सत्कार्य्यानुपपत्तिरित्याक्षेपं निरस्यति—

पटवच्च । २।१।१९॥

यथा शुक्लतन्तूत्पन्नः पटो हरिद्रापिष्टेनानुरञ्जितो रञ्जनादर्वागदृष्टोऽपि, तदानीं प्रत्यभिज्ञातो न भवति, स्वरूपाभेदेऽपि आरोपितवर्णभेदरूपदोषात्, तथा तत्कपालात्मकमृद्गतविशेषस्य तद्घटावस्थारोपलक्षणदोषादग्रहणे वस्तुतः स्वरूपाभेदेऽपि न प्रत्यभिज्ञा । दोषात् प्रत्यभिज्ञाबाधो न वास्तवाभेदं प्रतिषध्नातीति भावः । तत्र च रञ्जकव्यापारेण हारिद्ररागापगमे प्राक्तनशुभ्रताप्रकाशवत्, कर्तृव्यापारेण कार्य्यस्य घटादेरभिभूतावस्थापगमे भवत्युद्भव इति वा सूत्रार्थः । चोऽवधारणे । कर्तृव्यापारस्य सत्कार्य्यपक्षे-

ऽप्यपेक्षणीयताप्रदर्शनाय सूत्रमिति द्वितीयार्थपरतनिका बोध्या । २।१।१९।

वस्तुतः विशेषकार्यकारणभावस्यात्रोपयोगो नास्ति इति बोधयितुं सामान्यधर्ममादायैवानन्यत्वमिति वा बोधयितुमाह—

## यथा च प्राणादि । २।१।२०॥

यथा हि लोके प्राणायामेन निरुद्धेषु प्राणापानादिषु जीवनमात्रं कार्यं निर्वर्त्यते—न कार्यान्तरमाकुञ्चनप्रसारणादिकम्, पुनः कारणमात्ररूपतामपहाय प्रवृत्तेषु च तज्जातीयेषु सर्वमेव निर्वर्त्यते । यथा व्यक्तिभेदेऽपि, सामान्यतो भेदाभावः स्वभावाविशेषप्रयुक्तः । तथा कारणस्वभावानुवृत्तेरेव कार्यस्यापि कारणानन्यत्वम् । एतदुक्तं भवति, यद्धर्मावच्छिन्नं यद् धर्मनियतस्वभावः तद्धर्मावच्छिन्नं तद्धर्मावच्छिन्नप्रतियोगिताकभेदाभाववदिति नियमः तेन कार्यभेदो वा व्यक्तिभेदो वा ■ सामान्यतोऽनन्यत्वं बाधत इति । अतश्चिदचिदात्मकस्य कृत्स्नस्य जगतस्तथाविधब्रह्मकार्यत्वादनन्यत्वेन 'येनाश्रुतं श्रुतं भवति' इत्यादि श्रुतिप्रसिद्धा प्रतिज्ञा सूपपन्ना ।२।१।२०।

एकविज्ञानेन सर्वविज्ञानं प्रकारान्तरेणोपपादयतामसत्कार्यवादिना नैयायिकानां 'परमेश्वर एको नियन्ता तन्नियम्याश्चासंख्याता जीवात्मानः' इतिभेदाभ्युपगमं तर्केण निराकुरुते—

( इतरव्यपदेशाधिकरणम्—७ । )

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः । २।१।२१॥

'इतरेषां' परमात्मनो वास्तवभिन्नत्वेनाभिमतानां सर्वेषां जीवादिजडान्तानां यो व्यपदेशः विशिष्टः अपदेशः,—स्वरूपकथनम् = 'ईश्वरः कारणं पुरुषकर्म्माफलयदर्शनात्' । ( न्यायसू० ४।१।१९ ) इत्यादिना पारतन्त्र्यकथनं फलमात्रं प्रतीश्वरस्य कारणत्वकथनञ्च, तस्मात् 'हिताकरणादिदोषप्रसक्तिः' हितस्य इष्टमात्रस्य यदकरणम्, आदिपदेन अहितकरणस्य ग्रहणम्, जीवकर्त्तृकं यदहितफलकाचरणं ततो यो दोषः स परमात्मनि प्रसज्यते, जीवानां नियम्यत्वात् पारतन्त्र्यात्— परमात्मनो नियन्तृत्वात् स्वातन्त्र्येण फलजनकत्वाच्च । यथा हि भृत्येन शस्यादिकमुत्पादयन् क्षेत्रस्वामी मार्षकर्षणादिरूपहितकरणे भृत्यमप्रवर्त्तयन् तस्यानुत्पत्तिदोषभाग् भवति तद्वत् । २।१।२१।

अत्र परेणाक्षिप्यते—

अधिकं तु भेदनिर्देशात् । २।१।२२॥

तुः पक्षान्तरद्योतकः, 'भेदनिर्देशात्' जीवादीनां परमात्मनो यो भेदनिर्देशः अन्यत्वकथनम्—तस्मात् = तदपेक्षया 'ये तावत् सर्वेषां परमात्मनोऽनन्यत्वमभ्युपगच्छन्ति तेषाम्' अधिकं दोषबाहुल्यं भवतीत्यर्थः । अयमाशयः, परदितं सर्वे नानुतिष्ठन्ति प्राज्ञस्यापि तत्र हिताकरणदर्श-

नात्, स्वहितं तु सत्यां प्रज्ञायां सर्व एवानुष्ठातुं प्रवर्त्तन्ते। यदि जगत् परमात्मनोऽनन्यत्, जीवहितमपि तस्यैव हितं, स्वतन्त्रः सर्वज्ञ. सर्वशक्तिसम्पन्नोऽपि परमात्मा तन्नानुतिष्ठतीति सोयं पूर्वतोऽधिको दोष इति। २।१।२२।

समाधत्ते।

## अश्मादिवत् तदनुपपत्तिः। २।१।२३॥

जीवादिजडान्तं जगत् 'अश्मादिवत्' अश्मा स्फटिकादिमणिः पाषाणश्च। आदिपदाद् दर्पणादिपरिग्रहः। तद्वत्, अतः 'तदनुपपत्ति'='तस्य' प्रदर्शितदोषस्यानुपपत्तिः असिद्धिः। एतेनैतदुक्तं भवति, चिदचिदुभयात्मकं ब्रह्म, तस्माच्चिदचिदुभयात्मकं जगदुत्पद्यते, तत्राचिदंश परिणममानः स्थूलरूपेणाविर्भवति चिदंशश्च प्रतिबिम्बभावमधिगच्छति, न तु तस्यापि परिणामं, अविक्रियत्वात्। एवं विशेषेऽपि यथा विकारः प्रकृतितो नातिरिच्यते तथा प्रतिबिम्बमपि बिम्बात्; इत्युभयात्मकाद् ब्रह्मणोऽनन्यत्वं विकारभूतस्य जगतो घटते। उभयात्मकत्वं जगतोऽपीत्यश्मादिसादृश्यं तस्य। स्फटिकादिमणिलक्षणोऽश्मा, अभिव्यक्तसूर्यतत्किरणप्रतिबिम्ब, पाषाणश्चानभिव्यक्तसूर्यादिप्रतिबिम्ब। अभिव्यक्तसूर्यादिप्रतिबिम्बस्य मणेर्गुरुत्वाद्याश्रयो य. पार्थिवांशस्तेनाचिद्रूपमीयते, तत्प्रतिबिम्बसूर्यादिना चाभिव्यक्तचिदंश.। अत्राभिव्यक्तत्वं प्रातिस्विकान्तः करणप्रतिबिम्बितत्वम्, अनभि-

व्यक्तचिदंशत्वञ्च तादृशान्तःकरणशून्यत्वे सति समष्टिप्रतिबिम्बचिदभिमन्यमानत्वम्, पाषाणादीनामन्तःकरणाभावात् पृथिवीदेवताया: पर्वतदेवताया वा योऽहमित्यभिमानः स्थूले तदंशे च तद्विषयत्वस्यावयवानामवयव्यनन्यतया सत्त्वात् अवयविनि देहेऽहमिति बोधस्याभिमानाख्यस्य प्रसिद्धेः देवादिवदिति सूत्रेण स्पष्टमिदमभिधास्यते। हिताहिते नाम इष्टानिष्टे चेतनस्य स्वभावानुबद्धे, जगति चेतनतया प्रसिद्धवस्तुजातस्य प्रतिबिम्बचिद्रूपतया, तस्य वास्तवं किञ्चिद् हितमहितं वा न युज्यते; नहि प्रतिबिम्बसूर्यस्य प्रसृमरोऽप्यातपो वस्तुतस्तदीयो भवति, भवति तु बिम्बसूर्यस्य, अत्रापि प्रतिबिम्बचित्स्वरूपजीवस्येदमिति गृह्यमाणं हितमहितञ्च बिम्बभूतचितो भवेत्, यदि तदीयं हितमहितं वा किञ्चित् स्यात्। इह तु, यथा—उपाधिस्थितमालिन्यकम्पादिर्मान् प्रतिबिम्बसूर्ये गृह्यमाणोऽपि न तत्र वास्तवः, बिम्बसूर्ये च निःसम्बन्धस्तद्वत्। तस्मात् हिताकरणादिदोषस्याद्वैतपक्षेऽनुपपत्तिः। न चैवं धर्माधर्मादिविलोपप्रसंगः, कथं नाम विलोपः? जीवोपाध्यवच्छेदेन तेषाम् परमात्मप्रभवत्वात्,—परमात्मनश्चिदचिद्रूपयात्मकत्वेन सर्वप्रकृतित्वस्यासकृदुक्तत्वाच्च। अधिकमग्रे वक्ष्यते।

अथाचेतनस्य हितमहितञ्च भवितुमर्हति, दृश्यते हि घटादेश्चेतनस्य निरस्यपस्थानस्थितिर्हितं मुद्गरपतनं चाहितमितिचेत्, तत्रापि हिताहितयोश्चेतने घटस्वामिनि पर्य्यवसा-

नात्, अचेतनस्य निरवयवस्यानित्यत्वं तद्धेतौ वा हितरूपताया ध्वंसे तद्धेतौ वा अहितरूपतायाः स्वतो निरूपयितुमशक्यत्वात्। तस्मादनन्यत्वपक्षे परमात्मनो हिताकरणादिदोषप्रसक्तिर्नास्तीति सिद्धम्। २।१।२३।

प्रसक्ताक्षेपगर्भतत्समाधानपरमधिकरणान्तरमाह—

( उपसंहारदर्शनाधिकरणम्—८। )

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ।२।१।२४।

ननु प्रतिबिम्बितसूर्यः स्फटिकादिः जीवस्योपमानं दर्शितं तन्नोपपद्यते 'उपसंहारदर्शनात्' सन्निहिते शरीरे संहारदर्शनात्—चैतन्यस्य विनाशदर्शनात्, चित्प्रतिबिम्बत्वेन यदुक्तं तस्यापायदर्शनादिति यावत्, न ह्यव्यवहिते स्फटिकमणौ सूर्यप्रतिबिम्बस्य संहारो भवति। न च, अन्तःकरणं लिङ्गशरीरं वा चित्प्रतिबिम्बोपाधिः, तदुत्क्रान्तेः प्रतिबिम्बापायः स्थूलशरीरस्य तदुपाधित्वाभावेन तत्सन्निधानस्याकिञ्चित्करत्वादिति वाच्यम्, जीवनदशायां स्थूलशरीरे चित्स्फुरणात् तस्योपाधित्वानभ्युपगमस्यायुक्तत्वात्, जडत्वाविशेषेऽपि एकस्य तदुपाधित्वमन्यस्य तदभाव इति कल्पनगौरवाच्च 'इति चेत्' इत्येवं प्राप्तेऽभिधीयते, 'न' नैतद्युक्तं 'क्षीरवद्धि'—यथा हि गोः क्षीरं गोरवयवत्वाविशेषेऽपि स्तनमुखादेव निःसरति न पादादिभ्यः, तथा जडत्वाविशेषेऽपि चित्प्रतिबिम्बमन्तःकरणे लिङ्गशरीरे वा न तु स्थूलशरीरे, स्वभावभेदात् जीवनदशायां स्थूलशरीरे चित्-

स्फुरणं च अन्तःकरणादिसम्बन्धादेव, न तु तस्य पृथगुपाधित्वम्. हि यतः ; अतोऽश्मादिदृष्टान्तानुपपत्तिरूपः परेषामाक्षेपो न युक्तः। यद्वा कार्य्यकारणयोरनन्यत्वं नोपपद्यते, यतः चिदचिदात्मकं ब्रह्म जगतः कारणमित्यभ्युपगमे जगदपि चिदचिदात्मकं स्यात्, नच तथा भवति, उपसंहारदर्शनात्। जीवानामपि देहस्य—यदुदाहरणेन सर्वत्र चिदचिदात्मकत्वं साध्यते तस्य, जडतयोपसंहारदर्शनात् मरणोत्तरं जडत्वे पर्य्यवसानदर्शनात् चिदचिदात्मकत्वं न युज्यते स्वभावस्यानपायितया, तदानीं जडमात्रत्वेन तस्य पर्य्यवसानं न स्यात्। 'इति चेत्' 'न' नैतद् युक्तम्, 'हि' यतः 'क्षीरवत्' जीवदेहोऽपि दुग्धमिव चिदचिद्रूपेण उपसंहृतं भवतीति दृश्यते। यथा हि क्षीरं पर्य्युषितं सत् क्रमेण कीटमयत्वमापद्यमानं चिदचिन्मयं भवति, देहोऽपि तथा; चिदचिदनात्मकत्वे तस्य चिदचिदात्मककीटभावेन परिणामः कथं स्यात्, तेषां कीटोपाधिकजीवानाम् अनागतावस्थतया प्रागपि तद्रूपेणावस्थानाच्च चिदचिदात्मकत्वानुपपत्तिः तत्त्वेनानुपलब्धिस्तु अनागतावस्थतया सूक्ष्मत्वादिति ध्येयम्। २।१।२४।

नन्वेवं घटादेः कथं चिदचिदात्मकत्वं तत्राह—

देवादिवदपि लोके।२।१।२५॥

यथा लोके जनसमवाये देवाः=एष विश्वनाथ एषान्नपूर्णेत्यादिरूपेण पाषाणादिलिङ्गप्रतिमाः अर्वाग्दृशामप्रत्यक्षचे-

तना अपि देवत्वेन पूज्यमाना दृश्यन्ते, यथा वा एष नारायण इति, शालग्रामशिला;—आदिपदान्नागादिपरिग्रहः, यथा वा नागाष्टकपूजायां कुट्टिमस्थालेपनचित्रं चितृस्वरूपनागात्मकत्वेन व्यवह्रियते, तद्वत्। अधिकारेण शास्त्रपरिग्रहः यथा देवादीनां दृश्यमानलिङ्गप्रतिमाचक्रयन्त्रादिकं पाषाणादिनिर्मितमपि देवताभावाच्चिदचिदात्मकतया लोके शास्त्रे च गृह्यमाणं दृश्यते तथा घटादयोऽपि चिदचिदात्मका एव ग्राह्याः, पृथिव्याद्यभिमानिदेवताधिष्ठानत्वात्। 'यः पृथिवी न वेद' इत्यादि श्रुतिभिः स्मृतिवचनैश्च पृथिव्यादेर्देवतात्वावगमात्। 'घट त्वं धर्मरूपोऽसि ब्रह्मणा निर्मितः पुरा। त्वयि क्षिप्ते सन्तु लिप्ताश्चन्दनैः सर्वदेवता' इति मन्त्रलिङ्गेन घटस्यापि देवतात्मत्वप्रतीतेः। घटस्य देवतात्मताया मन्त्रादवगमेऽपि आपामरं तथा प्रसिद्ध्यभावात् विश्वनाथलिङ्गादीनां पाषाणमयत्वेन देवत्वेन च लोकव्यवहारसिद्धत्वात् दृष्टान्तविधया तत्परदेवादिशब्दग्रहणमिति देवशरीरतया च पृथिव्यादेर्विभक्तस्याप्यंशस्यावयवता न हीयते। अतएव स्थितिस्थापकसंस्कारवतः शाखादेराकर्षणत्यागे पूर्वस्थानभागित्वमिव परेच्छाप्रबाधाविरहे विभक्तस्यापि मृत्पिण्डादेः स्वत एव भूतलसन्निपातो युज्यते ।२।१।२५।

चिदचिदात्मकब्रह्मणः प्रकृतित्वे सांख्याः प्रत्यवतिष्ठन्ते—

( कृत्स्नप्रसक्त्यधिकरणम्—६ । )

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ।२।१।२६॥

'कृत्स्नप्रसक्तिः'—चिदचिदात्मकब्रह्मणः प्रकृतित्वे-कृत्स्नस्य कृत्स्ना वा प्रसक्तिः परिणामप्रसक्तिः कृत्स्नस्य चिदचिदुभयात्मकस्य ब्रह्मणः परिणामः प्रसज्येत, कृत्स्ना ब्रह्मत्वव्यापिका वा परिणामसंसृष्टिः स्यात्, 'वा' अथवा 'निरवयवत्वशब्दकोपः' ब्रह्मणो निष्कलत्वश्रुतिविरोधः स्यात्, तदुभयमप्ययुक्तमिति भावः। एतेनैतदुक्तं भवति, परिणामः सामुदायिकः आंशिको वा भवति, दुग्धस्य सामुदायिकः परिणामो दध्याकारः नहि एकभाण्डस्थदुग्धस्य केनचिदंशेन दधिपरिणामः केनचिदंशेन च वस्त्वन्तरपरिणामो भवति वृक्षादेस्तु शाखाकाण्डपत्रपुष्पादिपरिणामश्चांशिको भवति। सामुदायिकांशिकव्यतिरिक्तस्तु परिणामो नास्ति तद् ब्रह्मणः सामुदायिकपरिणामो न युज्यते 'अरूपमव्ययम्'—'यत् सत् तदमृतम्' 'अशीर्य्यो नहि शीर्य्यते' 'अयमात्मा अनुच्छित्तिधर्मा' इत्यादिश्रुतिभ्य. 'अविकार्य्योऽय'-मुच्यते इति स्मृतेश्च। नाप्यांशिकः परिणामो ब्रह्मणो निरवयवत्वेनांशाभावात्। सावयवत्वे च 'निष्कलं निष्क्रियं शान्तम्' इति 'नित्यो नित्यानाम्' इति 'नित्यो ह्यमूर्त्तः पुरुषः' इति चैवमादिकाः श्रुतयो व्याकुप्येरन्। सावयवस्य निष्कलत्वनित्यत्वमूर्त्तत्वासम्भवात् अतो ब्रह्मप्रकृतिकत्वं जगतो नोपपद्यते ।२।१।२६।

अत्रोत्तरयति—

श्रुतेस्तु शब्दमूलत्वात् ।२।१।२७।।

तुकारः पूर्वपक्षव्यवच्छेदार्थः । 'शब्दमूलत्वात्' शब्दे मूलत्वात् = शब्दे शब्दैकगम्ये विषये 'श्रुते' 'मूलत्वात्', प्रमाणत्वात् श्रुत्या ब्रह्मणः प्रकृतित्वं साधितं केवलेन तर्केण तदपाकरणं न भवति, तर्को ह्यनुमानानुकूलः, अनुमानं च नरशिरःकपालं शुचि प्राण्यङ्गत्वात् शङ्खवत् इत्याद्यागमविरुद्धार्थं न साधयितुमीष्टे इत्युक्तम्। अपि च परकीयस्तर्कोऽयं श्रुत्यैव निरस्यते। तथा हि 'पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि' इत्यनेन मन्त्रवर्णेन ब्रह्मपादस्य परिणामः सर्व्वाणि भूतानीति प्रतिपादितम्। ननु कथमत्र परिणामप्रतिपत्तिरिति चेत्, सामानाधिकरण्यनिर्देशादितिब्रूम, पादोंऽशश्चतुष्टयस्यैकांऽशः। तेनांशिकपरिणामो ब्रह्मण इतिश्रुतिसिद्धम्। अचिदंशे परिणामसत्त्वेऽपि चिदंशे तद्विरहात्, उभयपर्याप्तसत्तावच्छेदेनानुच्छित्तिधर्म्मोत्व निष्क्रियत्वं च सिद्धम्, नित्यत्वं च प्रत्येकमेव चितोऽचितश्चेति धर्म्मानित्यत्वेऽपि धर्म्मिणो नित्यत्वात्। निष्कलत्वश्रुतिरत्वर्थविशेषपरत्वेनोपपादनीया, अन्यथा छान्दोग्योपनिषज्जाबालखण्डोक्त ब्रह्मणश्चतुष्पात्त्व प्रतिपाद चतुष्कलत्वं च विरुध्येत। तथाहि 'ब्रह्मणस्ते पादं ब्रवाणि' इत्युपक्रम्य 'प्राची दिक् कला प्रतीची दिक् कला दक्षिणा दिक् कलोदीची दिक् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम' इत्यादिश्रुत्या कला-

षोडशकं यस्य ब्रह्मणः पठ्यते, तस्य कथं नाम निष्कलत्वं स्यात् ? तस्मात् कलाशब्दस्यार्थभेदे श्रुतिरेव मानम्। अवयवित्वं हि परिच्छिन्नत्वव्याप्यम्। अपरिच्छिन्नस्यावयवित्वाभावेनावयवासिद्धेः, अवयवैकदेशरूपायाः कलायास्तत्राभावान्निष्कलत्वं तस्य निराबाधम्। चतुष्कलत्वं तु अंशाव्यपदेशात्, व्यपदिष्टांशोऽवयवश्च नाभिन्नौ, अपरिच्छिन्नत्वेन प्रतीयमानस्यांशव्यवहारात्, इहारुन्धतीं पश्य नेतरत्रेत्याकाशस्य सप्तर्षिमण्डले वसिष्ठनक्षत्रसन्निहितोंऽशोऽङ्गुल्या निर्दिश्यते इति हि प्रसिद्धम्। तादृश एवांशो बृहत्त्वे पादस्तदपेक्षया क्षुद्रत्वे कलेति संज्ञायते। संज्ञा चेयं श्रौती। तादृशे श्रुतिव्यपदिष्टे पादे परिणामस्य श्रुत्युपपादितत्वात्तस्य चावयवत्वाभावेन निरवयवत्वशब्दकोपाभावात् सिद्ध एवाचिदवच्छेदेनांशिकः परिणामो ब्रह्मणः। न च तावता उभयात्मकब्रह्मण्यपरिणामित्वाव्ययत्वादिबाधः। उक्तञ्चेदमसकृत्।

नच अपरिच्छिन्नेंऽशव्यवहारः काल्पनिकः न हि काल्पनिकांशमादाय वस्तुसाधनं युज्यत इत्याशङ्क्यम्, गगनस्य काल्पनिकेऽपि प्रदेशे शब्दोत्पत्तिप्रतीतेः। २।१।२७।

शब्दगम्ये यत् श्रुतिमूलकत्वमुक्तं तदेव दृष्टान्तवर्णनेन समर्थ्यते—

आत्मनि चैवं विचित्राश्च हि ।२।१।२८।।

'च' किञ्च, कथं न युज्यते ? लोकेऽदृष्टत्वादिति चेत् नैष दोषः। 'हि' यतः 'आत्मनि' अहमप्रतिपादकश्रुतौ,

'एव' लोके यत्र दृश्यते तादृशा विचित्रा विरुद्धवत् प्रतीयमाना चित्रा विस्मयावहाश्च भावा श्रूयन्त इति शेष, 'आत्मनि' देवात्मशक्तिरूपे ब्रह्मणि ईदृशा विचित्रा भावा श्रुत्या प्रतिपाद्यन्त इति वा। तत्र हि 'अस्थूलमनणु' इति 'अपाणिपादो जवनो ग्रहीता' इति 'एकोऽवर्णो बहुधा शक्तियोगात्' इत्यादिश्रुतयो मानम्। अतएव भगवान् व्यास —

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्।
प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम् इति।२।१।२८।

आक्षेपमुद्धृत्य सांख्यमुखमर्दनायाह—

## स्वपक्षदोषाच्च ।२।१।२९।।

च किञ्च कृत्स्नप्रसक्तिरिति योऽस्मत्पक्षे दोष उपन्यस्त, स स्वपक्षेऽपि वर्त्तते। साख्या हि प्रधानस्य परिणाममभ्युपगच्छन्ति, प्रधानं च निरवयवम्।

तथा चाहुः तेषामभ्युपगमं —

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ इति।

प्रधानस्य कृत्स्नपरिणामप्रसक्तिरिति, ननु कोऽयं दोष, परिणामशीलस्य तस्य दुग्धप्रस्थस्य दधि परिणामवत्कृत्स्नपरिणतिरेवास्तु इति चेन्न दुग्धस्य दधिपरिणामवत्प्रधानस्य कृत्स्नपरिणामे प्रधानभावेन तस्य प्रत्यावृत्तिर्न स्यात्, नहि दधिपरिणामस्य दुग्धतया कदापि प्रत्यावृत्तिर्भवति। अथांशिकपरिणाम,

निरवयवत्वेन यः शब्दः सांख्यस्मृतिः तस्य कोपो व्याघातः स्यादिति दोषस्य सांख्यमतेऽनुद्धारात्। चकारोऽयमधिकरणसमाप्तिमपि द्योतयति ।२।१।२६।

ननु शक्तेर्ब्रह्मत्वं ब्रह्मण उभयाकारत्वञ्च न सूत्रकृत्सम्मतं तथात्वे क्वचिदपि सूत्रे तद्बोधनाय निर्विवादः स्त्रीलिङ्गप्रयोगः स्यात् इति कस्यचिदाक्षेपोऽस्मिन्नध्याये निरसितव्य इत्याशयेनाह—

( सर्वोपेताधिकरणम्—१० । )

सर्वोपेता च दर्शनात् २।१।३०॥

शक्तिरिति विशेष्यपदं तद्दर्शनादिति लिङ्गेनोपस्थाप्यते। 'सर्व्वोपेता' सर्व्वाभिः श्रुतिभिरुपेता उपपन्ना। सर्व्वासां निराकारसाकारत्वसर्व्वेश्वरत्वात्मत्वब्रह्मत्वादिबोधकश्रुतीनां तत्रैव तात्पर्यमिति भावः। यथा, ऋजुकुटिलसर्व्वाध्ववाहिन्यो नद्यः सागरमुपयान्ति तद्वत् सर्व्वाः श्रुतयः शक्तावुपेताः। तत्र प्रमाणमाह 'तद्दर्शनात्' तस्याः निराकारायाः साकाराया वा शक्तेर्दर्शनात् = श्रुतेः, श्रुतिभ्यः। दर्शनत्वसामान्येनैकवचननिर्देशः। तथा हि 'ते ध्यानयोगानुगता अपश्यन्, देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति प्रागुपदर्शितः श्वेताश्वेतरीयो मन्त्रवर्णः, 'उमां हैमवतीम्' इति ब्राह्मणम् हंसवती ऋक्, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादयः श्रुतयश्च। द्विविधवेदस्था हंसवती ऋग् यथा—

'हंसः शुचि सद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दु-रोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्'। एतदर्थस्तु अद्रिजा पार्वती हैमवती उमा ऋतं बृहत्, बृहत् सर्वव्यापकम् ब्रह्म सा अद्रिजा हंसादिस्वरूपा, हंसः सूर्यः, हंसादिस्वरूपा सैव इति पूर्वं सम्मतप्रायः। बृहदारण्यके च 'स वा एष महानज आत्मा' इति प्रकृत्य 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इत्यादिनापि तस्या एव आम्नानम् आत्मशब्दस्य पुलिङ्गत्वात् पुलिङ्गप्रयोगोऽयम्, 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी' इत्यादिर्मन्त्रवर्णः पूर्वोपदर्शितानि श्रुत्यन्तराणि च स्मर्त्तव्यानि। चकारात् स्मृतेः परिग्रहः, सा च 'एकैवाहं जगत्यत्र द्वितीया का ममापरा,' इति 'यच्च किञ्चित् क्वचिद् वस्तु, सदसद्वाखिलात्मिके तस्य सर्वस्य या शक्तिः सा त्वम्' इत्यादिश्च। हंसवत्या ऋचः पौराणिकागमिकैः प्रतिपन्नो-ऽर्थस्तु पदश्लेषपूर्वकमिह प्रदर्श्यते स्वरभेदस्य तैरिष्यत एव।

हंसः। शुचि सत्। वसुः। अन्तरिक्षसत्। होता। अवेत्। इषदतिथिः। दुरोणसत्। नृषद्वरसत्। ऋतसत्। व्योमसत्। अब्जा। गोजा। ऋतजा। अद्रिजा। ऋतम् बृहत्। इति पदच्छेदः।

हंसः हंससदृशः शरत्कालप्रिय इति यावत् शुचि सत् शुचिं शुक्लपक्ष सीदति प्राप्नोति शुक्लपक्षस्थः आवृत्त्या च शुचि सत्—शुचिं पवित्रभावं सीदति गच्छति प्राप्नोति सः

शुद्धभावः मुनिरिति यावत् मुनिबोधकेन शुचिसच्छब्देन सप्तत्वसंख्या तेन च सप्तमीतिथिर्लब्धा वसुशब्देनाष्टमीतिथिः, अन्तरिक्षसच्छब्देन खेटा ग्रहा उच्यन्ते ग्रहाणां नवत्वसंख्याबोधकतया नवमीतिथिलाभः, षण्मुन्योर्वसुरन्ध्रयोरिति निगमवचने बहुवचनशून्यमुनि-वसु-रन्ध्रशब्दैः सप्तम्यादितिथिलाभवत्, मध्वाः क्रोशन्तीत्यादिवाक्ये मध्वादिपदस्येव—तत्तिथेः स्वसम्बन्धिनि लक्षणया होतृविशेषणत्वं भवति शरत्कालीनशुक्लपक्षीयसप्तम्यादितिथित्रयविशिष्टो होता यजमानः अवेत् ज्ञातवान्, किं ज्ञातवान्, 'इपद तिथिः' इषम् आश्विनमासं दायन्ति शुद्धं कुर्वन्ति दक्षिणायनमपि कर्म्मार्हं कुर्वन्ति, इषदाः तिथयः नवरात्रव्रतविहिताः प्रतिपदाद्यास्तिथयो यस्याः सा आश्विनमासविहितनवरात्रव्रताराध्या, 'दुरोणसत्' 'सा वा एषा देवता दुर्नाम' इत्यादि (छ० १।२।६) श्रुत्युपदर्शितनिरुक्तिकं दुर्गानाम दुरोणशब्देनोच्यते, 'दूरं ह्यस्या मृत्युः' इति पञ्चमस्वरगर्भ-तालव्यतृतीयव्यञ्जनादिरेफान्तस्यार्थः, पाप्मानं दिशामन्ते गमयाञ्चकार इति गाशब्दस्यार्थः, अत्र ओणस्यापि तदर्थकतया गाशब्दोपस्थापकत्वम् शब्देनार्थस्येव अर्थेन शब्दस्यापि सम्बन्धित्वाविशेषेणोपस्थापकत्वात्, 'ओणृ अपनये' इतिधातोः कर्त्तर्य्यच्प्रत्ययेनापनयनकर्त्तृत्वाद् दुरोणं दुर्गा दुर्गा नाम सीदति प्राप्नोति वाचकतया गृह्णाति या सा 'अद्रिजा' पार्वती 'बृहत्' 'ऋतम्' सर्वव्यापकं ब्रह्म,—सा पार्वती कीदृशी—

नृषद्वरसत्=नृन् सीदति विशृणाति हिनस्ति—नृषद्, तेषां नृषदां नरघातकानां वरः श्रेष्ठः श्वापदश्रेष्ठः सिंहः, तेन सीदति गच्छति, सिंहवाहना; 'ऋतसत्' कर्म्मफलेषु जुष्टा ऋत' कर्म्मफलं तत्र स्थिता 'कर्म्मफलेषु जुष्टां दुर्गाम्' इतिश्रुतेः। 'व्योमसत्' सूर्य्यचन्द्रादिरूपा, यद्वा 'तस्मिन्नाकाशे स्त्रियमाजगाम' इति श्रुतेः व्योमसदित्यनेनोमामूर्त्तिलाभः जगद्धात्रीति या तन्त्रशास्त्रे व्यपदिष्टा, 'अब्जा' सागरसम्भवा लक्ष्मीः 'गोजा' गवि वाचि जाता वाग्भवबीजदेवता सरस्वती एवं जननस्थानानां कथनेऽपि वस्तुतः सर्वा एव मूर्त्तयः ऋतजाः ऋतात् सत्यस्वरूपात् स्वमहिम्न एवाविर्भूता इति ज्ञातवान् इत्यर्थः। यद्वा नृषत् श्वापदः सिंहः वरः पतिः शिवश्च तयोः सीदति निषीदति तेन सिंहारूढा शिवारूढा च लभ्यते, किञ्च नृषदिति ना पुरुषश्च नारी स्त्री च नरौ स्त्रीपुंसं कामरतिस्वरूपं तत्र सीदति, निषीदतीति नृषत् छिन्नमस्तामूर्त्तिः 'वरसत्' वरे पत्यौ सीदति निषीदतीति काल्यादिमूर्त्तिरित्यादिकमर्थान्तरमप्युन्नेयम्पुराणादिप्रामाण्यात्। ऋग्वेदे बृहदित्यभिमपदशून्येयमृगिति विशेषः। अत्र शुचिसदित्यस्य आवृत्तिर्यदि न रोचते, तदा अष्टमीनवमीतिथिद्वयविशिष्टः इत्यर्थः करणीयः। एतेन महाष्टम्यादिकल्पो उच्यत इति भावः।

एवञ्च शब्देनैवात्मरूपेण ब्रह्मत्वश्रवणात् तस्या एव पार्व्वत्याकाराया ब्रह्मत्वश्रवणाच्च ब्रह्मपराणां सर्व्वेषां श्रुति-

वाक्यानां तत्रैव तात्पर्यमिति विशेषबुबोधिषया प्रपञ्चोऽयं गतार्थस्येति ध्येयम् । २।१।३०।

अत्राशङ्का-तत्समाधानपरमधिकरणमाह—

( विकरणाधिकरणम्—११ । )

## विकरणान्नेति चेत् तदुक्तम् ।२।१।३१॥

ननु ब्रह्मण आकारो न सम्भवति, कुतः, 'विकरणात्' करणाभावात्, इन्द्रियाभावात्, 'न तस्य कार्य्यं करणं च विद्यते' इति, (श्वेता० ६।८) 'सर्वेन्द्रियविवर्जितम्' इति ( श्वेता० ३।१७ ) अचक्षुष्कमश्रोत्रमवाक् ( बृह० ३।८।८ ) इति चैवमादिश्रुतिभ्यः 'इति चेत्' इति यदि उच्यते, तत् समाधीयते। 'तदुक्तम्'-'संभोगप्राप्तिरिति चेन्न वैशिष्ट्यात्' इति सूत्रेण ( १।२।८ ) विशेषप्रतिपादनपरेणोक्तं यत् तदेव समाधानम्; जैवशरीराद्ब्रह्मशरीरे यो विशेषस्तत्र अनियतविषयेन्द्रियत्वमेकम्। जैवेन्द्रियं नियतविषयं भवति तथाविधमिन्द्रियमुमाकारब्रह्मणि नास्ति तादृशप्रसिद्धेन्द्रियशून्यत्वं श्रुत्या प्रतिपादितमन्यथा 'श्रुतत्वाच्च' ( ब्रह्म० १।१।११ ) इति 'रूपोपन्यासात्' ( १।२।२३ ) इति चैवमादिसूत्रमूलश्रुतयः पीड्येरन्निति भावः ।२।१।३१।

भवतु कदाचित्साकारं ब्रह्म, न तूमाकारं तदित्याविपति—

( प्रयोजनवत्त्वाधिकरणम्—१२। )

न प्रयोजनवत्त्वात् ।२।१।३२॥

'न' उमा ब्रह्म न भवतीत्यर्थः। तत्र हेतुः 'प्रयोजनवत्त्वात्,' श्रुतिस्मृतिपूपलभ्यमानप्रयोजनत्वात्। स्वाप्ययाधिकरणादायुपदर्शितायाः उमाप्रतिपादकश्रुतेः 'ब्रह्म ह देवेभ्यो विजिग्ये तस्य ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमा' इत्युपक्रमप्रतीकादवगम्यते इन्द्रादीनामीश्वरमानितानिरासप्रयोजनासौ हैमवत्युमा। तथासौ आकाशाधिकरणोपदर्शिता आम्भृणी श्रुतिरिममर्थं स्पष्टमभिदधाति। श्रीशिवं पतित्वेनाप्तुं तस्यास्तपश्चरणादिकं च स्मृतिवर्णितमप्यत्र प्रमाणं जागर्ति।

आनन्दमयं भूमस्वरूपं ब्रह्म तु प्रयोजनहीनम्, प्रयोजनत्वस्यानन्दापेक्षाधीनत्वात्, अल्पत्वाच्च। अतएव श्रुतिराह 'न तस्य कार्यं करणञ्च विद्यते' इति। प्रयोजनवतः कार्याभावासम्भवात्। तस्मात् सप्रयोजनाया उमाया निष्प्रयोजनब्रह्मत्वं न सम्भवत्येवेतिपर्यवसितम्। उमाधिकरणाद्यनुक्ताक्षेपपरिहारार्थोऽयं विचारः ।२।१।३२।

समाधत्ते।

लोकवत्तु लीलाकैवल्यम् ।२।१।३३॥

तुकारः पक्षव्यवच्छेदार्थः, 'लोकवत्' लोकस्येव जनस्येव लीलाकैवल्यं, लीलायाः कैवल्यं केवलत्वम्, केवला = प्रयोजनं

विनैव प्रवृत्ता लीला, क्रीडाविशेषः, मङ्गलातिशयप्रवृत्तिहृष्टस्य बालस्य स्वभावसम्पादिता नृत्यादिरूपा, तथा चानन्दमयस्य भूम्नः, स्वभावसम्पादितक्रीडैव, भक्तानुग्रहः, तज्जनितशरीर-सम्बन्धः तदुचितचेष्टादिकं च, विनैव प्रयोजनमानन्दविशेषा-भिव्यक्ति लक्षणम्, अन्यथा उमाया ब्रह्मत्वाभावेऽपि निष्प्रयो-जनाम्नीरूपचेतनाद् ब्रह्मणः सृष्टिरपि न स्यात्, 'प्रयोजन-मनुद्दिश्य न मन्दोऽपि प्रवर्तेत' इति हि व्यवहारः। यदि तावदचेतनादेव सृष्टिरभ्युपगम्यते जितं नास्तिकैः, तस्मात् उमा-कारस्य ब्रह्मणस्तपश्चरणादिवज्जगत्सृष्टिरपि निराकारस्यापि लीलामात्रमभ्युपगन्तव्यं सर्वैरास्तिकपरीक्षकैरिति रहस्यमे-तेनैव सूत्रेणोद्घाटितमित्यवधेयम् ।२।१।३३।

नतु यदि जगत्कारणतया चेतनं ब्रह्म सिद्ध्येत्, सत्, तदेवो-पाधिविशेषावच्छिन्नमुमाकारं भवितुमर्हति; तदेव त्वसिद्धम्, न च श्रुतिस्मृतिभ्यां साधितपूर्वमेव तदितिवाच्यं बाधदर्शनेन तदसिद्धेः, यथा हि आदित्यो यूप इत्यादौ श्रुतिवाक्यादपि यथाश्रुतार्थस्य बोधो न भवति किन्तु लक्ष्यार्थस्य; तथा प्रकृतेऽपि; न खलु शतमपि श्रुतीनां बाधितार्थे प्रमाणतामापद्यते इत्यभिप्रेत्य निरीश्वरैः कृतमाक्षेपं निरस्यति—

( वैषम्यनैर्घृण्याधिकरणम्—१३। )

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ।२।१।३४।।

*निरीश्वरा वदन्ति, ब्रह्म-परमात्मपरमेश्वरशक्तिप्रभृतिनाम-*भिराख्यातः सर्वशक्तिः सर्वज्ञो न जगतः कारणं भवितुम-

इति, वैषम्यनैर्घृण्यप्रसङ्गात्, वैषम्यं विषमदर्शित्वं, सत्यपि सृज्यत्वाविशेषे एकतरपक्षपात., सृष्टेषु केचित् प्राणिन. सुखिन केचिच्च दु खिन इति वैषम्येन, सृष्टिकर्त्तुः सर्वशक्तेः सर्वज्ञस्य एकतरपक्षपाती निष्कारणकः प्रसज्येत, अन्यथा सर्वान् प्राणिनः समानेवासृजत्। 'नैर्घृण्यम्' निर्दयत्वं, सत्यपि सामर्थ्ये शोकाद्यार्त्तप्राणिनामार्त्ति निराकरणवैमुख्येन क्वचित् पुनरप्यधिकतरदु'खदानेन निर्दयत्वं प्रसज्येत। असार्वज्ञ्ये शक्तिन्यूनत्वे च न पारमैश्वर्य्यं तस्य स्यात्–ततश्च जगत्कारणत्वं व्याहन्यते। तस्मादचेतनकारणकं जगदिति। तत् परिहरति, 'वैषम्यनैर्घृण्ये न' तस्मिन् जगत्कारणे ब्रह्मणि वैषम्यम् विषमदर्शिता नैर्घृण्यं निर्दयत्वं च न स्त इत्यर्थ कुत 'सापेक्षत्वात्' योग्यत्वापेक्षत्वात्, यस्य यादृग् जन्मायुर्भोगश्च भवितुं युक्त तदपेक्षत्वात्, सा च योग्यता धर्माधर्मकृता। तथा चादृष्टापेक्षित्वादित्यर्थः सृज्याना प्राणिना यत्पूर्व्वकर्म्मफल तदनुसारेण सृष्टिवैषम्यात्, न परमेश्वरस्यैकतरपक्षपात.। नापि नैर्घृण्यम्, करुणया कर्त्तव्याकर्त्तव्यबोधकवेदस्य वचनात्, तदवधीरकाणां तु दण्डस्वरूपेण दु खदापनात्। न हि करुणामयोऽपि धार्म्मिको राजा पुत्रमपि कृतापराध दण्डमविधाय विजहाति "अदण्ड्यान्दण्डयन् राजा दण्डयांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति नरक चैव गच्छति" इति मनुरमुमर्थं स्मरति। सापेक्षत्वे प्रमाणमावेदयति, 'तथाहि' इति, 'दर्शयति' अपरोक्षानुभवं जनयति

श्रुतिरितिशेषः। सा च श्रुतिः "ऋतं च सत्यं चाभीद्धात् तपसो ऽध्यजायत" इति मन्त्रवर्णः, अभीद्धं = तमो निरस्य ज्वलितं भोगजननयोग्यतावद् यत् तपः धर्म्मः पूर्व्वकृतशुभकर्म्मफलं तस्मात् तदपेक्ष्य 'ऋतम्' परिणामिसत्यं 'सत्यम्' अपरिणामिसत्यमेतद्द्वयं सम्मिलितम्—एतदुभयपर्य्याप्तैकसत्तावत्—ब्रह्म अध्यजायत सृष्ट्युन्मुखमभूत् इतितात्पर्यकः, सृष्टौ चिदचिदात्मकब्रह्मणः कर्म्मफलापेक्षित्वं दर्शयति। तप इति प्राधान्येन तत्कालोपयोगितया च निर्देशो मुख्यवृत्त्या धर्म्मं बोधयन्नपि अधर्म्मस्याप्युपलक्षकः योग्यत्वात्, 'कालः स्वभावो नियतिः' इति( श्वे०१।२ )मन्त्रवर्णान्तराच्च। नन्विदंपरतया मन्त्रार्थाभिधानं न भाष्यादिसम्मतमिति चेत्, किमेतावतोच्यते भाष्याननुगत्या वेदप्रामाण्यमिति ? नैवं, किन्तु महाजनापरिग्रहत्वमस्येति ब्रूमः। इति चेन्न, सर्वास्वेव श्रुतिस्मृतिषु यस्यार्थस्योपदेशः तस्य महाजनापरिग्रहत्वोक्तेः साहसमात्रत्वात्। सायणाचार्य्याद्यसम्मतत्वमित्युच्यते चेदोमिति ब्रूमः, न तु तेन प्रामाण्यहानिरिति बोध्यम्।२।१।३४।

अत्राक्षेपगर्भं तत्समाधानमाह—

न कर्म्माविभागादिति चेन्नानादित्वात् ।२।१।३५॥

'न' वैषम्यनैर्घृण्ये न—इति न, वैषम्यनैर्घृण्ये परमेश्वरे प्रसज्येते एवेत्यर्थः कुतः 'कर्म्माविभागात्' कर्म्मणोः साध्वसाधुनोः=धर्म्माधर्म्मयोः अविभागात् द्वयोरेवेश्वरकारितत्वेनाविशेषात्,

ईश्वरस्य जगत्कारणतायां सापेक्षत्वनिरपेक्षत्वाभ्यां विशेषाभावात्, श्रूयते हि "एष ह्येव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष एव तु असाधु कर्म्म कारयति तं यमधो निनीषते" ( कौ० ब्रा० ३।८ ) इति । अयं भावः, यदीश्वरस्य उन्निनीषया प्रवर्त्तितो जीवः साधु कर्म्म कुरुते तस्यैवाधोनिनीषया चासाधु कर्म्म, तदा ईश्वरस्य वैषम्यनैर्घृण्ये न परिहर्त्तुं शक्येते, जीवानां साध्वसाधु कर्म्ममूलभूतयोस्तदीयेच्छयोरेव वैषम्यनैर्घृण्यप्रभवत्वात्, जीवकर्म्मनिरपेक्षेश्वरकर्तृकसृष्टिस्वीकारे, यथा वैषम्यनैर्घृण्यप्रसक्तिः, तत्सापेक्षसृष्टावपि तथैव तद्दोषापतिहृत्तेः । 'इति चेत्' एवं यदि परैरुक्ष्यते तद्व्यासेधामः 'न' इति, नैष दोषः, तत्र हेतुः 'अनादित्वात्' कर्म्मप्रवाहस्येतिशेषः पूर्वकृतस्वकर्म्मणा यः उन्निनीषालक्षणायाः परमेश्वरस्य कृपायाः पात्रं, स तत् प्रवर्त्तितः साधु कर्म्म कुरुते 'पुण्यो वै पुण्येन कर्म्मणा भवति' इति श्रुतेः (बृ० ३।२।१३) यश्च पूर्वकृतस्वकर्म्मणा 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' इतिभगवद्गीतोक्तप्रकारनिजिघृक्षारूपायाः परमेश्वरस्याधोनिनीषायाः पात्रं स तत्प्रवर्त्तितोऽसाधु कर्म्म कुरुते 'पापः पापेन' इति ( बृ० ३।२।१३ ) श्रुतेः । एवम् परमेश्वरस्योन्निनीषाधोनिनीषयोरपि जीवकर्म्मापेक्षितत्वान्न तस्य वैषम्यनैर्घृण्यप्रसक्तिः । न चैवमनवस्थादोषः, प्रामाणिकत्वाद् बीजांकुरवदिति पुष्कलम् ।२।१।३५।

सृष्टेरनादित्वाभावेऽपि योग्यत्वापेक्षित्वेन परमेश्वरस्य वैषम्यनैर्घृण्याभावमुपपादयति—

( उपपत्त्यधिकरणम्—१४ । )

उपपद्यते चाप्युपलभ्यते च ।२।१।३६॥

आद्यश्चकारो वाकारार्थः यद्वा इति तस्य पर्यायशब्दः; अन्तिमश्चकारः समुच्चये । 'अपि' कर्म्मणोरविभागेऽपि,—'उपपद्यते' सापेक्षत्वं—योग्यतापेक्षत्वमुपपद्यते । अस्मिन् पक्षे योग्यता चाश्रयस्य स्वभावाख्य-शक्तिविशेषेण सम्पादिता—प्राक्तनधर्म्माधर्म्ममूला अनागतावस्थपरिणामनिमित्ता च । आश्रयः पुनरधिष्ठानमुपाधिश्च । अनागतावस्थपरिणामश्च "अस्यैव परिणामो भविष्यतीति" परमेश्वरज्ञानसहकृतानभिव्यक्ततत्परिणामरूपः, परिणामश्च गुणगुणस्य । चिदंशस्य परिणमनाभावेऽपि यथा परमेश्वरस्य न सर्वशक्तित्वव्याघातः, तथा गुणानां स्वीयाचिदंशरूपतया गुणपरिणामविशेषस्यावश्यम्भाविनो ज्ञातस्याप्यनिराकरणेऽपि न सर्वशक्तित्वव्याघातः, स्वस्वरूपाविरोधस्य शक्तित्वाभाव्यात् । एवं च सादिसृष्टिपक्षेऽपि योग्यतापेक्षा परमेश्वरस्योपपद्यते । महदाद्यचेतनांशसृष्टिः, अधिष्ठानभूतस्य मूलाचिदंशस्य स्वभावसाचिव्येन । प्रकृतेर्विषमपरिणामे सत्यपि क्षीयमाणस्य तामसावरणस्य तदनन्तरं वृत्तसर्गे लेशतः सत्त्वात् जागरणावसरे प्रत्यक्षायसम्भववत् व्यष्ट्युपाधौ लिङ्गशरीरेऽन्तःकरणे वा चिदंशस्य सम्यक् प्रतिबिम्बमहणासम्भवः, तेन वृत्ता-

णामन्तःसंज्ञत्वमधिष्ठानपरिणामसाचिव्येन परमेश्वरसृष्टम्, अनागतावस्थपरिणामोऽपि तत्र योग्यताकृतौ निविशते। चातुर्वर्ण्यसृष्टौ वैषम्यं तु—परमेश्वरस्य मुखबाहूरुपादस्थली-याधिष्ठानपरिणामभेदप्रयुक्तम्, अनागतावस्थपरिणामप्रयुक्तञ्च तयोस्तत्र योग्यतारूपत्वात्। न चैवं सृष्टेरनादित्वबाधिनी 'विष्णुस्मृतिव्याकुप्यते, यतः, एकस्य हिरण्यगर्भस्य दैवयुग-सहस्रद्वयेनैकमहोरात्रं तत्राहरवसाने प्रलयो रात्रिकाल-व्यापिनी तत् स्थितिः, षष्ट्यधिकत्रिशत्या तावत् परिमिता-वान्तरसृष्टिभिः प्रलयैश्चोपलक्षितो वत्सरः ईदृशवत्सरशतं तस्यायुः तत्कालव्यापिनी एका सृष्टिः प्रथमसारभ्यान्तिम-पर्यन्तं तदीयजीवकर्म्मफलसम्बद्धा ततो महाप्रलयः, ततः पुनः सृष्टिरेवमनाद्यनन्तप्रवाहः; न तु तासां सृष्टीनामेकजीव-सम्बन्धः, सर्वजीवमुक्त्या समं हिरण्यगर्भस्य विलयात्। पुनः सृष्टौ जीवान्तराविर्भावः। अथ कथमेतद्व्यवस्थेति चेदुच्यते अचितः प्रदेशविशेषे साम्यावस्था हि तत्रत्यः प्रलयः, सा च द्विधा निःसंस्कारा ससंस्कारा च, अचितो यस्मिन् प्रदेशे 'इह विषमपरिणामः पुनर्न भविष्यति' इत्याकारकपरमेश्वर-ज्ञानविषयत्वं तत्रत्या साम्यावस्था निःसंस्कारा, अचितो यस्मिन् प्रदेशे 'इह विषमः परिणामः पुनर्भविष्यति' इति परमे-श्वरज्ञानविषयत्वं तत्रत्या च ससंस्कारा। एकस्यां सृष्टा-वचिदंशे एकस्मिन्नेव प्रदेशे विषमपरिणामोऽहरन्ते च सम-परिणाम इत्येवं पर्यायो ब्रह्मणः शताब्दीनियतः। ततो

महाप्रलयानन्तरं पुनः सृष्टिश्चाचितः प्रदेशान्तरे विषमपरिणामोपक्रमा समपरिणामावसाना च प्रागुक्तकालैव । इत्येवमनादिःसृष्टिप्रवाहोऽनन्तश्च । न चैवं पूर्वसृष्टिमुक्तजीवस्यानन्तर सृष्टावाविर्भावः स्यात्, इति वाच्यं तज्जीवोपाधेरन्तःकरणस्यात्यन्तलयेन निःसंस्कारसाम्यावस्थोपस्थितेः अनन्तरं प्रदेशान्तरे परिणामादौचणादिक्रमेण पुनः सृष्टौ पूर्वतनान्तःकरणरूपोपाध्यनाविर्भावेण पृथगुपाधिकचित्प्रतिबिम्बस्य मुक्तजीवादन्यत्वात् । ससंस्कारसाम्यावस्थायामन्तःकरणस्य नात्यन्तं लयः, मज्जनोन्मज्जनन्यायेनावरणप्रकाशवत्त्वात् । यः खलु सृष्ट्यभ्यन्तरे लब्धतत्त्वावबोधस्तस्य मुक्तिः,—तदुपाध्यन्तःकरणस्यात्यन्तं लयेन पुनरुद्भवाभावात् यतः कार्य्यस्य निःसंस्कारकारणावस्थैवात्यन्तलयत्वेन व्यपदिश्यते । 'इयमन्तःकरणव्यक्तिरपुनरुत्पत्तये कारणभावमापन्ना' इति, परमेश्वरज्ञानविषयत्वस्य फलतोऽत्र निःसंस्कारकारणावस्थारूपत्वात् । तस्मात् सादिसृष्टिपक्षेऽपि सापेक्षत्वमुपपद्यते । ननु अनागतावस्थस्य निमित्तत्वं नोपलब्धमित्याशङ्कायामाह 'उपलभ्यते च' लोकेऽपि उपलभ्यते दृश्यते, सुविज्ञो हि भिषगनागतावस्थरोगं पूर्वरूपलक्षणं निर्णीय यथा रोगयोग्यतापेक्षो रोगिणं भेषजादिसेवनाय प्रवर्त्तयति तद्वत् । शास्त्रे चोपलभ्यते—भविष्यत् सूर्य्यसंक्रमणेन पूर्ववर्त्तिनः कालविशेषस्य पुण्यत्वं भविष्यदुपरागे कालविशेषस्य भोजनानर्हत्वञ्च, यथा हि तत्र पूर्वमसत्यपि निमित्ते स्नानादिकार्य्यं प्रति कर्त्तु-

रतदपेक्षित्वं तथा चातुर्वर्ण्यादिसृष्टावपि भविष्यद्धर्म्माधर्म्मापेक्षित्वं परमेश्वरस्य। ततश्च कर्म्मविभागेऽपि न वैषम्यनैर्घृण्ययोः प्रसङ्गः। न चैवं कारुणिकत्वव्याघातः, उत्कृष्टतरोपाधिकानां जीवानां शुद्धज्ञानमुत्कृष्टोपाधिकानां च तरतमभावेन सुखातिरेकं निकृष्टोपाधिकानां तरतमभावेन दुःखमोहौ च वस्तुस्वभावादेवाकलयतः परमेश्वरस्य दुःखमोहनिराकरणोपायश्रुतिप्रवर्त्तनेन कारुणिकत्वसिद्धेः ।२।१।३६।

इदानीमिष्टापत्त्या प्रयोजनवत्त्ववैषम्यनैर्घृण्यानामदोषत्वमुपपादयति—

( सर्वधर्म्मोपपत्त्यधिकरणम्—१५ । )

## सर्वधर्म्मोपपत्तेश्च ।२।१।३७॥

सर्वेषां धर्म्माणां विरुद्धानामविरुद्धानां च चिदचिदात्मकत्वादीनां 'उपपत्तेः' युक्तत्वाच्च नायं दोषः, किं तर्हि लिङ्गमेव। अत एव 'न तस्य कार्य्यं करणं च विद्यते' इति 'कर्त्तारमीशम्' इति 'एकोऽवर्णो बहुधा शक्तियोगाद् वर्णाननेकान् निहितार्थो दधाति' इति 'साक्षी चेताः केवलो निर्गुणश्च' इति 'गुणी सर्वविद् यः' इति चैवमादिप्रकाराः अकर्तृत्वकर्तृत्ववर्णाभाववर्णगुणाभावगुणलक्षणविरुद्धधर्म्मप्रतिपादनपरा श्रुतयः, 'न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन। नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि।' 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः', इति 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' इति 'चित्त'

कृपा समरनिष्ठुरता च दृष्टा त्वय्येव' इत्येवमाद्याः स्तुवयो विरुद्धवत् प्रतीयमानानपि सर्वधर्म्मान् ब्रह्मण्युपपादयन्ति चिदचिदुभयात्मकत्वादंशविशेषे एकविधास्तद्विरुद्धाश्चापरांशे, न तु उभयत्वावच्छेदेनैरयसकृदवोचाम। प्रयोजनं वैषम्यं च गुणधर्म्मे, निष्प्रयोजनकत्वं साम्यं च चितः; निष्करुणत्वं चिदचिदुभयत्वावच्छेदेन, चिन्मात्रावच्छेदेन च, गुणसामान्याभावात्, अचिदंशे रजस्तमोऽवच्छेदेन वा; सकरुणत्वं च, तमोऽनभिभूतरजोनुविद्धसत्त्वावच्छेदेनेति ब्रह्मण्यदूषणमेतत्त्रयम्। अत एवोक्तं गीतायाम् 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति। इत्येवं निरस्ताः प्रत्युपस्थिताः परेषामाक्षेपाः प्रसाधितश्च सादिसृष्टिपक्षः।

अथ वैषम्यनैर्घृण्ये इत्यादिसूत्रचतुष्टयवर्णकान्तरम्।— वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति। सुखिनो दुःखिनश्च सृजतः, परमेश्वरस्य वैषम्यं दुःखातिरेकं कस्मैचिदर्पयतश्च नैर्घृण्यं नैष्ठुर्य्यञ्च प्रसज्येते, इत्ययं जगतश्चेतनकर्तृकत्वापवादः, तं निरस्यति 'न' इति। नास्ति वैषम्यनैर्घृण्ययोः प्रसङ्गः, कुतः सापेक्षत्वात्, वैषम्यं नैष्ठुर्यं च किञ्चिदपेक्षं भवति तस्मादन्यस्य चेतनस्याभावे, कमपेक्ष्य कं प्रति वैषम्यं कं प्रति च नैष्ठुर्यं सम्भवेत, तथाहि दर्शयति—'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बभूव।' 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न

लिप्यते लोकदुःखेन बाह्यः' इति (का० २ अ० ३) 'तत् त्वमसि' इत्यादिरूपेण चात्मन एकत्वं दर्शयति, श्रुतिः प्रकाशयति। अत्राशङ्क्य समाधत्ते,—न कर्म्माविभागादितिचेन्नानादित्वात्। 'अविभागात्' विभागो भेदः, तदभावात् आत्मन एकत्वात् 'न कर्म्म' 'साधु कर्म्म कारयति तम्, यमुन्निनीषते' इत्यादिश्रुत्युपदर्शितं कर्म्म नोपपद्यते, प्रयोज्यप्रयोजककर्त्तृभेदाश्रितः कर्म्मभेदो न युज्यते इत्यर्थः। 'इति चेत्,' यद्येवमुच्येत, तत् 'न' न युक्तम्, अनादित्वात्, अनिर्णीतप्रथमव्यवहर्त्तृकलोकपरम्परासिद्धत्वात्। अविभागस्य वास्तवत्वेऽपि गगनस्य नीलिमादिवद् विभागस्य लोकव्यवहारसिद्धतया तद्वचनात् 'असूर्य्य एव सूर्य्ये शेते' इत्यादिवत्।

यथोक्तमुपपादयति—उपपद्यते चाप्युपलभ्यते च। अत्र-पद्ये नेदमधिकरणान्तरम्।

लोकदृष्ट्या वैषम्यनैर्घृण्ययोः सतोरपि वास्तवस्तदभावः 'उपपद्यते' लोकस्य भ्रमप्रवणत्वात्; परमेश्वरस्य च भ्रमविरहेण स्वरूपदर्शित्वात्,—प्रतिबिम्बभूता हि जीवाः, सुखदुःखभोगस्तु तत्र कल्पितः, दर्पणप्रतिबिम्बिते मुखे दर्पणमलिनिमादिवत्, प्रतिबिम्बानां वास्तवस्वरूपे बिम्बभूतपरमेश्वरे तदभावात्, वैषम्यनैर्घृण्ययोः प्रसक्तिर्मिथ्यैवेत्युपपद्यते। कुहकिनां क्रीडाविशेषेषु उपलभ्यते च। यथा क्रीडाभूमिमध्यगतैः प्रेक्ष्यते—निहन्यते कुहकिना कश्चित् करवालाघातेनेति तस्य चैवं दन्तुरत्वं मन्यमानैर्नैर्घृण्यं कल्प्यते मन्दमतिभिः; न तु वास्तवं

तत्र हन्तृत्वं तद्वत्। अन्यत्राप्युपलभ्यते, यन्त्रपुत्तलिकानर्त्तकस्य सूत्रधारिणः, कयाचिद् दारुपुत्रिकया भूलुण्ठनादिप्रकारं दुःखाभिनयं कयाचिच्च पतिलाभसुखाभिनयञ्च दर्शयतो, यथा न वैषम्यं न वा नैर्घृण्यम्, तथा परमेश्वरे वैषम्यनैर्घृण्यसम्बन्धो नास्तीति। चकारद्वयं क्रिययोः प्राधान्यद्योतनाय। अपिकारश्चावधारणार्थः, उपपद्यत इत्यनेनान्वितः।

चिदचिद्ब्रह्मवादे विशेषमुपदर्शयन् इष्टापत्त्या परेषामाक्षेपं परिहरति—सर्वधर्म्मोपपत्तेश्च।

'सर्वेषाम्' = वैषम्यनैर्घृण्यसमदर्शनकारुणिकत्वादीनां विरुद्धाविरुद्धसकलधर्म्माणाम्, उपपत्तेः, ब्रह्मणि अबाधितवृत्तेः, चिदचिदात्मकब्रह्मणि सगुणत्वनिर्गुणत्वादिविरुद्धधर्म्माणामवच्छेदकभेदेन वृक्षे कपिसंयोगतदभाववत् अबाधितवृत्तेः; प्रागुक्तयुक्त्यैव तत्र वैषम्यतदभावादीनामपि वृत्तेरबाधितत्वात्। श्रूयते हि 'सर्वं खल्विदं ब्रह्म' 'सर्वकर्म्मा' ( ३।१४।१,२ ) इति च। स्मर्य्यते च गीतायाम् 'ये चैव सात्त्विका भावा राजसास्तामसाश्च ये। मत्त एवेति तान् विद्धि न त्वहं तेषु, ते मयि।' ( ७ अ० १२। ) वैषम्यं राजसो भावः, नैर्घृण्यं तामसः, समदर्शनं साधुषु करुणा च सात्त्विकः। अत्र भावभेदे विशेषस्तु श्रुतिस्मृतिभ्यामुपदर्शितः। 'असन्नेव स भवति असद् ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः।' इति श्रुतिः, स्मर्य्यते च 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति एवं सप्रयोजनत्वनिष्प्रयोजनत्वादीनि

धर्म्मान्तराण्युन्नेयानि । अत एवोक्तं सप्तशत्यां 'या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनाम्' इति । 'सैव काले महामारी सैव सृष्टिर्भवत्यजा' इति च । प्रथमवर्णकेन समानार्थमपि भङ्गीविशेषादरेण वर्णकान्तरमध्ये निवेशितमिदमितिविवेकः ।

अनादिसृष्ट्यभ्युपगमपक्षे 'न कर्म्माविभागात्' इत्यादिसूत्रत्रयस्य प्राचीनसम्मतं व्याख्यानन्तु,—

प्राक्सृष्टेः 'अविभागात्' जीवानां पृथग्भावेनासत्त्वात्, अन्तःकरणस्य तद्घटितलिङ्गशरीरस्य वा उपाधिभूतस्यानुत्पत्त्या प्रतिबिम्बासम्भवादिति भावः, 'न कर्म्म' न धर्म्माधर्म्मौ, आश्रयाभावादिति तात्पर्य्यम्, तदानीं योग्यत्वप्रयोजकधर्म्माधर्म्माभावे किमपेक्षयेश्वरस्य सृष्टौ वैषम्यादिकं स्यादिति पूर्वपक्षे 'इति चेत्' उच्यते—'न' नैवद्युक्तमित्यादिनोत्तरमाह 'अनादित्वात्' प्रवाहरूपायाः सृष्टेः सृष्ट्यन्तराव्यवहितप्रागभावशून्यत्वात् । तत्र मानसृष्ट्यारम्भदशायामपि तत्र पूर्वसृष्टिसम्भूतधर्म्माधर्म्मयो सत्वेन तदपेक्षस्य परमेश्वरस्य सृष्टिवैषम्यम् । एतदुपपादनायाह उपपद्यते चाप्युपलभ्यते चेति । उपपद्यते च सृष्टेरनादित्वम् । आदिमत्त्वे हि सृष्टेराकस्मिकत्वे धर्म्माधर्म्मौ विनापि सृष्ट्यभ्युपगमे मुक्तस्यापि जीवस्य संसारित्वापत्तिः, तदीयान्तःकरणवद्भोग्यानामाकस्मिकसृष्टौ बाधकाभावात् । न चानादित्वपक्षेऽप्ययं दोषो दुष्परिहरः, मुक्तजीवस्याप्युपाधेः कारणात्मनावस्थानात् इति वाच्यं तत्त्वज्ञानावच्छेदकोपाधेर्धर्म्माधर्म्माभावेनात्यन्तनिरुद्धतया पुनरुद्भवाभावात् । तथा

च चकारोऽवधारणार्थः । उपपद्यत एवेति । अनादित्वपक्षेऽनुपपत्तेराशङ्कैव नास्तीति भावः सृष्टेरनादित्वं न केवलमुपपद्यते, अपितु उपलभ्यते च, श्रुतिस्मृत्योरवगम्यते च । तथा च 'यथा पूर्वमकल्पयत्' इति ( ऋ० १० मं० ) मन्त्रवर्णः, इति 'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा' (गी०) इति 'चतुर्युगसहस्रं कल्पः स च पितामहस्याह: तावती चास्य रात्रिः, एवंविधेनाहोरात्रेण मासवर्षगणनया सर्वस्यैव ब्रह्मणो वर्षशतमायुः ब्रह्मायुषा च परिच्छिन्नः पौरुषो दिवसः तावत्येव निशा । तस्यान्ते महाकल्पः । पौरुषाणामहोरात्राणामतीतानां सख्यैव नास्ति न च भविष्याणाम्' इति विष्णुसंहिता च । एवंजातीयाः स्मृतयश्च सृष्टेरनादित्वे प्रमाणम् । अत्रायिकारः पूर्वस्मादुत्तरस्योत्कर्ष द्योतक. । तस्मात् सृष्टेरनादित्वेऽपि बीजांकुरवत् प्रामाणिकीयमनवस्था न दोपायेति भावः । उपसंहरति—सर्वधर्म्मोपपत्तेश्चेति यस्य यस्य धर्म्मस्य ज्ञानादेः सद्भावे सर्वकारणत्वं युज्यते ते सर्वे धर्म्माः ब्रह्मण्युपपद्यन्ते, न तु प्रधानपरमाण्वादौ, तस्माद् ब्रह्मैव जगतः कारणमिति सचेपः ।२।१।३७।

इति ब्रह्मसूत्रशक्तिभाष्ये विरोधपरिहाराख्ये द्वितीयाध्याये स्मृत्यादिविरोधनिरासो नाम प्रथम. पादः ।

---

## द्वितीयेऽध्याये—द्वितीयः पादः।

प्रस्तुतवेदान्तसिद्धान्तस्य संस्थापनाय तर्कमात्रावष्टम्भेन स्वमतात्तेपिपरमतजातनिरासार्थोऽयं द्वितीयः पादः। ननु तर्काप्रतिष्ठानादिविवदतां सूत्रकृतां परमतनिरासाय कथं तर्कमात्रावष्टम्भो युज्यत इति चेन्नैष दोषः, तर्काप्रतिष्ठानोपपादनार्थत्वादस्य पादस्य। स्वोपस्थापितेन तर्केण परकीय-निर्मूल-तर्कप्रतिष्ठाया निराक्रियमाणत्वात्। तत्र बहुस्मृतिपरिगृहीततया मतान्तरादभ्यर्हितं सांख्यमतमादौ निरस्यते—ननु निरस्तपूर्वस्यास्य मतस्य किं पुनर्निरासेनेति चेत् न श्रुत्यनुगमप्रकारनिरासेन तन्मतस्यानुपादेयतोपपादनं पूर्वमन्यार्थः। इह तु तर्केण तन्मतस्यायुक्तत्वोपपादनमिति विशेषेण पौनरुक्त्याशङ्काया असम्भवात्, केवलतर्केण मतान्तरनिरासे सांख्यमतस्य चानिरासे तस्य तत्रायोग्यत्वमिति मन्दधियां भ्रमनिरासार्थत्वाच्च, तत्रैतदादिमं सूत्रम्।

( रचनानुपपत्त्यधिकरणम्—१। )

### रचनानुपपत्तेश्च नानुमानम् ।२।२।१॥

'अनुमानम्' अनुमानविशेषः, सांख्यस्मृतिरित्यर्थः स्मृतेः श्रुत्यनुमापकत्वादनुमानसंज्ञेत्युक्तमधस्तात्। एतेन 'आगमो वेदशास्त्राणि तर्कशास्त्राणि चागमः' इति शान्तिपर्वोक्त्यन्वयो परेषामभिमानोऽपि निराकृतः। 'न' न युक्तम्। तत्र

हेतुः, रचनानुपपत्तेरिति। तथाहि चिदात्मकाः पुरुषा असंख्याः, एका च त्रिगुणा सुखदुःखमोहस्वभावा प्रकृतिरचेतना पुरुषभोगार्थं बुद्धयपरपर्यायमहदादिक्रमेण जगदाकारतया स्वयमेव परिणमते न पुनरपेक्षते चेतनं कर्त्तारम्, एवं च जगद्रचनेयमचेतनमात्रजन्या, जगच्च सुखदुःखमोहात्मकं तद्यथैकैव मत्तकाशिनी पत्युः प्रेयसी सुखरूपा, सपत्नीनां दुःखरूपा, कामुकपुरुषान्तरस्य मोहरूपा चेति तथा सर्वमेव वस्तुजातं सुखदुःखमोहात्मकत्वं नातिवर्त्तते। नच वस्तूनां सुखदुःखमोहानां हेतुत्वमनुभूयते नतु तदात्मकत्वं सुखादयः खल्वन्तःकरणधर्म्माः मत्तकाशिन्यादीनि च वस्तूनि बाह्यानीति स्वरूपभेदादिति वाच्यम्—तद्धेतुत्वस्यैव तदात्मकत्वानुमानात्, यद्यदनात्मकम्, तत्, न खलु तद्धेतुर्भवति, यथा मृदनात्मकं हेम न मृन्मयघटादिहेतुर्भवति। अतएव स्रक्सुखं चन्दनसुखमिति वैजात्यं प्रतीयते, इति सांख्यसिद्धान्तः। तस्यायुक्तत्वे रचनानुपपत्तेरिति हेतुरुक्तः, तदर्थश्च—रचनायाः सृष्टेरुपपत्त्यभावात्। कनीयस्यपि लौकिकी रचना घटपटादिगोचरा चेतनकर्त्तृका दृश्यते, कथमसौ लोकबुद्धयगम्या महीयसी जगत्सृष्टिश्चेतनं कर्त्तारमन्तरेणोपपद्येत। न चेदमेवान्तरं चेतनाचेतनरूपजनकभेदमुपपादयति, प्रत्यक्षगम्यत्वे चेतनकर्त्तृकत्वं तदभावे चाचेतनमात्रजन्यत्वमितिवाच्यं—प्रत्यक्षदृष्टान्तेन कार्य्यत्वेन हेतुना चेतनकर्त्तृकत्वस्य कार्य्यसामान्ये सिद्धेः प्रत्यक्षगम्यत्वाभावस्य प्रमाणत्वाभावेन हेता-

चेतनमात्रजन्यत्वस्य सिद्ध्यसम्भवात् मूलप्रकृतिपुरुषयोरचेतनजन्यत्वापत्तेश्च। न च दृष्टं कण्टकतैक्ष्ण्यमचेतनस्वभावजन्यमिति लपितुं शक्यम्, अचेतनस्वभावजन्यत्वस्य दृश्यत्वाभावात्, कण्टकतैक्ष्ण्यं तु दृश्यत एव, तच यथा चित्कर्तृकं सामान्यतस्तदुपपादितमधस्तात्। चकारोऽनुक्तं हेत्वन्तरं सूचयति, तथ, महदादिकं जगत् सुखदुःखमोहात्मकप्रकृतिकारणकं सुखदुःखमोहात्मकत्वादित्यनुमाने हेतोः पक्षावृत्तित्वम्। सुखदुःखमोहानामन्तःकरणधर्म्मत्वात् पक्षान्तर्गतबाह्यवस्तुष्ववृत्तेः, ननूपपादितमेव बाह्यवस्तूनामपि तदात्मकत्वम् इति चेन्न घटादिषु तोर्दण्डादेर्घटाद्यात्मकत्वविरहेण प्रदर्शितहेतोर्व्यभिचारात् तदात्मकत्वासिद्धेः ।२।२।१।

ननु रचना हि जनकतानिरूपिता जन्यता, चेतनाधिष्ठानमृते अचेतननिष्ठजनकतायाः प्रसिद्धौ जन्यतायां तन्निरूपितत्वानुपपत्तिरूपा जन्यतानुपपत्तिः प्रसिध्येत जनकत्वाप्रसिद्धौ च रचनानुपपत्तिरूपहेतोरप्रसिद्धिरिति स्वमतमनुसृत्य हेत्वन्तरमाह—

प्रवृत्तेश्च ।२।२।२।।

मा भूत् तथाविधजन्यत्वानुपपत्तिप्रसिद्धिः सांख्यसिद्धान्तभूता मूलप्रकृतेर्जनकता यदसिद्धा स एव दोषो दुष्परिहरो जागर्त्ति, तामुपपादयति प्रवृत्तेश्चेति। यद्वा जन्यतानिरूपकजनकत्वानुपपत्तेरित्यस्य रचनानुपपत्तेरित्यनेन विवक्षणमभिप्रेत्य तामनुपपत्तिं घटयति प्रवृत्तेश्चेति। प्रवृत्तेरनुपपत्तेरित्यर्थः।

चकारो रचनानुपपत्तेरिति समासोत्तरपदस्यानुपपत्तेरित्यस्यानुकर्षार्थः। 'प्रवृत्तिः' साम्यावस्थापन्नगुणत्रयात्मिकायाः प्रकृतेः साम्यप्रच्युतिहेतुराद्यक्रिया—यदधीना सर्वाः कार्य्यजनकता; चेतनाधिष्ठानमन्तरेण सैव,—नोत्पत्तुमर्हति, क्रियायाः कार्य्यत्वेन कार्य्यसामान्यं प्रति चेतनस्य च कर्त्तृत्वेन, विना तदधिष्ठानमचेतनायाः प्रकृतेर्नि रुक्तप्रवृत्त्यनुपपत्त रतुमानं न युज्यते इति पूर्वेणान्वीयते अर्थस्तूक्त एव ।२।२।२।

अत्राक्षेपमुपन्यस्य समाधत्ते—

## पयोऽम्बुवच्चेत् तत्रापि ।२।२।३॥

चेतनाधिष्ठानमन्तरेणापि अचेतनं 'पयः' क्षीरं यथा वत्सविवृद्ध्यर्थं प्रवर्तते, यथा वा अचेतनम् 'अम्बु' उदकं लोकोपकाराय प्रवर्त्तते, वाष्पभावमपहाय मेघाकारेण परिणमते ततश्च वर्षरूपेण भूतले पतति, नदी च स्यन्दते, तथा अचेतना प्रकृतिः पुरुषभोगार्थं चेतनाधिष्ठानं विना साम्यप्रच्युतिहेतुप्रवृत्तियुता भवतीति 'चेत्' यद्युच्यते 'तत्रापि' पयोऽम्बुनोः प्रवृत्तावपि चेतनाधिष्ठानमस्तीति शेषः। कार्य्यत्वेन तत्र चेतनकर्त्तृकत्वानुमानात्। नन्वनुमानमिदमसमञ्जसम्, प्रत्यक्षबाधाद् वह्निरनुष्णः कृतकत्वादित्यादिवदिति चेन्न, चेतनकर्त्तृकत्वस्य तत्राप्रत्यक्षत्वेऽपि वह्निरनुष्ण इत्यादाविव प्रत्यक्षतो बाधाप्रदेशानुमितेरप्रतिबन्धात् 'यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः' इति श्रुतेरस्मदनुमाने प्रतिष्ठारूपत्वाच्च ।२।२।३।

ननु यथा 'शरदि पुष्पन्ति सप्तच्छदा.' नतु ऋत्वन्तरे, तथैव सर्गकालीना प्रकृतिप्रवृत्तिः साम्यप्रच्युतिहेतुःक्रिया न कालान्तरीयेत्याशङ्कायामाह—

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ।२।२।४॥

साम्यावस्थायामित्यादिः 'व्यतिरेकानवस्थितेः' व्यतिरेकेण = प्रकृतिपुरुषव्यतिरेकेण प्रकृतिपुरुषभिन्नतया, अनवस्थितेः = अवस्थानाभावात्—कस्यापि वस्तुनः अस्तित्वाभावात्, प्रवृत्त्यनुपपत्तेरितिशेष. । एतेनैतदुक्तं भवति, शरदादिविविधखण्डकालान्तरस्य सत्तया कालविशेषप्रयुक्ता सप्तच्छदपुष्पप्रवृत्तिरुपपद्यते, साम्यावस्थायां तादृशकालादेरसत्त्वात् किं प्रयुक्ता साम्यप्रच्युतिः प्रकृतेर्भविष्यति ? तस्मात् तदनुपपत्तिरिति । ननु प्रकृतेगु णत्रयरूपत्वाद् गुणविशेषप्रयुक्ता पुरुषप्रयुक्ता वा प्रवृत्तिर्भविष्यतीति शङ्कायामाह 'चानपेक्षत्वात्' अनपेक्षत्वाच्चेत्यन्वयः, अनपेक्षत्वं कादाचित्कप्रवृत्तिजनकसहकारिकारणसमवधानम्—अपेक्षा, तद्वत्त्वाभावः अनपेक्षत्वम्, तस्मात् । गुणानां स्वरूपानतिरेकेण सहकारित्वासम्भवात्, साम्यप्रच्युतिरूपप्रवृत्तेः सातत्यप्रसङ्गाच्च गुणानां सदातनत्वात्, नापि पुरुषापेक्षित्वम्, पुरुषस्यौदासीन्येन प्रवृत्तिं निवृत्तिं वा प्रत्यहेतुत्वात्, पुरुषाणां सदातनत्वेन पूर्वदोषानुद्धाराच्च । तस्मात् कादाचित्कप्रवृत्त्यनुपपत्तेर्जनकत्वानुपपत्तौ रचनानुपपत्तिर्वा भवति ।२।२।४।

ननु चेतनानधिष्ठिताया अपि प्रकृतेः प्रवृत्तिः स्वाभाविक्येव तृणादिवत्, यथा चेतनानधिष्ठितं तृणादिकं धेन्वा भुक्तं क्षीरीभवति न वशया नानडुहा वा, किञ्च, यदैव धेन्वा भुज्यते न तदैव क्षीरीभवति किन्तु कालान्तरे, इति चेतनानधिष्ठिततृणपत्रादेः क्षीरीभावस्वाभाव्यं न सार्वत्रिकं नवा सार्वदिकमपि-तु क्वाचित्कं कादाचित्कञ्च, एवं प्रकृतेः प्रवृत्तिस्वाभाव्यमपि क्वाचित्कं कादाचित्कंच तेन साम्यावस्थायां न तदुत्पत्तिरित्यत्राह—

अन्यत्राभावान्न तृणादिवत् ।२।२।५॥

'अन्यत्र' चेतनाधिष्ठानादन्यत्र 'अभावात्' क्षीरीभावस्याभावात्, 'तृणादिवत्' तृणादेरिव 'न' चेतनानधिष्ठितस्य प्रकृतेः प्रवृत्तिरिति शेषः । एतदुक्तं भवति, तृणादिकं चेतनानधिष्ठितं न क्षीरीभावमापद्यते, किंतर्हि धेन्वादिना चेतनविशेषेण भोजनादिनाधिष्ठितं, यदि चेतनानधिष्ठितस्य तृणादिकस्य क्षीरीभावस्वाभाव्यम्, क्षेत्रे वा स्तम्बादौ वा तत् क्षीरीभावमापद्येत, न चापद्यते, तेन दृष्टान्तेन प्रकृतेश्चेतनाधिष्ठानमन्तरेण प्रवृत्तिर्न संस्थापयितुं शक्यते, प्रत्युत शक्यते चेतनाधिष्ठानेनैवेति ।२।२।५।

ननु कार्यजनके जडे चेतनाधिष्ठानं नाम 'कार्यमदः सम्पादयेयमित्यभिसन्धिमतः सम्बन्ध.' सच तृणादौ नास्ति नहि धेनुः क्षीरमदं सम्पादयेयमित्यभिसदधाना तृणादिकमभ्य-

वहरति । तस्मात् चेतनानधिष्ठितस्यैव तृणादेः क्वाचित्कः कादाचित्कश्च क्षीरीभावः स्वाभाविकः, तथा प्रकृतेरपि चेतनानधिष्ठितायाः क्वाचित्कः कादाचित्कश्च साम्यावस्थाप्रच्युतिप्रवृत्तिलक्षणः परिणामः स्वाभाविकः इत्याक्षेपमभ्युपगम्योत्तरयति—

अभ्युपगमेऽप्यर्थाभावात् ।२।२।६॥

'अभ्युपगमेऽपि'—क्वाचित्कस्य कादाचित्कस्य च साम्यावस्थाप्रच्युतिप्रवृत्तिलक्षणस्य परिणामस्य प्रकृतौ स्वीकारेऽपि, 'अर्थाभावात्' अर्थस्य प्रयोजनस्याभावप्रसङ्गात्; अर्थो भोगः कैवल्यम्, तदुभयं वा, स च पौरुषश्चेत् आद्यो नोपपद्यते, पुरुषस्य असङ्गत्वात् निर्गुणत्वाच्च, न द्वितीयः, तस्य स्वाभाविकत्वेनार्थत्वाभावात्, अत एव न तृतीयः। यदि प्रकृतेः; अचेतनत्वादेव न भोगः, गुणत्रयात्मकतया न कैवल्यम्। पुरुषरूपत्वस्तुमत्वाच्च पारिभाषिककैवल्यं तु न तराम्, अत एव नोभयम्। अर्थत्वमपि नोपपद्यते पुरुषस्य निर्गुणत्वेनेच्छाविषयत्वरूपस्य तस्य पुरुषसम्बन्धित्वाभावात् अचेतनायाः प्रकृतेर्ज्ञानासम्भवेन तदपेक्षाया इच्छाया असम्भवात् नार्थत्वं कुत्रापि सम्भवति। न चेच्छाया रजःपरिणामतया प्रकृतिवृत्तित्वं तस्य सुवचमिति वाच्यं चिदुज्ज्वलितनिश्चयात्मकसात्त्विकवृत्तिविशेषसम्बन्धं विना तदनुदयेन चित्सम्बन्धरहितायाः जडायाः प्रकृतेरर्थत्वनिर्धारकेच्छाया असम्भवात्। नापि स्वाभाविकधर्मोऽर्थ-

मुद्दिश्य घटते—जलस्य स्वाभाविकी निम्नाभिमुखता न खलु कञ्चिदर्थमभिसन्धाय भवति। ननु माभूदभिसन्धिरचेतनस्य, स्वाभाविकनिम्नाभिमुख्येन जलेन निम्नक्षेत्रसेचनात् शस्योत्पत्तिलक्षणोऽर्थो यथा सिध्यति, प्रकृतिस्वभावभूतपरिणामेन तथैव तदनभिसंहितोऽप्यर्थः सेत्स्यति। तस्यार्थत्वं च इच्छाविषयतावच्छेदकरूपवत्त्वेन, इच्छा तु बुद्धिनिष्ठा ग्राह्या, भोगोऽपि तत्रैव वास्तवः, पुरुषे स्वाभिमानिकः, कैवल्यं च पुरुषस्य वास्तवमप्यविवेकधियानाविर्भूतया कण्ठचामीकरन्यायेन तिरोहितं विवेकसाक्षात्कारेण प्रकाश्यते, तत्प्रकाशमानकैवल्यं तावदर्थः, दुःखाभावत्वेन इच्छाविषयतावच्छेदकतद्धर्मवत्त्वात् स्वरूपयोग्यत्वेनेति चेन्न प्रकृतेरेकत्वेन तत्परिणामस्य सर्वान् प्रत्यविशेषाद् भोगवैचित्र्यानुपपत्तिः, बुद्धिभेदादिति चेत् स एव कुतः, अनागतावस्थपुरुषार्थनामकादृष्टभेदात्, इति-चेत्, सोऽपि कथम् ? कर्म्मभेदाच्चेत्, आद्यसृष्टेः पूर्वं कर्म्मासत्त्वादयुक्तं यं परम्परेति न वक्तव्यम् सृष्टेरनादित्वात्। अथ प्रकृतेः साम्यदशायां बुद्ध्याद्यसत्त्वेनादृष्टस्याप्यसत्त्वात् कथं बुद्धिभेदः, न ह्यदृष्टं पुरुषस्य प्रकृतेर्वा धर्मः; पुरुषस्य निर्गुणत्वात् प्रकृतेश्चैक्येन सर्वान् प्रत्यविशेषाच्च न बुद्धिभेदजननासम्भवात् इति चेन्न यस्य पुरुषस्य या बुद्धिः पूर्वसृष्टावासीत् तत्रैव तदानीन्तनादृष्टमवस्थित प्रकृतौ तददृष्टवत्त्येव तद्बुद्धिर्विलीना उत्तरसृष्टौ प्रकृतेराविर्भवन्ती तमेव पुरुषमाश्रयति यथा 'धेनुसहस्रेषु वत्सो विन्दति मातरम्' इति न्यायात्। ननु

भवत्येवम्, बुद्धिभेदस्याविर्भावस्तु कथम् ? इति चेत्, प्रकृति-स्वभावादित्युक्तम्, इत्येवं प्राप्तेऽपि तदेवोत्तरम्, अर्थाभावादिति, 'अर्थस्य' पुरुषार्थस्य मोक्षस्य 'अभावात्' अभावप्रसङ्गात्, मुक्तस्यापि प्रलीनबुद्धेः पुनराविर्भावेण बन्धप्रसङ्गात्। यावन्मुक्तिर्नासात् तावद्बुद्धेरप्याविर्भावे प्रकृतिस्वभावस्य हेतुत्वे स्वभावस्य यावद् द्रव्यभावितया मुक्तदशायामपि तद्बुद्ध्याविर्भावस्य वारयितुमशक्यत्वात्, न च तादृशबुद्ध्याविर्भावेऽपि प्रकृत्या येन सयोगेन पुरुषो बध्यते तदभावादेव मुक्तस्य न बन्धः सम्भवतीति वाच्यम्। बन्धहेतुप्रकृतिपुरुषसंयोगस्याविवेकज्ञानेन, तस्य च बुद्ध्या जननेन बुद्ध्याविर्भावे तज्ज्ञानस्याप्रत्याख्येयतया बन्धहेतुसंयोगस्य दुर्वारत्वात् नच मुक्तपुरुषबुद्धौ विवेकसाक्षात्कारोत्पत्त्या सप्राविवेकज्ञानस्य बीजनाशात् न तद्वृत्तिकबुद्ध्याविर्भाव इति वाच्यम्, पूर्वकल्पमुक्तस्य भाविमुक्तिकस्य च पुरुषस्य साम्यावस्थापन्नप्रकृतिलीनबुद्ध्योः कारणरूपेणैकतया तत्र च मुक्तबुद्ध्यन्तर्भावेण विवेकसाक्षात्कारस्य, भाविमुक्तिकपुरुषबुद्ध्यन्तर्भावेणाविवेकज्ञानस्य च कारणात्मनि सामानाधिकरण्यस्याभ्युपेतव्यत्वात्, अन्यथा भाविमुक्तिकस्य तदानीमेव मुक्तत्वप्रसङ्गात्। नच मुक्तस्य बुद्धिविलयो भाविमुक्तिकस्य च तद्विलयो न तुल्यः, प्रथम खलु बीजनाशादनागतावस्थारहितो द्वितीयश्च सबीजतया तत्सहित। तेन प्रथमान्तर्भावेण कारणात्मनि विवेकसाक्षात्कारसामानाधिकरण्यमविवेकज्ञाने न सम्भवति,

न वा निर्बीजस्य पुनराविर्भाव' इति वाच्यं सत्कार्य्यवादे-निरन्वयध्वंसानुपगमेन अतीतावस्थस्यापि कारणात्मना स्थितेर-भ्युपगन्तव्यतया विवेकाविवेकज्ञानयोः सामानाधिकरण्य-सम्भवात्। सङ्क्षेपेण निर्बीजस्यापि कदाचित् सबीजतया तदा-विर्भावस्वभावस्य प्रकृवावनपायाच्च। चिदचिदात्मकब्रह्मका-रणतावादिनामस्माकन्तु 'अपुनराविर्भावाय कारणावस्थामिय' प्राप्ता' इति परमेश्वरज्ञानविषयतया बुद्धेरत्यन्तविलयात् मुक्तस्य प्राक्तनबुद्धिसंयोगासम्भव इत्यवधेयम् ।२।२।६।

अथ बुद्ध्यादिसर्गरूपं परिणामं प्रधानस्य न स्वाभाविक-माचक्ष्महे किंतु तत्तत्पुरुषसन्निकर्षविशेषकृतम्। मुक्त-पुरुषेण तादृशसन्निकर्षाभावान्न तदीयबुद्ध्याद्याविर्भावेण बन्धो घटते, न चैव जगतोऽचेतनमात्रजन्यत्वप्रतिज्ञाहानि-रिति शङ्कनीयम्, पुरुषस्य प्रवृत्त्यभावात् प्रधानप्रवृत्त्यन्यथा-सिद्धत्वाच्च जनकत्वविरहात्। इतिचेत्, न; यतः, पुरुषस्य प्रवृत्त्यभावे तत्सन्निकर्षप्रयुक्ता प्रधानस्य प्रवृत्तिरसिद्धेति शङ्कां दृष्टान्तमुखेन परिहृत्य तदीयसिद्धान्तं दूषयति—

पुरुषाश्मवत्तथापि ।२।२।७।

यथाहि पङ्गु 'पुरुष' स्वयमप्रवर्त्तमानोऽपि स्कन्धारोहणा-त्मकसन्निकर्षवानन्ध' प्रवर्त्तयति, प्रवृत्तिरत्र गतिरूपा अन्ध-स्यैव न पङ्गो'। यथा वा 'अश्मा' अयस्कान्त-मणिः, स्वयमप्र-वर्त्तमानोऽपि सन्निकर्षविशेषेण अयः प्रवर्त्तयति, तद्वत् स्वयम-

प्रवर्तमानोऽपि पुरुषः प्रकृत्या सन्निकृष्टः तां प्रवर्त्तयति, अत्र सन्निकर्षः संयोगविशेषः 'इति चेत्', इति यदुच्यते—तत्रोत्तरं 'तथापि'—दोषो नापनेतुं शक्यत इति शेषः। पुरुषस्य प्रवर्त्तकत्वे स्वतन्त्रस्याचेतनस्य प्रवृत्तिरित्यभ्युपगमः कथं न हीयेत ? कथं वा सर्वथा निःसङ्गो निर्व्यापारः पुरुषः प्रधानं प्रवर्त्तयेत् ? पङ्गुः स्वस्कन्धं वागादिव्यापारेण प्रवर्त्तयति नैवमस्ति पुरुषस्य कश्चिद्व्यापारो येन प्रधानं प्रवर्त्तयेत्। अयस्कान्तमणिरिव निर्व्यापारोऽपि पुरुषः सन्निधिमात्रेणायस इव प्रधानस्य प्रवर्त्तकः स्यात्, न स्यात्; व्यापिनो नित्यस्य पुरुषस्य सन्निधिः व्यापिनि नित्ये प्रधाने नित्य एवेति प्रलयस्य मोक्षस्य चानुपपत्तेः, बुद्ध्यादिसर्गहेतुसातत्यात्, संयोगवैलक्षण्यमत्र सन्निधिरिति चेत्, तस्योपपादयितुमशक्यत्वात्। इतीदं दोषजातं न निवारयितुं शक्यते।२।२।७।

ननु पङ्गुः पुरुषो यथा दृक्छक्तिहीनसम्मिलितः तदीयगत्या स्वयं गमनवानिव भवति यथा वा अयस्कान्तमणिर्विनैव क्रियामदूरस्थमचेतनमयः समाकर्षन् क्रियावानिव भवति, तथैव गुणक्रियाहीनोऽपि पुरुषो दृक्छक्तिरहितस्याचेतनस्य प्रधानस्य गुणक्रियाभ्या सगुण इव सक्रिय इव च भवति, इत्यंश एवायं दृष्टान्तो, न तु सम्बन्धांशे। दृष्टान्तदार्ष्टान्तिकयोः कथञ्चित् साधर्म्यमपेक्ष्यते, न तु तयोः सर्वतः साधर्म्यम्। तथा च पङ्ग्वन्धस्कन्धारोहण पङ्ग्वन्धयोः सम्बन्धः, समीपस्थितिरयस्कान्तायसोः सम्बन्धः, अत्र तु प्रधानतत्कार्य्येषु पुरुषस्यात्मत्वबुद्धि-

रेव सम्बन्धः, एतेनैव सम्बन्धेन पुरुषः निर्गुणो निष्क्रियोऽपि सगुण इव सक्रिय इव च भवति। इदं चाभेदज्ञानं तमसा सर्वतः प्रतिरुद्धवृत्तिकं प्रलयाय कल्पते, पुनरुद्बुद्धे चाभेदज्ञाने सृष्टिः, भेदसाक्षात्कारेण समूलमपास्ते च तस्मिन् मोक्षः, मुक्तस्याभेदज्ञानासम्भवेन न बन्धापत्तिः, न च कारणावस्थायां प्रकृतौ प्रलयदशायां मुक्तभाविमुक्तिकपुरुषबुद्ध्योः सङ्करेण भेदसाक्षात्काराभेदज्ञानयोरपि तद्रूपापन्नयोः सङ्करात् मुक्तपुरुषबुद्धेरपि—भाविमुक्तिकपुरुषबुद्धिवत् पुनः सृष्ट्यावुद्भवसम्भवेन मुक्तस्य बन्धापत्तिरुक्तैवेति वाच्यम् कारणरूपेण सङ्करेपि कार्यरूपेण मुक्तपुरुषबुद्धेरुद्भवाभावात्। न चैतेन निरन्वयध्वंसो भवति भवतामत्यन्तविलयवत् कारणात्मना तस्यावस्थानात्। इत्यतो दूषणान्तरमाह—

## अङ्गित्वानुपपत्तेश्च ।२।२।८॥

गुणवैषम्याज्जगत्सृष्टिर्भवति, वैषम्ये च गुणानां, कस्यचिद्गुणस्य अङ्गित्वं प्रधानत्वमभ्युपगन्तव्यं तस्यानुपपत्तेः, साम्यावस्थापन्नत्रैगुण्यस्यैव प्रकृतित्वात् न खलु तादृश्या प्रकृत्या जगत् स्रष्टुं शक्यते,—गुणवैषम्याभ्युपगमे च स्वरूपनाशः प्रकृतेः प्रसज्येत। स्वरूपनाशे च सृष्ट्यनुपपत्तिः ।२।२।८।

ननु महदादिकं सुखदुःखमोहात्मकद्रव्योपादानकम् जन्यत्वे सति सुखदुःखमोहात्मकत्वात् यन्नैवं तन्नैवं यथापुरुषः, इत्यनुमितेः प्रधानविषयकत्वे, सर्गारम्भकाले गुणवैषम्येऽपि न

प्रधानस्य स्वरूपनाशः, सुखदुःखमोहात्मकत्वेन तत्स्वरूपावधारणात्, तस्य च तदानीमपि नाशाभावात्। इत्याशङ्कां क्रोडीकृत्य तत्परिहारेण सांख्यमतं दूषयति—

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ।२।२।९॥

'अन्यथा' साम्यशरीरे साम्यावस्थेत्यनुपादाय 'अनुमितौ' सुखदुःखमोहात्मकद्रव्योपादानकत्वानुमितौ, चकारः प्रागुक्तदोषपरिहारसूचनार्थः, 'ज्ञशक्तिवियोगात्'=ज्ञा चिद्रूपा या शक्तिः तस्या वियोगात्, अनुमितिविधेयकोटावसम्बन्धात् 'रचनानुपपत्तेः अनुमानं न युक्तमिति'पूर्वेण सम्बन्धः। नित्यसवक्षचिदचिदुभयपर्याप्तसत्तावदुपादानकमित्यनुमितिरेव श्रुत्यनुगता साधीयसी सुखदुःखमोहात्मकद्रव्यत्वेनोपादानत्वस्यासिद्धत्वादित्यर्थः ।२।२।८।

उपसंहरति—

## विप्रतिषेधाच्चासमञ्जसम् ।२।२।१०॥

'विप्रतिषेधः'—विरुद्धः प्रतिषेधो विशिष्टः प्रतिषेधश्च, तत्राद्यः स्वाभ्युपगमविरोधः, द्वितीय ईश्वरप्रतिषेधः, विप्रतिषेधशब्दप्रतिपाद्यत्वमाश्रित्यैकवचनप्रयोगः। अचिन्मात्रजन्यः सर्ग इति स्वाभ्युपगमः, "पुरुषस्य दर्शनार्थम् कैवल्यार्थम् तथा प्रधानस्य पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति चेतनस्यापि जनकत्वं वदद्भिरात्मार्यैर्व्याहृतः। न चानेन चेतनस्य यथा न जन-

कत्वं तथोपपादितमेवेति वाच्यम्। 'उभयोः संयोगस्तत्कृतः सर्गः' इत्याचार्य्यवाक्यादुभयोरविशेषेण गृहीतयोः सम्बन्धस्य सृष्टिजनकत्वे निर्णीते तत्सम्बन्धाश्रयस्यान्यतरस्य प्रधानस्य यदि कारणत्वं स्यात्, कथं नाम तादृशस्यैव पुरुषस्य तत्रान्यथासिद्धत्वं स्थापयितुं युज्येत। दृश्यते च लोके दण्डचक्रयोः सम्बन्धविशेषकृतायां घटोत्पत्तौ दण्डं चक्रञ्चेति द्वयमेव कारणम्। न च अनभिसन्दधानस्य चेतनस्य सम्बन्धविशेषद्वारा यदि जनकत्वं स्याद् अस्तु, तत्र नास्ति सांख्यानां विप्रतिपत्तिः, अचेतनमात्रकारणकार्यं सृष्टा तावदबुद्धिपूर्वकत्वम् इत्यस्य हि सांख्यसिद्धान्तस्य नास्त्येव तेन व्याघातः इतिवाच्यम्, पङ्ग्वन्धवदिति दृष्टान्तेन पुरुषकर्तृकप्रधानदर्शनस्य च फलतया कीर्त्तनेन तत्र बुद्धिपूर्वकत्वस्य प्राप्तेरभ्युपगमप्रतिषेधस्य दुर्वारत्वात्, किञ्च महाभारते शान्तिपर्वणि दशाधिकत्रिशततमाध्याये "योगानां परमं ज्ञानं सांख्यानां तु विशेषतः" इत्युपक्रम्य याज्ञवल्क्यवचनं "शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च। श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम्। वाक् च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च। एते विशेषा राजेन्द्र" इत्यादिकमस्ति। अस्य व्याख्यानं कृतपूर्वं तत्र प्रतिपादितं च ये षोडशविकारास्त एव विशेषाः, यदि वा नीलकण्ठव्याख्यानं प्रमाणीक्रियते शब्दादयः पञ्च विषयाः वागादीनि पञ्चकर्म्मेन्द्रियाणि चेति दश विशेषाः, एतेषां विशेषत्वं सांख्यसम्मततयाभ्युपेतव्यम्। तस्य प्रतिषेधः, पञ्चशिखाचार्य्यपरम्परायां या पठ्यते

'तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः। एते स्मृता विशेषाः' इति कारिका, तथा पञ्चस्थूलभूतव्यतिरिक्तेषु 'विशेष'-संज्ञाया व्यावर्त्तनात्। एवं पञ्चतन्मात्राणां ग्रहणाग्रहणादिकं प्रागुक्तं चास्मिन्नुदाहरणं स्मर्त्तव्यम्। विरुद्धः प्रतिषेधश्च 'ईश्वरप्रतिषेधः' तस्य विरुद्धत्वम् प्रतियोगिसिद्ध्यसिद्धिभ्यां व्याहतत्वात्। समानतन्त्रपातञ्जलविरुद्धत्वाद् वा। तस्मात् अनवधार्य्यसिद्धान्तकतया असमञ्जसम् असङ्गतं सांख्यदर्शनमितिशेषः। नन्वेवमौपनिषददर्शनमप्यसमञ्जसं स्यात् शैववैष्णवादिभेदेन मिथो विरुद्धार्थकतया अनवधार्य्यसिद्धान्तकत्वादितिचेन्न, चिरन्तनाधिकारिभेदप्रतिनियतार्थकश्रुतिमूलकत्वेन तत्तत्परम्परासु सिद्धान्तावधारणात्। न चैवं सांख्यसिद्धान्तस्यापि तथात्वं कल्पनीयम्, साङ्ख्यानामीश्वरानपेक्षित्वादवैदिकत्वाच्च।२।२।१०।

अचेतनकारणतावादिष्वभ्यर्हितः प्रधानकारणतावादो निराकृत इदानीं परमाणुकारणतावादो निराकरणीयः, यतोऽसावसत्कार्य्यत्वाद्प्रतिपादकोऽचेतनमात्रकारणतां न प्रतिपादयति, अपि त्वीश्वरकर्त्तृकतामपीति न प्रधानकारणतावादनिराकरणप्रकारेण तन्निराकरणं घटते।

तद्वादिनो हि वैशेषिकाः जगतो ब्रह्मोपादानकत्वपक्षमाचिपन्ति, तथा ह्युपादानकारणं नाम समवायिकारणं, ब्रह्मणि जगत्समवायिकारणत्वं न युज्यते अवयवद्रव्यस्यैव द्रव्यसमवायिकारणत्वान्न च ब्रह्म जगतोऽवयवः, तथात्वे जगतो ब्रह्मपरि-

माणजातीयोत्कृष्टपरिमाणकत्वं प्रसज्येत, अवयवपरिमाणजातीयोत्कृष्टपरिमाणस्यावयविनि नियमात्, नहि तत्प्रसिद्धिः, जगतश्चेतनस्त्रापत्तिश्च अवयवगुणानामवयविनि सजातीयगुणारम्भकत्वनियमात् तन्तुशुक्लरूपस्य पटशुक्लरूपारम्भकत्वात्, अन्यथा रक्ततन्तुभ्योऽपि शुक्लपटः स्यात्। इत्येतदाक्षेपद्वयमेकोक्त्या प्रथमं निराचष्टे—

( महद्दीर्घाधिकरणम्—२। )

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ।२।२।११॥

यथा ह्रस्वाद् द्व्यणुकात्, महद् दीर्घं च त्र्यणुकादिकं जायते, परिमण्डलात् परमाणोः ह्रस्वमणु च द्व्यणुकं जायते, अत्र ह्रस्वमणु चेत्यनुक्तस्य वाकारेण समुच्चयात्। इत्यक्षरार्थः।

\ एतेनैतदुक्तं भवति द्व्यणुकोऽवयवस्त्र्यणुकादिकमवयवि, किंतु द्व्यणुकपरिमाणसजातीयोत्कृष्टपरिमाणवन्न तद् भवति, द्व्यणुकेऽणुपरिमाणं तज्जातीयोत्कृष्टपरिमाणं च पारिमाण्डल्यं तत् परमाणौ वर्त्तते न तु महत्त्ववति त्र्यणुकादौ, द्व्यणुकस्यावयवः परमाणुः, परमाणुपरिमाणजातीयोत्कृष्टपरिमाणाप्रसिद्धिश्चेति—भवतामवयविन्यवयवपरिमाणसजातीयोत्कृष्टपरिमाणकत्वमित्येवं नियमव्याघातः। तथा च ब्रह्मणो जगदवयवत्वेऽपि तदवयविनो जगतोऽपकृष्टपरिमाणकत्वं न व्याहन्यते। इति प्रथमाक्षेपोद्धारः। एतेन समवायिकारणसमवेतगुणानां कार्य्ये स्वसजातीयगुणान्तरजनकत्व-

नियमाद् ब्रह्मोपादानकत्वे जगतोऽभ्युपगम्यमाने जगदपि चेतनं स्यादित्याक्षेपोऽपि परिहृतः। त्र्यणुकादौ द्व्यणुकपरिमाणरूपगुणस्य स्वसजातीयगुणानारम्भकत्वाद् द्व्यणुके परमाणुपरिमाणलक्षणपारिमाण्डल्यस्य स्वसजातीयोत्कृष्टगुणाप्रसिद्ध्या च नियमस्य व्यभिचारात्। पारिमाण्डल्यं परमाणुपरिमाणम्, द्व्यणुकस्याणुत्वेऽपि न तत्र पारिमाण्डल्यमिति वाचस्पतिमिश्राः। यदि तु पारिमाण्डल्यशब्दस्य द्व्यणुकपरिमाणसाधारणार्थकत्वमत्रेष्यते, तदा सूत्रार्थस्तु ह्रस्वाद् द्व्यणुकाद् दीर्घस्य त्र्यणुकादेः, परिमण्डलात् = अणोः—परमाणोः द्व्यणुकाच्च, महतस्त्र्यणुकादेरिव अपरिच्छिन्नाच्चेतनाच्च ब्रह्मणः परिच्छिन्नमचेतनञ्च जगदुत्पद्यते इति। अत्र पक्षे वाकारः शङ्किताक्षेपपक्षव्यवच्छेदार्थः। एतेन कारणगुणस्य कार्ये स्वसजातीयगुणारम्भकत्वमिति नियमेऽपि व्यभिचारप्रदर्शनेन द्वितीयाक्षेपोद्धारश्च। इदं च षट् परमाणवो वा त्रीणि द्व्यणुकानि वा द्व्यणुकद्वयसहितपरमाणुद्वयं वा त्र्यणुकमारभन्ते इति मतभेदाभिप्रायेण। सूत्रे महद्दीर्घवद् वेति दृष्टान्तद्वयप्रदर्शनञ्च आक्षेपद्वयोद्धारसूचनाय। परिमण्डलं च ह्रस्वं चेति द्वन्द्वविग्रहेऽल्पाच्तरतया ह्रस्वशब्दस्य पूर्वनिपातेऽपि महदण्वोः ह्रस्वदीर्घयोश्च वैपरीत्यस्य प्रसिद्धेर्विग्रहवाक्यस्थपदक्रममादाय व्याख्येयम्। यद्यप्येकेन दृष्टान्तेन आक्षेपद्वयोद्धारः सम्भवति तथापि आक्षेपस्य सूत्रकृद्भिः स्पष्टमनभिधानात् आक्षेपद्वयमेको वाक्षेपः इति संशये आक्षेपद्वयस्यैव शङ्काया निर्णायकमिङ्गित-

दृष्टान्तद्वयोपन्यासः, जिज्ञासूनां प्रतिपत्तिसौकर्य्याय। यद्यपि चिदचिद्ब्रह्मवादे, जगतश्चिदचिद्रूपत्वमिष्यते तथापि, आरम्भमतानुप्रवेशेनैव दूषणमिदमुपन्यस्तमिति ध्येयम्।

अथ परमाणुकारणतावादः पूर्वोत्तरग्रन्थार्थवैशद्याय तन्निराकरणप्रकारसुखबोधार्थं सङ्क्षिप्योपन्यस्यते, तथाहि पृथिव्यप्तेजोवायवो नित्या अनित्याश्च, नित्याः परमाणुस्वरूपास्तेभ्यो द्व्यणुकादिक्रमेणोत्पद्यमानाः पृथिव्यादयोऽनित्याः। दृश्यते हि सूक्ष्मात् स्थूलस्योत्पत्तिः, यथा तन्त्वादिभ्यः पटादीनामंशुभ्यस्तन्तूनामेवं सूक्ष्मपर्य्याये चरमः परमाणुः यतः सूक्ष्मं नास्ति, निरवयवोऽयम्। भोगाद्दृष्टवज्जीवात्मसयोगात् परमाणौ कर्म्म, ततोऽसौ परमाण्वन्तरेण संयुज्य द्व्यणुकमारभते, द्व्यणुकमप्यणुपरिमाणम्। बहुभिर्द्व्यणुकैर्मिलितैस्त्र्यणुकादिकं महद्द्रव्यमारभ्यते। त्र्यणुकादिभिस्तु स्थूलद्रव्यक्रमेण कपालादिकं जन्यते,—ततश्च घटोत्पत्तिः। न तु परमाणुपुञ्जादेव; तथात्वे मुद्गरादिघातेन घटनाशानन्तरं किमपि चूर्णं प्रत्यक्षं न स्यादवयवभूतानां परमाणूनामतीन्द्रियत्वात्। त्र्यणुकनाशानन्तरं तदवयवानां द्व्यणुकानामप्यतीन्द्रियत्वेनाप्रत्यक्षत्वात् त्रिभिर्द्व्यणुकैरिव षड्भिः परमाणुभिरपि तदारम्भं केचित् प्राञ्चो मन्यन्ते, त्र्यणुकावयवाः सावयवा इत्यनुमानन्तु त्र्यणुकविशेषघटितसाध्यकम्। तन्मतमनङ्गीकुर्वता वाचस्पतिमिश्रपादादीनां मते द्व्यणुका एव त्र्यणुकावयवा नतु परमाणव, परमाणवः साक्षात् न स्थूलारम्भकाः परमाणुत्वे सति बहुत्वात्, घटोपगृ-

हीनपरमाणुवदिति न तेषामनुमानम् । एतेन जगदुत्पत्ति-र्व्याख्याता । आकाशादीनां तन्मते नित्यत्वादनुत्पत्तावपि संयोगविशेषेण जगतो घटकत्वमेव रीत्या परमाणूपादानकं जगत्, ईश्वरं कर्त्तारमन्तरेण न भवितुमर्हतीति उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वाद् भावकार्यसामान्यस्येति । यद्यपि समवायिकारणसमवेता विशेषगुणाः कार्ये स्वसजातीयविशेषगुणानारभन्ते इतिनियमाभ्युपगमे व्यभिचारविरहाद् द्वितीयाक्षेपानुद्धारः तथापि तदीयनियमव्यभिचारेण तदाक्षेपा-निरासेऽपि न विलक्षणत्वादिति सूत्रोक्तदिशा तन्निरासो निर्वा-धमुपपद्यते । प्रथमाक्षेपनिरासतात्पर्येण च सूत्रमिदमर्थवद् भवति । दृष्टान्तद्वयोपादानं तु, नियमस्य यथाश्रुतत्वानुसारे-णेति सुधीभिरालोचनीयम् ।२।२।११।

आक्षेपं निरस्य परमाणुकारणतावादं निराकरोति—

( परमाणुजगदकारणत्वाधिकरणम्—३ । )

उभयथापि न कर्मातस्तदभावः ।२।२।१२।

प्रलयकाले परस्परं विश्लिष्टाः परमाणवो निस्पन्दा वा परमाण्वन्तरसंयोगहेतुक्रियारहिता वा तिष्ठन्ति, प्रलया-वसाने वायवीयपरमाणौ तत्कर्म भवति येन परमाण्वन्तरेण संयुज्य द्व्यणुकमारभते इतिक्रमेण महावायुरुत्पद्यते, एव-मग्निरेवमाप एवं पृथिवीत्याचार्याः, वायुजसंयोगजनितेन कर्मणा चाग्न्यादिद्व्यणुकादिक्रमेण स्थूलमहाभूतप्रयो-

त्पत्तिरित्यन्ये। ततस्तच्छरीरं सेन्द्रियमित्येवं सर्वमिदं जगत् परमाणुभ्यो भवति। परमाणुवृत्तिरूपेभ्यो द्व्यणुकाद्यवयविक्रमेणान्त्यावयविपर्य्यन्तं रूपादीन्युत्पद्यन्ते इति वैशेषिकसमयः। अत्रोच्यते—

'उभयथा' कारणासत्त्वसत्त्वाभ्याम् 'कर्म्म' द्व्यणुकारम्भकसंयोगहेतुभूतमिति शेषः, 'न' सर्गादिकाले परमाणौ न सम्भवतीत्यर्थः। 'अतः' अस्मात् तादृशकर्म्मासम्भवाद् हेतोः, 'तस्य' परमाणो जगदुपादानत्वस्य 'अभावः' असम्भवः। अस्यायमाशयः परमाण्वोः संयोगसम्बन्धेन द्व्यणुकोत्पत्तिर्न भवति; द्रव्यारम्भे संयोगस्य कारणत्वात्, संयोगस्यापि कारणेन केनचित् कर्म्मणा भवितव्यम्, तस्यापि यदि कारणं किमपि न स्यात् तन्नोत्पद्येत, जन्यमात्रस्य कारणाधीनत्वात्। अथ कारणं स्यात् किं तद् वक्तव्यम्, प्रयत्नोऽभिघातो नोदनादिकं वा किञ्चित् दृष्टानुसारि कारणं तु नोपलभ्यते, शरीराभावान्न प्रयत्नः कथञ्चिज्जीवस्य सम्भवति, अभिघातादिकं च न भवितुमर्हति सर्वतः स्थूलद्रव्यस्य तदानीमनुत्पादात्। तस्मादुक्तं वैशेषिकसूत्रकृद्भिः, 'अग्नेरूद्‌र्ध्वज्वलनं वायोस्तिर्य्यग्गमनमणुमनसोश्चाद्यं कर्म्मादृष्टकारितानि' इति (५।२।१३।) अदृष्टकारितमपि कर्म्म न परमाणौ युज्यते, अदृष्टं हि जीवनिष्ठं स्वयमचेतनम्, शरीराद्यनुत्पत्तेर्जीवोऽप्यचेतनः, एवमचेतनवृत्तेः स्वयमचेतनस्यादृष्टस्य प्रलयदशायामपि स्थितत्वात् तदानीं न परमाणुकर्म्मजनकं

सर्गाद्यकाले च तज्जननमिति विशेषस्य कस्यचिदभावाच्च तत्, सर्गाद्यकाले परमाणौ कर्म्मणः कारणं, कारणाभावाच्च न कर्म्म। अथ सृष्टिप्रवृत्तस्येश्वरस्य सर्वज्ञस्य जीवादृष्टानां भोगजननोन्मुखतां कुर्वमानस्य प्रेरणया तत्कर्म्मानुकूलेच्छया सर्गाद्यकालेऽदृष्टं कर्म्म हेतुर्भवति इति चेत्, तत्राप्यदृष्टस्य जीववृत्तेरीश्वरप्रेरणयापि व्यधिकरणे कर्म्मणि हेतुता कथं स्यात्? अथ स्वसमवायिसंयोगसम्बन्धेनादृष्टपरमाणु-कर्म्मणोरस्ति सामानाधिकरण्यमिति चेत्, एतादृशपरम्परायाः संसर्गत्वे मानाभावेन सामानाधिकरण्यानुपपत्तितादवस्थ्यात्। २।२।१२।

एतादृशपरम्परायाः संसर्गत्वाभ्युपगमेऽपि दोषमुपदर्शयति—

समवायाभ्युपगमाच्च साम्यादनवस्थितेः। २।२।१३॥

समवायमभ्युपगम्य अदृष्टपरमाणुकर्म्मणोः सामानाधिकरण्यमुपपाद्यते भवता, तस्मात् समवायाभ्युपगमात् 'च' 'तदभावः' इति पूर्वसूत्रादनुकृष्यते चकारोऽनुकर्षद्योतकः, परमाणौ जगदुपादानत्वाभावः, 'साम्यात्' प्रलयकालसर्गाद्यकालयोः यथोक्तसम्बन्धेन परमाणौ अदृष्टसत्त्वे तुल्यत्वात्, 'अनवस्थितेः' अव्यवस्थितेः, सृष्टिकालप्रलयकालयोरव्यवस्थितत्व-प्रसङ्गात्। अदृष्टस्य प्रलयकालेऽपि स्वसमवायिसंयोग-सम्बन्धेन परमाणौ सत्त्वात् सदापि परमाण्वन्तरसंयोग-'

द्वेषेः कर्म्मेण उत्पत्त्या द्व्यणुकादिक्रमेण सृष्टिप्रसङ्गात्, इत्यर्थः ।२।२।१३।

ननु कथं प्रलये स्वसमवायिसंयोगसम्बन्धेनपरमाणावदृष्टस्य सत्त्वं येन कर्म्मोत्पत्तिराक्षिप्यते, कथं चेश्वरकर्त्तृकसृष्टिवादे तस्य सिसृक्षाया अपि सृष्टिहेतुत्वात् सर्गप्रलयकालयोः साम्यमिति शङ्काद्वयं निरस्यति—

## नित्यमेव च भावात् ।२।२।१४॥

समवायस्येति प्रकरणात्, ईश्वरेच्छायाश्च चकारेण ग्रहणात्—समवायस्य ईश्वरेच्छायाश्च 'नित्यमेव' सर्वदैव एवकारेण प्रतियोगिवैयधिकरण्यघटितव्यापकत्वनिरासेः व्याप्यवृत्तित्वबोधनाय, 'भावात्' सत्त्वात्। साम्यादिति पूर्वसूत्रस्थेनान्वयः। समवायस्य नित्यत्वेन सृष्टिप्रलयकालयोः, स्वसमवायिसंयोगस्याविशेषेण वर्त्तमानत्वात्। समवायस्यानित्यत्वे तु प्रलयकाले तदसत्त्वाभ्युपगमेन स्वसमवायिसंयोगसम्बन्धेनादृष्टस्य सृष्टिप्राक्क्षणे परमाणावृत्तितया कर्म्मोत्पत्त्यसम्भवेन द्व्यणुकारम्भाभावादित्याशयः। ईश्वरेच्छाया नित्यत्वेन प्रलयकालेऽपि तत्सत्त्वस्याभ्युपगन्तव्यतया कर्म्मोत्पत्त्या द्व्यणुकाद्युत्पत्तौ बाधकाभावादिति द्वितीयाशङ्कानिरासपक्षस्यार्थः ।२।२।१४।

नन्वीश्वरेच्छाया नित्यत्वेऽपि सृष्ट्याद्युपाधेरनित्यतया तत्तदुपाध्यवच्छिन्नेच्छाया अनित्यत्वमेव, श्रवणेन्द्रियादिवत्,

घटाकाशादिवद् वा, इत्येवं वैशेषिकाणां स्थापना तदैव स्याद् यदि समवायोऽभ्युपगम्येत, वस्तुतः स एवाभ्युपगन्तुं न शक्यत इत्याह—

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ।२।२।१५॥

'इहेदमिति यतः कार्य्यकारणयोः स समवायः' इति भवतां सूत्रकृदाह, पदार्थसंग्रहे प्रशस्तपादश्चायुतसिद्धानामाधार्य्याधारभूतानामिहेति प्रत्ययहेतुः सम्बन्धः समवाय इत्याह, तन्न युज्यते, शुक्लः पटः मधुरं जलं सुरभि चन्दनम् उष्णोऽग्निरिति प्रत्ययविषयाणां पटादीनां रूपादिमत्त्वात्, रूपरसगन्धस्पर्शसम्बन्धसत्त्वात् तस्मिन् सम्बन्धे 'विपर्ययः' इदमिहेतिप्रत्ययहेतुत्वाभावः, 'दर्शनात्' शुक्लः पट इत्यादिप्रयोगस्यैव लोके दृष्टत्वात् प्रसिद्धत्वात्,—पटे शुक्लः, जले मधुरः, चन्दने सुरभिः, अग्नावुष्ण इति प्रयोगस्यादर्शनादिति भावः, 'विपर्ययोदर्शनात्' इति 'विपर्ययः अदर्शनात्' इति पदद्वयस्य संहितरूपं वा । पटे शुक्ल इत्यादिप्रयोगस्यादर्शनादिति प्रागुक्त एवार्थः । एतेनैतदुक्तं भवति, शुक्लः पट इत्यादौ तादात्म्यसम्बन्धेन पटादौ शुक्लादेः प्रतीतिर्भवताप्यङ्गीकार्या तथा च सर्वत्रैवायुतसिद्धस्थले तादात्म्यमेव सम्बन्धोऽस्तु किमतिरिक्तेन समवायेन, न च गुणगुणिनोस्तादात्म्याभ्युपगमे, रूपं घट इत्यपि प्रयोगः स्यादिति वक्तव्यम्, यथा न्यायमते कृधातोर्यतधातोश्चैकार्थकत्वेऽपि घटं करोतीति प्रयोगवत् घटं यतते इत्यप्रयोगेण व्युत्पत्तिवै-

चिन्त्याभ्युपगमस्तथास्माभिरप्यभ्युपगमात् । न चैवं घटे रूपं रूपवान् घट इति प्रयोगो न स्यात्, तादात्म्यसम्बन्धस्य वृत्त्यनियामकत्वादन्यथा घटे घटः घटवान् घट इत्यपि स्यादिति वाच्यम् । भेदाभेदरूपत्वेनाभेदरूपत्वेन च तादात्म्यस्य द्वैविध्ये वृत्तिनियामकत्वतदभावयोरुपपत्तेः, यत्र भेदाभेदरूपं तादात्म्यं—यथा रूपस्य घटे, घटातिरिक्तवृत्तिषु रूपेषु घटस्य भेदाद् रूपस्य च घटे भेदाभावसत्त्वात् भेदाभेदात्मकं तादात्म्यं तत्र वृत्तिनियामकम्, यत्र भेदस्तत्राधेयत्वं यत्राभेदस्तत्राधिकरणत्वं च । स्वस्मिन् स्वस्य च कथमपि भेदाभावादभेद एव तादात्म्यं यथा घटस्य घटे, तत्र वृत्त्यनियामकम् । नन्वेवं शुक्लः पट इतिवद् घटो घट इति प्रयोगः स्यात्, न स्यात्; प्रयोगः खलु शाब्दबोधहेतुशब्दव्यवहारः, उद्देश्यविधेययोरैक्ये अभेदसम्बन्धेन शाब्दबोधानुपपत्त्या शाब्दप्रयोगस्याभावात् । घटरूपाद् घटस्याभेदस्तु तत्तद्गुणानां तत्तदाश्रयाव्यतिरेकात् । तथा च समवायनामकपदार्थान्तराभ्युपगमो व्यर्थः ।२।२।१५।

ननु गुणगुणिनोरभेद इति व्याहतम्, प्रकृतिप्रत्ययैर्नैवाभयोर्भेदप्रतीते ; शुक्लः पट इत्यादौ शुक्लादिगुणविशिष्टे शुक्लादिपदनिरूढलक्षणया सामानाधिकरण्येन प्रयोग., शुक्लादिशब्दस्य शक्त्या गुणपरत्वे तु साधुरेव पटस्य शुक्ल इत्यादि प्रयोगः, अत एव गुणे शुक्लादय. पुंसि गुणिलिङ्गास्तु तद्वतीति कोषकृतः । तत्र तादात्म्यस्य सम्बन्धत्वेऽपि, रूपवान् घट

इत्यादौ समवाय एव सम्बन्धः, घटे रूपमित्यादाविवात्रापि तुल्यवित्तिवेद्यतयेहेदमिति प्रत्ययस्य सत्त्वात् इहेदमिति प्रत्ययस्य च इदन्त्वावच्छिन्नत्वनिष्ठसांसर्गिकावच्छेदकतानिरूपकाधेयत्वसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नत्वेदन्त्वावच्छिन्नत्वातिरिक्तासम्बन्धानवच्छिन्नविषयतानिरूपितत्वैतदुभयसम्बन्धेन किञ्चित्सम्बन्धविशिष्टविषयताशालिप्रत्ययत्वेन प्रवेशात् घटे रूपं रूपवान् घट इति द्विविधस्य प्रत्ययस्य तद्रूपत्वात् तत्र सम्बन्धत्वेन विशेषणतया वद्धेतुत्वस्य समवायेऽक्षततयाऽनास्ति विपर्यय इत्यभ्युपगमेऽपि दोषान्तरमाह—

## उभयथा च दोषात् ।२।२।१६॥

'उभयथा' इहेदमिति प्रत्ययत्वेन, प्रदर्शितेन रूपवान् घटः घटे रूपमिति प्रत्ययद्वयसाधारणीकरूपेण वा, प्रत्ययग्रहणे 'दोषात्' अनवस्थाप्रसङ्गादिदोषात् 'दोषात्' इत्यनेन पूर्वसूत्रोक्तस्य 'विपर्ययः' इत्यस्यान्वयः। तस्य च पूर्वोक्त एवार्थः, चकारस्तस्यानुकर्षार्थः। समवायस्याप्रसिद्धेरिति भावः। एतेनैतदुक्तं भवति गुणक्रियादिविशिष्टप्रत्ययहेतुः सम्बन्धः समवाय इति लक्षणार्थः। विशिष्टप्रत्ययश्च द्विविधः गुणवद् द्रव्यम् इति गुणो द्रव्ये इति च, अनयोः प्रत्यययोः प्रकारद्वयेन समवायो भवितुमर्हति इहेदमिति प्रत्ययत्वेन, प्रागुक्तविषयताशालिप्रत्ययत्वेन च, रूपवान् घट इति प्रत्ययेऽपि इहेदमिति प्रत्ययत्वमङ्गीकुर्वतां प्रथमः कल्पः, तदनङ्गीकारे द्वितीयः कल्पः,

कल्पद्वयेऽपि यद्धेतुत्वं यत्र वास्तवं स न समवायः अनवस्था-दिदोषेण तस्यासिद्धेः तस्मात् समवायतया भवद्भिः कल्पिते पदार्थे तद्धेतुत्वाभावः । ननु कथमनवस्थादिदोषः, इति चेत्, गुणादिर्यथा पदार्थान्तरं भवन्मते समवायोऽपि तथा, इहेदमिति प्रत्ययो यथा द्रव्ये गुण इत्यादिरूपः, तथा द्रव्यादिषु समवाय इत्याकारकोऽपि भवति, तस्य हेतुः सम्बन्धान्तरं तस्यापि प्रत्ययहेतुत्वादन्य इत्यनवस्थाभयात् समवायस्य यदि स्वा-त्मक एव सम्बन्धः स्वीक्रियते किमपराद्धं गुणादिभिः येषां स्वात्मकः सम्बन्धो नाङ्गीक्रियते, स्वात्मकसम्बन्धश्च तेषां तादात्म्यं वा स्वरूपं वा भविष्यति । न च गुणादिरूपेण परिभा-षितानां न सम्बन्धत्वम्, गुणविशेषस्य संयोगस्य सम्बन्धत्वं भवतामेवङ्गवचनस्यायुक्तत्वात् । इत्येवं समवायखण्डनेन परमा-णोर्जगदुपादानत्ववादं समवायमभ्युपगम्य स्थापयतां वैशेषि-काणां मतं निरस्तम् ।२।२।१६।

प्रकारान्तरेण च तन्न निरस्यति ।

अपरिग्रहाच्चात्यन्तमनपेक्षा ।२।२।१७।

'अपरिग्रहात्' जगतः परमाणूपादानकत्ववादस्य मनु-व्यासादिरमहणात् 'अत्यन्तम्' प्रधानकारणत्ववादादधिकम्, 'अनपेक्षा' अनादरः। प्रधानस्य जगदुपादानत्ववादः कासु-चित् स्मृतिषु परिगृहीतः सत्कार्य्यवादश्चास्माकमपि सम्मतः। परमाणूपादानकत्ववादस्तु न केनचिदप्यन्येन परिगृहीतः, तस्मात् सांख्यमतापेक्षया निकृष्टतममेतद् वादस्थान एवात्यन्तं हेयत्व-

मिति सुष्ठूक्तमरयन्तमनपेचेति । नन्विदमयुक्तं 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्' इति श्वेताश्वतरश्रुतौ—"एतेन शिष्टापरिग्रहा अपि व्याख्याताः (२।१।१२)" इति सूत्रभाष्योद्धृते 'येभ्यः सृजति भूतानि काले भावप्रचोदितः महाभूतानि पञ्चेति तान्याहुर्भूतचिन्तकाः' इत्यादि व्यासस्मृति ( महाभा० शान्ति० २७२ ) वचने च परमाणुपादानकत्वयोस्तत्वेन कथमपरिगृहीतत्वं परमाणूपादानकत्ववादस्येति चेन्न भूतत्वेन नित्यभूतत्वेन वा जगत्कारणत्वस्योक्तावपि परमाणुत्वरूपेणोपादानताया वैशेषिकोक्ततत्प्रक्रियायाश्चानुक्त्या तद्वादस्यापरिग्रहत्वाभ्युपगमात्, न चैवं वैशेषिकस्य शिष्टापरिग्रहत्वं प्रसक्तमिति वाच्यं द्व्यणुकादिक्रमेण परमाणुभ्य उत्पत्तिप्रकारस्यान्यत्राकीर्तनेन—परमाणूपादानकत्वस्य गौतमकाणादादिसम्प्रदायेतरत्रानुक्त्या तद्वादविशेषस्यापरिग्रहत्वेऽपि वैशेषिकमतवादसामान्ये शिष्टापरिग्रहत्वाभावात्। पञ्चानां भूतानां नित्यतावादे नित्येषु तेषु कारणतावादे च शिष्टपरिगृहीतत्वस्य सत्त्वात्, आत्मनित्यत्वयोगधर्माधर्मादीनां च वैशेषिकोक्तानामपि सर्वसम्मतत्वात्। न चैवं बौद्धादिदर्शनानामपि शिष्टापरिग्रहत्वानुपपत्तिस्तदीयवादविशेषस्य शिष्टपरिगृहीतत्वादिति वाच्यं तदीयवादस्य शिष्टपरिग्रहत्वाभावात् चिरन्तनवादस्य तु—श्रुतिस्मृतिभ्यस्तैरेव ग्रहणम्। तदंशे शिष्टपरिग्रहोऽपि श्रुतिस्मृत्युक्तत्वेनैति विशेषो बोध्यः। यद्यपि वैशेषिकस्यापि देहवद्दिरिन्द्रियमनःस्वनात्मत्वात्मत्वज्ञाननिवर्तक-

मननद्वारा योगोपयोगितया तज्जनितात्मसाक्षात्कारेण मोक्ष-प्रयोजकत्वादस्त्यपेक्षा, तथापि श्रवणशुद्धिं विना योगप्रवृत्तस्य विपथालम्बनं प्रायेण भवेत्, अहङ्कारे महत्तत्त्वेऽचिदंशमात्रे चात्मत्वभ्रमसम्भवादित्येतदर्थं श्रवणशुद्धिमुपपादयद्भिर्भगवद्-बादरायणैः तस्यात्यन्तमनपेक्षेत्युक्तमिति दिक् । वस्तुतः, परि-गृह्यतेऽनेनेतिपरिग्रहः स्वमतसंस्थापकस्तर्कः तदभावादिति अप-रिग्रहादित्यस्यार्थः । 'अत्यन्तमनपेक्षा' एकान्तं निरवलम्बत्वम्, तेषामिति शेषः । ये हि श्रुतिजन्यमपि बोधं लौकिकं मन्यमानाः तर्काधीनमापद्यते, तर्कशरणानां तेषां मतस्य तर्कशून्यत्वे आकाशे प्रासादनिर्म्माणस्येव अलौककल्पनारूपत्वं न तु वास्तवाश्रया-भिमतत्वमेवञ्च सिकतासु प्रासादनिर्म्माणस्येव वा सद्यो निपातः। यद्वा, परिग्रहः मूलं 'परिग्रहः परिजने युक्त्यां स्वीकारमूलयोः'..' इतिमेदिनीकोषात् मूलम् आगमो वा तर्को वा, तर्कशास्त्रस्य तर्कमूलकत्वात् । अपरिग्रहात्—आगमाभावात् तर्काभावाच्च अत्यन्तमनपेक्षा अत्यन्तमनुपादेयता, अस्य परमाणूपादान-कजगद्वादिदर्शनस्येति शेषः । यतः 'धर्म्मविशेषप्रसूताद् गुणकर्म्मसामान्यविशेषसमवायानां साधर्म्यवैधर्म्याभ्यां तत्त्व-ज्ञानान्निःश्रेयसम्' इति वैशेषिकसूत्रम् नास्त्यत्र मूलम्। आगमो हि 'तमेव विदित्वातिमृत्युमेति' इत्याह । नापि तर्कः तथाहि—कथं तावदस्य साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानस्य निःश्रेयसोप-योगः, साक्षात् वा परम्परया वा ? नाद्यः, आत्मसाक्षात्कार-स्यैव तत्रोपयोगात्, अन्येषां तत्रानुपयोगात्, आत्मसाक्षा-

त्कारस्य साधर्म्यवैधर्म्यप्रकारकद्रव्यादिषट्पदार्थतत्त्वज्ञानानात्मकत्वाच्च। नापि द्वितीयः, विनापि तादृशतत्त्वज्ञानमात्मसाक्षात्कारे बाधाभावात्। अथात्मा आत्मेतरभिन्नः इत्याकारकानुमितौ षट्पदार्थज्ञानस्य साध्यविशेषणज्ञानकारणत्वादनुमितेश्च निदिध्यासनद्वारा साक्षात्कारप्रयोजकत्वेनास्यैव परम्परयोपयोग इतिचेन्न, द्रव्यत्वादिरूपेण तज्ज्ञानेनापि विशेषणज्ञानसम्भवेन साधर्म्यवैधर्म्याभ्यां तज्ज्ञानस्य निष्प्रयोजनकत्वात्, अभावस्य षट्पदार्थ्यन्तर्गततया आत्मेतरत्वेन तज्ज्ञानायोगाच्च। उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणीति सूत्रेणाश्वत्थादिपलाशानां शाखास्थितानां चलनस्यालाभाद् विभागव्याघातः, चलनगमनयोरेकत्वे पर्णं चलतीति स्थाने पर्णं गच्छतीति प्रयोगः प्रसज्येत। किञ्च, स्पन्दमात्रस्य गमनत्वे उद्देश्यतावच्छेदकेनाभेदः स्याद् उत्क्षेपणादिभिर्विभागश्च व्याकुप्येत, उत्क्षेपणत्वादीनां स्पन्दत्वव्याप्यत्वात्। शाब्दज्ञानस्यानुमितित्वमभ्युपगच्छतो मियोऽसमानाधिकरणज्ञातिद्वयावच्छिन्नज्ञानयोर्युगपदनुत्पत्तिं मानयतश्च वैशेषिकस्य शाब्दलिङ्गकतदन्यलिङ्गकसमूहालम्बनपरामर्शोत्तरं शाब्दस्य साध्यान्तरविषयकत्वापत्तिः। अनुमितित्वसामान्यवतः शाब्दस्य शब्दान्यलिङ्गकपरामर्शजन्यानुमितौ सद्योत्पत्त्या प्रतिबन्धकत्वकल्पने च गौरवम्। अपि च पदार्थमध्येऽभावमगणयतः 'आत्मकर्म्मसु मोक्षो व्याख्यातः' इतिसूत्रयतो वैशेषिकमते नैये मोक्षस्य अन्यभावत्वमापद्यते, तेन च मोक्षस्यानित्यत्वापत्तिः,

न चाभावस्याधिकरणरूपत्वाभ्युपगमेन मोक्षस्यात्मस्वरूपतया नानित्यत्वमिति वाच्यमात्मकर्म्मणो आत्मनोऽप्रवेशेनात्मकर्म्मत्वित्युक्तेर्व्याघातप्रसङ्गात् । मुक्तस्य जडत्वापत्तेश्च । तस्मात् सर्वथा निर्मूलमिदं दर्शनं न तरामपेक्षितव्यम् । एतेन बौद्धार्हतवादयोरपि मनुष्यासादिभिरपरिगृहीतत्स्वरूपदोषसर्वेमात्यन्तमनपेक्षायामपि पुनर्दूषणायोत्तरग्रन्थोपन्यासोऽयुक्त इति निरस्तम्, तेषां तर्करूपमूलस्य सत्त्वादिति केषाञ्चिद् भ्रमं निरसितुं तर्कदोषप्रदर्शनपरत्वेनोत्तरग्रन्थोपन्यासस्य युक्तत्वादिति संक्षेपः ।२।२।१७।

एवत्परमाणुजगत्कारणतावादनिरासप्रसङ्गेन, तद्बाह्यवैनाशिकमतं दृढतर्कमूलत्वेन प्रसिद्धमनन्तरमेव निरस्यति ।

( समुदायाधिकरणम्—४ । )

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ।२।२।१८।।

चत्वारः खलु बौद्धभेदाः, वैभाषिकः सौत्रान्तिको योगाचारो माध्यमिकश्चेति, तत्राद्यद्वितीययोः सर्वास्तित्ववादे तुल्येऽप्याद्यानां बाह्यार्थप्रत्यक्षं द्वितीयानां तदप्रत्यक्षेणानुमेयत्वमिति विशेषः, तृतीयस्य विज्ञानमात्रास्तित्ववादः चतुर्थस्य सर्वशून्यत्ववादः पदार्थानां सांवृतिकत्वात् । क्षणिकत्वं तु सर्वैरभ्युपगम्यते, शून्यवादे क्षणिकत्वं च सांवृतिकार्थानामिति विशेषः । वैभाषिका हि योग्यमर्थं प्रत्यक्षमेव मन्यन्ते, क्षणिकोऽप्यर्थः स्वसजातीयक्षणिकार्थं सप्रत्यक्षं जनयतीति ।

क्षणिकत्वादेवाप्रत्यक्षत्वमर्थानामिति सौत्रान्तिकाः, प्रत्यक्षं प्रति विषयस्य हेतुत्वात्, हेतोश्च पूर्वभावित्वनियमात्, क्षणिकस्य तस्य प्रत्यक्षदशायामसत्त्वेन च तत्कार्य्यभूततज्जातीयार्थविज्ञानप्रत्यक्षेणातीततदर्थानुमानम्,—इत्यनुमेयत्वं बाह्यार्थानामिति तेषामाशयः। योगाचाराश्च, विज्ञानमेव ज्ञेयाकारं मन्यन्ते, स्वाप्नप्रत्ययवत् जागरेऽपि न बाह्यार्थः कश्चन वर्त्तत इति। माध्यमिकाश्च सर्वशून्यत्ववादिनः। आकाशे गन्धर्व्वनगरमिव शून्य एव सांवृतिकं जगज्जननमभ्युपगच्छन्ति। अनादिश्च संवृतिः। भगवतो बुद्धस्यैकमेवापदेशमित्येवं प्रकारभेदेन गृह्णन्तश्चातुर्विध्यमभजन्। तत्र प्रथमद्वितीययोर्मतमादौ निराकुरुते—समुदाय उभयहेतुकेऽपि तदप्राप्तिरिति।

'उभयहेतुके' उभयम्=एकत्र मते प्रत्यक्षप्रमाणम् अन्यस्मिन् मते अनुमानञ्च तत्, हेतुः=ज्ञापकं ज्ञापकत्वेनाभिमतं यस्य, तस्मिन् 'समुदाये' बाह्यसमुदाये इत्यर्थः। वैभाषिकमते तस्य प्रत्यक्षप्रमाणकत्वात् सौत्रान्तिकमतेऽनुमानप्रमाणकत्वाच्चेति व्यवस्थितोभयहेतुकत्वं बोध्यम्। एतेन तयोर्मतयोर्ग्रहणम्। अपिकारेण बहिरस्य आन्तरस्य समुदायस्य लाभः। मतद्वयेऽपि उभयप्रकारे 'समुदाये' सङ्घाते 'तदप्राप्तिः' 'तयोः' प्रत्यक्षप्रमाणानुमानयोः, 'अप्राप्तिः' प्राप्तिः=फलेनाभिसम्बन्धः, अप्राप्तिः तदभावः, असिद्धिरित्यर्थः। तथा हि, भूतं भौतिकं चेत्यणुहेतुको बाह्यः समुदायः, पञ्चस्कन्धी च स्कन्धहेतुकश्चान्तरः समुदायः, अयमाध्यात्मिकतयापि व्यपदिश्यते। स्कन्धाश्च पञ्च,

रूप-विज्ञान-वेदना-संज्ञा-संस्कार-नामानः, तत्र सविषयाणीन्द्रियाणि रूपस्कन्धः, अहमित्याकारो रूपादिविषयो वा निर्विकल्पकप्रत्ययप्रवाहो विज्ञानस्कन्धः, चित्तस्य सुखं दुःखं तदुभयशून्यावस्था च वेदनास्कन्धः, देवदत्तः–दण्डी–पुरुषः–इत्याद्याकारकसविकल्पकप्रत्ययः संज्ञास्कन्धः, रागद्वेषादयः क्लेशाः मदमानादय उपक्लेशाः धर्म्माधर्म्मौ चेति संस्कारस्कन्धः। अस्य वैभाषिकसौत्रान्तिकाभिमतस्य समुदायद्वयस्यासिद्धिः। स्थिरस्य चेतनस्य संहन्तुरनभ्युपगमात्, प्रथमसमुदायहेतुभूतत्वेनोक्तानां समुदायित्वया प्रसिद्धानां तदवयवानामणुपर्य्यन्तानां द्वितीयसमुदायहेतुभूतानां समुदायिनां चेन्द्रियादीनां प्रत्येकमचेतनत्वाच्च। नहि चेतनानधिष्ठितैः समुदायिभिरणुपुञ्जलक्षणैस्तन्तुभिस्तादृशतन्तुसमुदायत्वेनाभिमतः पटः सम्पद्यते। नच चित्तमेव चेतनं तदधिष्ठानाद् द्वितीयसमुदायनिष्पत्तिः, द्वितीयसमुदायस्य चित्ताधिष्ठानेन चेतनतया तदधिष्ठानविशेषेण च प्रथमसमुदायनिष्पत्तिरिति वाच्यम् चित्तस्य चेतनस्वाभाव्यविरहेण समुदायसिद्ध्यधीनचेतनस्वाभ्युपगमे परस्पराश्रयप्रसङ्गात्। चेतनस्वाभाव्याभ्युपगमे सुषुप्तिप्रबोधयोरविशेषस्वापत्तेः स्कन्धभेदाभ्युपगमस्य वैयर्थ्याच्च। तस्मादेतन्मतयोः समुदायासिद्धिरिति पर्य्यवसन्नम् ।२।२।१८।

तेषां समुदायसाधनाशङ्कां क्रोडीकृत्य तन्निरासकं सूत्रमाह—

## इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ।२।२।१९॥

यौ द्वौ समुदायावुक्तौ तयोः कार्य्यत्वम् इत्यादिः, 'उपपन्नम्' युक्तम्, कार्य्यत्वोपपत्तौ तयोरप्राप्त्यापत्तिः परिहृता वेदितव्या । तत्र हेतुः, 'इतरेतरप्रत्ययत्वात्' अविद्यादीनां समुदायद्वयान्तर्गतानां परस्परकारणकत्वात्, परस्परापेक्षत्वाद् वा । अविद्या हि क्षणिकेषु स्थिरत्वबुद्धिः दुःखे सुखबुद्धिः बाह्यसमुदाये देहादौ आत्मत्वबुद्ध्यादिरूपा, इयं विज्ञानस्कन्धान्तर्गता सत. संस्कारः रागद्वेषधर्म्माधर्म्मादिरूपः, तदादिक्रमाद् गर्भस्थकललबुद्बुदादिरूपेण देहेन्द्रियादिनिष्पत्तिरित्यादिप्रकारेण सम्मिलितपञ्चस्कन्धीलक्षण आन्तरः समुदायो यथाऽविद्यादिकारणकस्तथा धर्म्माधर्म्मात्मकसंस्कारहेतुकाणुक्रियाजनितस्थूलभूतभौतिकरूप बाह्यसमुदायोऽपि । अनादिश्चायं समुदायद्वयप्रवाहः । इति चेतनानपेक्षमपि समुदायद्वयं पुष्पफलादिन्यायेन सिध्यति, नहि पुष्पमुद्गच्छद् जानीते अहमुत्पद्य इति मामुकस्मादिति वा फलं निर्वर्त्तयिष्यामीति वा तथाप्यचेतनादेव पुष्पात् फलमचेतनमेव भवति तद्वत् । इत्येवं समुदायद्वयं नाप्रसिद्धम् इति पूर्वपक्षे समाधानमाह 'न' इत्यादिना अविद्यादेरुत्तरोत्तरं प्रति कारणत्वेऽपि समुदायं प्रत्यर्थसमाजमस्तया कारणत्वाभावात् समुदायतया कार्य्यत्वविरहेण न समुदायद्वयस्य, सिद्धिरित्याह उत्पत्तिमात्रेत्यादिना । 'उत्पत्तिमा-

त्रनिमित्तत्वात्'—संस्काराद्युत्पत्तिमात्रेऽविद्यादेर्हेतुत्वात्, मात्र-शब्देन समुदायभावव्यवच्छेदः, अयमर्थः यथा हि घटं प्रति कपालयोः पटादीन् प्रति तन्त्वादीनां प्रत्येकं कारणत्वे सत्यपि न घटपटादिसमुदायत्वावच्छिन्नं प्रति कपालतन्त्वादीनां कारणत्वं बहुत्, वाह्यसमुदायत्वावच्छिन्नं प्रत्यान्तरसमुदायत्वावच्छिन्नं प्रति च न कस्यापि कारणत्वमिति ।२।२।१९।

उत्पत्तिमात्रनिमित्तत्वमभ्युपगमवादेनोक्तं तदपि वस्तुतो न सम्भवतीत्याह—

उत्तरोत्पादे च पूर्वनिरोधात् ।२।२।२०॥

एष क्षणभङ्गवादिनां बौद्धानामभ्युपगमः,—यत्, सर्वाण्येव भावजातानि क्षणिकानि, सन्तान एवाविच्छेदेनानुवर्त्तमानः स्थिरत्वबुद्धिमुत्पादयति दीपशिखावत्; पूर्वव्यक्तिः स्वसजातीयामुत्तरव्यक्तिमुत्पादयत्येव धारा सन्तानपदेनोच्यते; विशिष्टहेतुना सन्तानध्वंसे पुनस्तज्जातीयव्यक्तिर्नोत्पद्यत इति। न चासौ सम्भवति, 'उत्तरोत्पादे—' 'उत्तरस्य' उत्तरवर्त्तिनः 'उत्पादे' उत्पादक्षणे—उत्पादक्षणत्वेनाभिमते इति यावत्।' पूर्वनिरोधात् = 'पूर्वस्य' अव्यवहितपूर्वक्षणवर्त्तिनः, 'निरोधात्' नाशात्,—नाशाभ्युपगमात्, पूर्वस्योत्तरं प्रति कारणत्वं न सम्भवति, सन्तानघटकस्याद्यस्य सन्तानिनो यत् कारणं तस्यापि क्षणिकतया कार्योत्पादक्षणे तन्नाशात्,— द्वितीयादिसन्तानिकारणभूतानां प्रथमादिसन्तानिनां च तथै-

वोत्तरसन्तानोत्पत्तिक्षणे नाशादुत्पत्तिनिमित्तत्वं कस्यापि भावस्य न सम्भवति, घटादिकं प्रति मृदादेरिव कार्यसहभावेन तादृक्कारणतास्वीकारस्यावश्यकत्वात् । अन्यथा मृदादिनाशानन्तरमपि घटादिकं स्यादित्याशयः ।२।२।२० ।

ननु चक्रभ्रमणेन घटहेतुताभासाद्य विध्वस्तेऽपि दण्डे घटोत्पत्तिर्भवतीति कार्यसहभावस्य कारणनैयत्यविरहेण अनन्यथासिद्धनियतपूर्वभावमात्रस्य कारणतारूपतया कार्योत्पादक्षणे असत्यपि कारणे कार्योत्पत्तौ बाधाभाव इत्याशङ्का निरस्यति--

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ।२।२।२१॥

'असति' अविद्यमाने, कारणे यदि कार्योत्पत्तिः स्वीक्रियते 'प्रतिज्ञोपरोधः' 'धर्म्माणां धर्म्मस्थितिता' इति या सौगतप्रतिज्ञा सा रुध्येत, हीयेत, कारणानतिक्रमस्य धर्म्मस्थितिता पदार्थत्वात् ।

कारणक्षणस्य कार्योत्पत्तिक्षण यावत् स्थितिमङ्गीकृत्य कारणातिक्रमनिराकरणेन तत्प्रतिज्ञोपरोधदोषपरिहारे स्वाह यौगपद्यमित्यादि । 'अन्यथा' सत्येव कारणे कार्योत्पत्तिस्वीकारे स्थैर्य्यपक्षनिरासक हेतुफलयोर्यौगपद्यं सौगतमतेऽप्यापद्येत, तथाहि योऽसौ कारणक्षणः कार्योत्पत्तिक्षणपर्यन्तमस्तीत्यभ्युपगम्यते तस्य युगपत् सकलकार्यकरणसमर्थे स्वभावस्तत्क्षणपर्यन्तमवश्याभ्युपेयः स्वभावस्यानपायि-

त्वात्, सत्येवं तदीयकार्य्येद्वितीयक्षणे तदीयकार्य्यस्य तदीयकार्य्यकार्य्यस्य च यौगपद्यप्रसङ्गः। एतेन क्षणिकत्वप्रतिज्ञाहानिरप्युपपादिता। पूर्वं धर्म्मस्थिरताप्रतिज्ञाहानिरत्र तु क्षणिकत्वप्रतिज्ञाहानिरिति भेदसत्त्वात् सत्यसति च प्रतिज्ञाहानिरिति प्रतिज्ञाहानिरुभयथेति वा लघु लक्षणं नोपन्यस्तमिति ध्येयम् २।२।२१।

'बुद्धिबोध्य' त्रयादन्यत् संस्कृतं क्षणिकञ्च' इति सौगतकल्पना, 'संस्कृतम्' उत्पाद्यम्, 'बुद्धिबोध्यम्', प्रमेयमात्रम्—'त्रयात्' तुच्छात् त्रयात्, अन्यत् क्षणिकं चेति तदर्थः, तत्र त्रयं प्रतिसंख्यानिरोधश्चाप्रतिसंख्यानिरोधश्चाकाशश्चेति एतत्त्रयादन्येषां क्षणिकत्वं निराकृत्य त्रिषु तृतीयं पश्चान्निराकरिष्यन् द्वौ निरस्यति—

## प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ।२।२।२२॥

भावप्रतीपा 'संख्या' बुद्धिः 'प्रतिसंख्या' तया 'निरोधः' विनाशः, प्रतिसंख्यानिरोधः सन्तमिममसन्तं करोमीति बुद्धेर्भावप्रतीपत्वम्। 'अप्रतिसंख्यानिरोधः' अबुद्धिपूर्वो निरोधः कालकृतो वा जीर्णस्य ध्वंसः प्रभञ्जनवेगादिकृतः शाखादिभङ्गो वा तयोरप्राप्तिः असम्भवः। क्षणभङ्गवादे सन्तानसन्तानिव्यतिरिक्तसद्वस्त्वभावेन तयोरेकतरत्रापि प्रोक्तयोर्निरोधयोरसम्भवात्; तथाहि नैतौ निरोधौ सन्तानप्रतियोगिकौ यस्माद्रुत्पत्तिविलयधर्म्मकाः सन्तानिन एव भवन्ति, ध्वंस-

स्वरूपस्य निरोधस्य तत्तत्सन्तानिव्यक्तिप्रतियोगिकत्वस्यावश्याभ्युपेयतया सन्तानसामान्यप्रतियोगिकध्वंसस्यासिद्धेः। तादृशध्वंसाभ्युपगमे घटपटादिसमुदायस्यैकतराभावे समुदायाभावप्रतीतिवत् एकस्य सन्तानिनो ध्वंसे सन्तानध्वंसप्रतीतिप्रसङ्गात्। न च दृष्टान्तासिद्धिः, घटमात्रसत्त्वे घटपटोभयं नास्तीति प्रतीतिवत् घटपटयोः केवलयोः सत्त्वेऽपि आदिपदग्राह्यमठादेरसत्त्वेन घटपटादिसमुदायो नास्तीतिप्रतीतेः सर्वसिद्धत्वात्। ननु ध्वंसमात्रं न निरोधः, किन्तु निरन्वयध्वंसविशेषः स च तत्तत्सन्तानिव्यक्तिप्रतियोगिको न भवति, भवति तु सन्तानप्रतियोगिकः; इति चेत् सिद्ध सन्तानिभ्यो भेदः सन्तानस्य, तदेवं सन्तानिनां क्षणिकत्वेऽपि सन्तानस्य स्थैर्यं कथं व्याहन्येत, सति सन्तानस्य स्थैर्ये च यत् सत् तत् क्षणिकमिति व्याप्त्यसिद्ध्या सन्तानिनामपि क्षणिकत्वासिद्धिः। अथाभेदः सन्तानिभ्यः सन्तानस्य, सन्तानिनां निरन्वयतथाविधध्वंसासत्त्वे कथं सन्तानस्यासौ घटेत। ननु तत्सन्तानान्तर्गतसन्तान्यसमानकालीनसन्तानिध्वंस एव सन्ताननिरोध इति चेत्,—को नामायं सन्तानी, यस्य ध्वंसः सन्ताननिरोधः? अन्त्य इति चेत् तस्मिन्नर्थक्रियाकारित्वलक्षणसत्त्वस्याभावादसत्त्वेन ध्वंसप्रतियोगित्वासम्भवः, नहि भवति कदाचिद् गगनारविन्दस्य ध्वंसः। न च तदतिरिक्ताः सर्वे सन्तानिनो निरुक्तध्वंसप्रतियोगिनो भवेयुः, तेषामपि ध्वंसानामुत्तरत्र तत्तत्सन्तानान्तर्गतसन्तान्यसमकालीनत्वात् इति चेन्न

तत्तद्ध्वंसप्रतियोगित्वस्य प्रथमादिसन्तानिषु सत्त्वात् द्वितीयादिसन्तानिसत्त्वेऽपि निरुध्यते घटः निरुद्धो घटः इत्यादि व्यवहारापत्तिः, न चेष्टापत्तिः, 'अविच्छेदात्' यथा स्थिरपक्षे सदा घटो ध्वस्त इति व्यवहारो न भवति तथा क्षणिकपक्षेऽपि, घटधारायां अविच्छेदेऽपि घटो ध्वस्त इति व्यवहारस्य सर्वमतविरुद्धत्वात् सन्तानिप्रतियोगिकत्वमपि निरोधस्य न सम्भवतीति तात्पर्यम् ।२।२।२२।

ननु सजातीयसन्तानिसत्त्वदशायां सन्तान्यसमानकालीनत्वविशिष्टध्वसत्वावच्छिन्नसम्बन्धस्य तेषु सन्तानिष्वसत्त्वात् घटो निरुध्यत इत्यादि व्यवहाराभावः, तादृशसम्बन्धस्यैव तद्व्यवहारहेतुत्वोपगमात् । यद्वा विशिष्टस्यातिरिक्तत्वाभ्युपगमे सन्तानिकालीनतदसमानकालीनध्वंसयोर्भेदात् न प्रथमादिसन्तानिनो द्वितीयादिसन्तानिदशायां सन्तान्यसमानकालीनध्वंसप्रतियोगित्वमिति तटस्थकृतसौगतपक्षसमर्थनप्रतिक्षेपाय दोषान्तरमाह—

## उभयथा च दोषात् ।२।२।२३॥

यदि विशिष्टध्वसस्य सम्बन्धस्तदानीं नाभ्युपगम्यते, यदि वा विशिष्टध्वसस्यातिरिक्तत्वमभ्युपगम्यते, उभयथैव निरोधस्य तुच्छत्वसिद्धान्तो व्याकुप्यते, नहि तुच्छस्य सम्बन्ध सम्भवति, नापि तुच्छस्य विशेषणकृतो भेद , न खलु गगनारविन्दस्य गगने वा सरसि वा सम्बन्ध, सौरभनीलिमादिना तद्भेदो

वा केनाप्यभ्युपेयते । 'उभयथा' इत्यस्य, चकारेणार्थान्तरं समुच्चीयते—प्रतिसंख्यया अप्रतिसंख्यया च 'दोषात्' निरोधस्वरूपस्य सौगताभिमतस्य व्याघातात् । यदि निरोधो निरुपाख्यो निर्हेतुकश्चेत्यभ्युपगमः कथं तस्य प्रतिसंख्याजन्यत्वम् ? तदभावे चतुष्टयभावनाजन्याविद्यानिवृत्तेरपवर्गत्वाभ्युपगमो व्याहन्येत, अथ प्रतिसंख्यानिरोधस्य निरोधमात्रपरत्वम् ? अप्रतिसंख्यानिरोधतयोरविशेषः स्यात्; निरोधत्वेन तस्यापि प्राप्तेः । अविद्यानिवृत्तेः सहेतुकत्वे निर्हेतुकत्वे वा दोषाच्च, सहेतुकत्वे निरोधस्य निर्हेतुकत्वाभ्युपगमहानिः निर्हेतुकत्वे मार्गोपदेशानर्थक्यप्रसङ्गः । इत्यस्मादयुक्तं बौद्धमतम् ।२।२।२३।

निरोधद्वयस्य तुच्छत्वं निरस्तमिदानीम् आकाशस्य तथात्वं निराचष्टे—

## आकाशे चाविशेषात् ।२।२।२४।।

'आकाशे' आकाशपदार्थे इति चकारेण उपसर्जनस्याप्यप्राप्तिरित्यस्य योग्यत्वेनानुकर्षः; तुच्छत्वस्येतिशेषः । आकाशपदार्थे तुच्छत्वस्यासम्भव इत्यर्थः अत्र हेतुः 'अविशेषात्' प्रत्ययोपनिबन्धनिष्पादकतया पृथिव्यादिभ्यो विशेषाभावात्, आकाशं सत्—बीजप्रत्ययोपनिबन्धनिष्पादकत्वात् पृथिव्यादिवत्—तथाहि 'पृथिवीधातुर्बीजस्य संग्रहकृत्यं करोति, अब्धातुर्बीजं स्नेहयति, तेजो धातुर्बीजं परिपाचयति, वायुधातुर्बीजमभिनिर्हरति यतोऽङ्कुरो बीजान्निर्गच्छति, आकाशधातु-

रावरणकृत्यं करोति, ऋतुरपि बीजस्य परिणामं करोतीति, प्रत्ययोपनिबन्धः, हेतुं हेतुं प्रत्ययन्ते हेत्वन्तराणि, तेषामयमानानां भावः प्रत्ययः हेतूनां समवायः, तस्योपनिबन्धः कार्य्यविशेषं प्रति नैयत्यम् । तन्निष्पादकत्वं प्रत्येकमेव वर्त्तते, एकस्याप्यभावे समवायाभावेन कार्य्यविशेषनैयत्यस्य तत्रासिद्धेः । अतः पृथिव्यादिवदाकाशेऽपि हेतुसिद्ध्या साध्यसिद्धिः ।२।२।२४।

आकाशे सत्त्वानुमानं द्रढयितुं हेत्वन्तरमाह—

अनुस्मृतेश्च ।२।२।२५॥

'च' किञ्च, 'अनु' आकाशपदार्थमनु अभिलक्ष्य 'स्मृतेः' धातुशब्दार्थयोपस्थितेः, आकाशे तुच्छत्वमयुक्तमिति पूर्ववदर्थः । सौगतदर्शने पृथिवीधातुरब्धातुराकाशधातुरित्यादिप्रयोगात् डुधाञ्धारणपोषणयोरिति पाणिनीयस्मृत्युक्त्या धा-धातुप्रकृतिकधातुशब्दोपस्थापितार्थस्याकाशशब्दोपस्थाप्यार्थेनाभेदान्वयात् आकाशस्य तुच्छत्वं नोपपद्यते; धारणपोषणविरहवतोऽसतो धातुशब्देनोपस्थितेरयुक्तत्वात् । यद्वा 'नानुपमृद्य प्रादुर्भावात्' इत्यभावस्य हेतुसमवायमध्ये प्रवेशसम्भवाद् वा हेतुसाध्ययोः कार्य्यकारणभावाद्यभावाद्वा न दर्शितो हेतुर्गमकः, अपि तु आकाशमसत् आवरणाभावाद् यन्नैवं तन्नैवं यथा घट इति स्वभावहेतुकानुमानेनासत्त्वसिद्धिरित्याशङ्का निराचष्टे अनुस्मृतेश्चेति । अनुमानं व्याप्तिस्मृतिसापेक्षं स्मृतिरपि पूर्वानुभव-

सापेक्षा, सर्वस्य सतः क्षणिकत्वं ब्रुवतां भवतां मतेऽनुमातुरपि क्षणिकतया अनुमानस्यानुपपत्तिः, व्याप्त्यनुभवव्याप्तिस्मृति-परामर्शानां क्रमिकाणामेकस्मिन्नसम्भवात्, न ह्यन्ययानुभवेन तदितरस्य स्मृतिरुपजायते। अनुमानासिद्ध्या च नाकाशस्या-सत्त्वं भवद्भिः साधयितुं शक्यते। स्थिरात्मवादिनामस्मा-कमेकस्मिन्ननुभवितरि व्याप्तिस्मृत्यादिसम्भवेनानुमानादेवा-काशे सत्त्वसिद्धिः, यदुक्तं कार्य्यकारणभावाद्यभावेन प्रत्ययो-पनिबन्धनिष्पादकत्वं न गमको हेतुरिति तच्चान्दं यत् सत् तत् क्षणिकमिति भवतां हेतोरपि गमकत्वानुपपत्तेः, न च सत्त्व-क्षणिकयोर्वृक्षशिंशपयोरिव नियामकस्वभावादेव हेतुत्वम् 'कार्य्य-कारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमोऽ-दर्शनान्न, न दर्शनात्' इति सिद्धान्तादिति वाच्यम्, सतः क्षणिकस्वभावताया अद्याप्यसिद्धेः।२।२।२५।

यच्च 'नानुपमृद्य प्रादुर्भावात्' इत्यनेनाभावस्य हेतुत्वमुक्तं बीजविनाशेनैवाङ्कुरोत्पत्तिदर्शनादिति तदपि निरस्यति—

नासतोऽदृष्टत्वात् ।२।२।२६॥

'असतः' अभावस्य 'न' हेतुत्वम् इति शेषः हेतुत्वं जन-कत्वम्। कुतः 'अदृष्टत्वात्' अदर्शनात्। भावादेव भावो-त्पत्तिर्दृश्यते नत्वभावात्। बीजादेवाङ्कुरो जायते क्षीरादेव दधि, तन्तुभ्यश्च पटः, न च—बीजध्वंसादेवाङ्कुरो न बीजात्, बीजमुपमृद्यैवाङ्कुर उत्पद्यते, क्षीरावस्थां विनाश्यैव दध्युत्पत्तिः,

तन्त्ववस्थां विनाश्यैव पटोत्पत्तिरित्येवं दृश्यत एव सर्वत्राभावाद् भावोत्पत्तिरिति वाच्यम्—बीजावयवानां क्षीरावयवानां च भावानाम् अङ्कुरदध्याद्यनुगतानामेव तत्र तत्र जनकत्वाभ्युपगमात्, अन्यथा मृदो घटोत्पत्तौ हिरण्यात् कटककुण्डलाद्युत्पत्तौ च मृद्धिरण्ययोश्च सोऽभ्युपगतः स्यात्। अभ्युपगम्यमाने च तस्मिन् घटस्य मृन्मयत्वं कटककुण्डलादेर्हिरण्मयत्वञ्च लुप्येत ।२।२।२६।

ननु तत्रापि घटाद्यवयवध्वंसः कटककुण्डलादिप्रागध्वंसश्च कारणं न तु मृदादिध्वंसः, यथा भावत्वाविशेषेऽपि मृदेव घटस्य कारणं न तन्त्वादिकम् हिरण्यमेव कटककुण्डलादिकारणं न जलादिकम् तद्वत्। इत्याशङ्कायामाह—

## उदासीनानामपि चैवं सिद्धिः ।२।२।२७।

'उदासीनानाम्' निरपेक्षाणाम्—निःसम्बन्धानाम्, अपि अपिकारोऽसम्भवद्योतनार्थः एवं सिद्धिः 'ससम्बन्धसदृशी सिद्धिः स्यादिति शेषः। ततस्तत्तदङ्कुरादीनां क्षीरादिभ्योऽपि तत्तद्बीजादिभ्य इव प्रादुर्भावः स्यात्। सौगतमते अभावस्य निःस्वभावत्वं तुच्छतया विशेषविरहात्, सर्वत्र सर्वकार्योत्पादः प्रसज्येत इतिभावः। चः समुच्चये ।२।२।२७।

वैभाषिकसौत्रान्तिकमतं निरस्य [illegible]येन योगाचाराणां मतं निराकुरुते—

( अभावाधिकरणम्—५ )

नाभाव उपलब्धेः ।२।२।२८॥

बाह्यार्थापलापिनां विज्ञानस्कन्धमात्रमङ्गीकुर्वतां योगाचाराणां मते बाह्यार्थासत्त्वाभ्युपगमप्रयुक्तदोषाणामभावात् प्रकारान्तरेण तद् दूषणाय पृथगिदमधिकरणम्—

'अभावः' बाह्यार्थानामभावः 'न' न युक्तः । 'उपलब्धेः' अबाधितप्रत्ययविषयत्वात् । तथा चायं प्रयोगः घटपटादिकम् शरीरानवच्छिन्नवृत्तिकं सद्रूपेण, अबाधितप्रत्ययविषयत्वात् यन्नैवं तन्नैवं यथा विज्ञानमिति सूत्राशयः ।२।२।२८।

नन्वबाधितप्रत्ययविषयत्वमनैकान्तो हेतुः स्वप्नदृष्टसाधारणत्वात्, न च स्वाप्नप्रत्ययो बाधितः, स्वप्नावस्थायामबाधितत्वप्रतिपत्तेः अथ जागरे बाध इति चेत् जागरदृष्टे: स्वाप्ने बाध इति तुल्यम् । तस्मात् स्वप्नदशायामबाधितप्रत्ययविषयस्यापि यथा विज्ञानव्यतिरिक्तत्वं नास्ति, यथा वा जागरेऽपि माययाभिभूतस्य तदवस्थायामबाधितप्रत्ययविषयोऽप्यर्थो न विज्ञानमात्रव्यतिरिक्तः कश्चित्, तथा जागरेऽपि माययानभिभूतस्य बाधितप्रत्ययविषयस्यापि न विज्ञानव्यतिरिक्तत्वमित्याक्षेपमपाकुरुते—

वैधर्म्याच्च न स्वप्नादिवत् ।२।२।२९॥

जागरेऽबाधितप्रत्ययः 'न स्वप्नादिवत्' स्वप्नादिप्रत्ययतुल्यो भवितुं नार्हति, आदिपदान्मायादिपरिग्रहः मायाभिभूतस्य

जागरप्रत्ययतया स्वप्नाद् विशेषादादिपदम्। जागरप्रत्ययस्य स्वप्नादितुल्यत्वाभावे हेतुमाह 'वैधर्म्यात्' जागरे मायानभिभवे विशेषणवता विशेष्येण समं बहिरिन्द्रियसन्निकर्षजन्यः प्रात्यचिकाबाधितप्रत्ययः स्वप्नमायादौ तु दोषसहकृतोपनयसन्निकर्षजन्यश्च बाधितश्च; अनुमित्योरपि प्रमाभ्रमरूपयोः सामग्रीवैलक्षण्यमितिप्रत्ययानां मिथो वैधर्म्यम्; तस्मात् प्रमितिविषयत्वमेवाबाधितप्रत्ययविषयत्वमिति भावः। तच्च नानैकान्तिकम् स्वप्नादिप्रत्ययस्य स्वरूपसदभाववति तत्प्रकारकत्वेन अगृहीतासंसर्गकासंसृष्टानेकज्ञानत्वेन वा प्रमितित्वाभावात्, स्वप्नादिदृष्टस्य विज्ञानाव्यतिरिक्तत्वेऽपि प्रमितिविषयत्वासिद्धेः।२।२।२६।

ननु वैधर्म्यात् स्वप्नादिप्रत्ययतुल्यत्वाभावो न युज्यते तुल्यत्वस्य भेदगर्भतया वैधर्म्यस्य तत्रैव हेतुत्वात्, सर्वथा वैधर्म्ये तु भवति तुल्यत्वाभावः, नह्यत्र तथा; विनाप्यर्थं वासनावैचित्र्यमूलकज्ञानवैचित्र्यस्य स्वप्नजागरयोः साधर्म्यस्याभ्युपगमात्, इत्याक्षेपं परिहरति—

न भावोऽनुपलब्धेः।२।२।३०॥

इदमपि साधर्म्यं नास्तीत्युच्यते। 'न भावः' वासनानां भावः अस्तित्वं नोपपद्यते भवताम्। 'अनुपलब्धेः' भवत्सिद्धान्ते बाह्यार्थानां 'अनुपलब्धेः' उपलम्भाभावात्। वासना नाम भावनाख्यः संस्कारो योगैर्व्यपदिष्टः, यतः स्मृतिप्रत्यभिज्ञा-

दिक जायते तत् कारणं चानुभवविशेषः, यस्य यद्विषयकोऽनुभवस्तस्य वासना तद्विषयैव भवति, स्मृतिश्च तद्विषया। विषयाभावे हि नानुभवः, अनुभवाभावे कथं नाम वासना जायेत, वासनाभावे च ज्ञानवैचित्र्यं नोपपद्यते। कथं तेन रूपेण स्वप्नजागरयोः साधर्म्यं भवत्पक्षे घटेतेति सर्वथा साधर्म्याभावः स्वप्नजागरयोः। मायाभिभूतस्य जागरेऽप्येवम्। अप्रयोजकं साधर्म्यान्तरं तु असाधर्म्यकोटावेव प्रक्षेप्यमितितरवम् ।२।२।३०।

ननु अनादिरयं वासनाज्ञानवैचित्र्यप्रवाहः, वासनावैचित्र्याद् विषयरूपतया विविधाकारेणावभासमानमनुभवविशेषात्मकं ज्ञानमुत्तरवासनानां जनकं भवति, ततः पुनर्ज्ञानान्तर, ततो वासनेतिक्रमेण बीजाङ्कुरवदर्थाभावेऽपि ज्ञेयाकारकज्ञानवैचित्र्यं स्वप्नजागरयोर्युज्यत इत्यत आह—

## क्षणिकत्वाच्च ।२।२।३१॥

'क्षणिकत्वात्' विज्ञानानां द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वाभ्युपगमात्। चकारेण 'न भावः' इति पूर्वसूत्रप्रतीकस्यानुकर्षः। बीजाङ्कुरन्यायेन यदि वासनाजन्यं ज्ञानं ज्ञानजन्या च वासनाऽभ्युपगम्यते, तथापि आत्मस्थानापन्नस्यालयविज्ञानस्य क्षणिकतया वासनाज्ञानयोः सामानाधिकरण्यविरहेण तयोः कार्यकारणभावाभावाद् वासनानामभाव इत्यर्थः ।२।२।३१।

योगाचारमतं निराकृत्य माध्यमिकानां मतं निरस्यति—

( सर्वथानुपपत्त्यधिकरणम्—६ )

## सर्वथानुपपत्तेश्च ।२।२।३२॥

योगाचारमते यानि दूषणानि दर्शितानि सर्वशून्यतावादे तानि वर्त्तन्त एवेति सूचयितुं सौत्रश्चकारः।

विशेषहेतुस्तु 'सर्वथानुपपत्तेः' 'सर्वथा' प्रमाणं प्रमेयं प्रमाता प्रमा चेति तत्त्वसमाहृत्काः सर्वे प्रकारास्तेरनुपपत्तेः अयौक्तिकत्वादेतन्मतस्थेत्यर्थः प्रमाणादीनां सर्वेषां शून्यतया तुच्छत्वप्रतिपादनात्। यदि हि प्रमाणे तुच्छत्वं तुच्छत्वाप्रतिपत्तिः कथं स्यात् ? यदि प्रमेये तुच्छत्वं तस्यापि तुच्छत्वे तुच्छत्व-विलोपात् सर्वसत्त्वाभ्युपगमप्रसङ्गः। प्रमातुस्तुच्छत्वे कस्य तुच्छत्वप्रतिपत्तये सौगतमतचर्चा। प्रमायास्तुच्छत्वे च तुच्छ-त्वसिद्धिस्तुच्छा स्यात्। अनवधेयवचनस्य सुगत इति सर्वैरेव प्रकारैरयौक्तिकत्वात् माध्यमिकमतं हेयमिति शेषः अथ नायं शून्यवादः, किन्तु जगतो मिथ्यात्ववादः, आकाशे गन्धर्वनगर-स्येव; आकाशस्तु न मिथ्या, तथा जगदाश्रयस्य शून्यत्वेऽपि न मिथ्यात्वं किंतु परमार्थसत्त्वमित्ययं शून्यवाद इति चेत् शून्यत्वस्य वाङ्मात्रतया पर्यवसानं स्यात्, परमार्थसत्ताशून्यत-योर्विरोधात्। अथ वाचा व्यपदेश्यत्वाभावात् प्रत्यक्षादिविष-यत्वाभावाच्च शून्यत्वेन परिभाषितत्वमेव शून्यत्वमित्युच्यते, तद् विरुद्धमिदं वचनं भवति, परमार्थसत्त्वेन व्यपदिष्टस्याव्यपदे-श्यत्वव्यपदेशात्। अथ प्रमाणाभावेन तस्याव्यपदेश्यत्वं चेत्,

आयातं तुच्छत्वेन, प्रमाणासिद्धस्यैव तुच्छत्वात्। इत्येवं शून्यवादः सर्वथा नोपपद्यते, तस्मादनादेयः सौगतसमयः।२।२।३२।

बौद्धमतं निरस्य ईश्वरानङ्गीकर्तृत्वसामान्येनोपस्थितमणुकारणतावादान्यतमार्हतमतं निरस्यति—

( एकस्मिन्नसम्भवाधिकरणम्—७ । )

नैकस्मिन्नसम्भवात् ।२।२।३३॥

अथात्रार्हतमतसमासः—जीवाजीवौ द्वौ पदार्थौ, जीवश्चेतनोऽजीवश्चाचेतनः, जीवस्त्रिधा बद्ध-योगसिद्ध-मुक्त-भेदात्। [redacted] च देहपरिमाणकः। एतदात्मकं निरीश्वरं जगत्, तच्चाजीवान्तर्गतपरमाणुकारणकम्। आर्हतम्मतमोक्षोपायमाश्रयतो लब्धसिद्धिकस्य बन्धक्षयात् सततोर्द्ध्वगमनं मोक्षः। केचित्तु विगलितसमासनक्लेशस्यानावरणज्ञानस्य सुखैकतानस्यात्मन उपरिदेशेऽवस्थानं मोक्षः। अजीवानां च बहुधा भेदा इति। विस्तरस्त्वाकरादवगन्तव्यः। अत्राभिधीयते, 'न' नैकस्मिन्नसम्भवात् इदं मतं न युक्तम्, 'एकस्मिन्'—कृतकायव्यूहे योगसिद्धजीवे 'असम्भवात्' देहपरिमाणकत्वासम्भवात्,—जीवस्य तद्देहपरिमाणकत्वे योगसृष्टेषु देहान्तरेषु तत्सम्बन्धो न स्यादिति भावः। आर्हताः खलु सर्वेषु पदार्थेषु सप्तभङ्गीनयं योजयन्ति स च नयो यथा—स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेत्यस्तित्वसप्तभङ्गीनयः,

एवं स्यादेकः स्यादनेकः स्यादेकश्चानेकश्च स्यादवक्तव्यश्चे-त्यादिकश्चैकत्वादिविषयकः, एतेन नयेन वस्तुमात्रस्यास्तित्वाद्य-नैकान्तिकत्वम्, अनैकान्तिकत्वाभावे घटोऽस्तीति अस्तित्वैका-न्तिकत्वे क्वचिदपि कदापि कथमपि नास्तीति न स्यात् वैपरी-त्येऽस्तीति न स्यात्, क्रमेणास्तित्वं नास्तित्वं काङ्क्षेत चेत्, तृतीयो भङ्गः, युगपत्त काङ्क्षेत चेत्, अस्तिनास्ति शब्दयोर्यु-गपदुच्चारणासम्भवादवक्तव्यश्चेति चतुर्थोभङ्गः। युगपदाद्य-चतुर्थयोः काङ्क्षा चेत् पञ्चमो भङ्गः, द्वितीयचतुर्थयोः काङ्क्षा चेत् षष्ठोभङ्गः, तृतीयचतुर्थयोः सप्तमः। स्यादित्यव्ययं कथ-ञ्चिदर्थकम्। इत्येवं वादः नैकस्मिन्नसम्भवादिति सूत्रेण प्रत्या-ख्यायते, एकस्मिन् धर्म्मिणि विरुद्धधर्म्मयोरसम्भवादित्यर्थाभि-प्रायेणेति पूर्वाचार्य्यैर्यदि चोच्यते, तथापि सर्वथानुपपत्त्यधि-करणेन प्रमाणप्रमेयप्रमातृप्रमाणगोचरानुपपत्त्या शून्यवाददूषण-स्येव प्रमाणादिष्वस्तित्वानैकान्तिकत्वेनास्तत्वपक्षयानुपपत्त्या स्याद्वाददूषणस्यापि दिक्प्रदर्शनेन तत्पक्षमपहाय प्रधानीभूतजी-वस्वरूपदूषणपरत्वाश्रयणं युक्तमुत्प्रेक्ष्य व्याख्यातमेतदस्माभिः। वस्तुतस्तु नैकस्मिन्नसम्भवादिति सूत्रम्—आर्हतानां निरीश्वर-वादखण्डनपरम्, उत्तरसूत्रस्य एवं पदेन पुनरस्य सूत्रास्म-कवाक्यस्य परामर्शात्तस्य च प्रदर्शितार्थपरत्वमित्युपपादयि-ष्यते। अत्र पक्षे सूत्रार्थस्तु—निरीश्वरं जगदित्युपपादयितुम् ईश्वरसाधने ये ये दोषा दर्शिताः 'एकस्मिन्' एकमात्रे सर्वज्ञे कर्त्तरि नित्यसम्बद्धचिदचिदुभयपर्य्याप्तैकसत्तावति, 'असम्भ-

वात्' तेषामसम्भवात्, यथा हि क्षितिः सकर्तृका कार्य्यत्वादितीश्वरानुमाने कार्य्यत्वासिद्ध्या यत् तैर्दूषितं तत्तु न सम्यक्, यतः कार्य्यत्वं खलु जन्यत्वम्, तस्य पञ्चभूतसङ्घातरूपपृथिव्यां तैरपि स्वीकारेण स्वरूपासिद्ध्यसम्भवात्। ननु एकेश्वरसाधकेऽनुमानेऽस्मिन् प्रासादादौ व्यभिचारः स्थपत्यादीनां बहूनां पुरुषाणां कर्त्तृत्वोपलम्भेन हेतोर्व्यभिचारात्। बहूनां विश्वनिर्म्मातृत्वसाधने एककर्तृके घटादौ व्यभिचारः, तेषु मिथो वैमत्यसम्भावनाया अनिवार्य्यत्वादेकैकस्य वस्तुनोऽन्यान्यरूपतया निर्म्माणे सर्वमसमञ्जसं स्यात्। सर्वेषां सामर्थ्यसाम्येनैकेनैव सकलजगदुत्पत्तिसिद्धावितरवैयर्थ्यं च। एवं प्राप्तेऽभिधीयते, नैकस्मिन्नसम्भवादिति। एकस्मिन् जगत्कर्तरि बहुकर्तृके प्रासादादौ यो व्यभिचारो दर्शितः स न सम्भवति, व्याप्तिशरीरे साध्यांशे एकत्वस्यानिवेशेन साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वरूपव्यभिचारस्य तत्रासत्त्वात्, सकर्तृकत्वकार्य्यत्वयोः समनैयत्याच्च। अनुमितावेकत्वस्य विधेयशरीरे प्रवेशस्तु लाघवज्ञानादेव, इतरबाधज्ञाने लाघवज्ञाने वा सति व्यापकतानवच्छेदकरूपेणाप्यनुमितेः सिद्धान्तसम्मतत्वात्, अत एव बहुकर्तृकत्वे ये दोषास्तेषामत्रानवकाशादेकेश्वरसिद्धेर्निरीश्वरं जगदित्यार्हतसमयो न युक्तः।

एतेनार्हतसमये ईश्वरनिराकरणयुक्तिजालप्रसारेऽपि ब्रह्मसूत्रे तदनिरासात् महती न्यूनतेत्याक्षेपो निरस्तः। इति सर्वमनवद्यम्।

एवञ्च वैशेषिकमतनिरासप्रकरणोक्तदिशा निराकरणीयस्य अणुकारणतापक्षस्य किञ्चिद् विशेषसहितस्याप्येतत्प्रकरणे पृथगनिराकरणमिव शून्यवादनिरासतुल्यन्यायेन निराकरणीयस्य स्याद्वादस्यात्र पृथगनिराकरणं सूपपन्नमितिसुधीभिरवधेयम् ।२।२।३३।

पूर्वसूत्रस्याद्यवर्णकपक्षे, ननु योगबलेनैव चेतनकायव्यूहसृष्टिरूपेयते मूलजीवात्तु मूलभूतदेहावच्छिन्न एव नातो दोष इत्याशङ्कायामाह—

## एवं चात्माऽकार्त्स्न्यम् ।२।२।३४।

'च' किंच, 'एवम्' आत्मनो देहसमपरिमाणत्वे 'आत्माऽकार्त्स्न्यम्' आत्मनः कृत्स्नदेहसम्बन्धो नोपपद्यते, मनुष्यो मरणोत्तरं कर्मविपाकेन हस्तिजन्म प्राप्य कृत्स्नं हस्तिशरीरं न व्याप्नुयात्, पुत्तिकाशरीरप्राप्तो चात्मनः कृत्स्नं परिमाणं तत्र न मीयेत । द्वितीयवर्णके तु ईश्वरखण्डनयुक्तिं निरस्य आत्मनो देहपरिमाणतामवमपाकरोति 'एवं चात्माऽकार्त्स्न्यम्' एवम् आत्माऽकार्त्स्न्यं चेति योजना ।

'एवम्' इत्थम्—एतत्प्रकारेण = अव्यवहितपूर्वसूत्रस्यैकस्मिन्नसम्भवादिति शब्दोपस्थाप्यार्थविषया, आत्मनो देहपरिमाणकत्वं न युक्तमित्यर्थः ; 'न' इत्यस्य पूर्वसूत्रादनुकर्षात् । एकस्मिन्नसम्भवादिति शब्दस्याव्यवहितपूर्वतया एतच्छब्दसमानार्थकेन एवमित्यव्ययार्थैकदेशेन ग्रहणम्, अव्ययार्थैक-

देशान्तरेण प्रकारस्वरूपेण तदुपस्थाप्यार्थस्य लाभात् ईश्वरप्रतिपादकस्य वस्तुतः कल्पीयप्रागुक्तार्थस्यानुपादानेऽपि न क्षतिः, तेन शब्देनार्थान्तरस्याप्युपस्थितेः। तच्चार्थान्तरं तत्सूत्रभाष्ये प्रथमवर्णकेनावेदितम्। चकारो हेतौ समुच्चये च। यतः आत्माऽकार्त्स्न्यं च। तेन एकस्मिन्नसम्भवात्, आत्माऽकार्त्स्न्याच्च आत्मनो देहपरिमाणत्वं न युक्तमिति पर्यवसितम्। आत्माऽकार्त्स्न्यं व्याख्यातम्। अन्यथाऽस्मिन् सूत्रे एवमिति व्यर्थं स्यात्। एवमित्यस्य पूर्वसूत्रप्रथमवर्णकवर्णितार्थानुपादानेन प्रकारान्तरेण वैयर्थ्यनिरासप्रयासे तु आत्मनो देहपरिमाणत्वे एक आत्माऽकार्त्स्न्यदोषोऽनेन प्रदर्शित इति ज्ञेयम्।२।२।३४।

अत्र परेषां प्रतिवचनमाशङ्क्य परिहरति—

## न च पर्यायादप्यविरोधो विकारादिभ्यः।२।२।३५।।

'पर्यायात्' क्रमात्—मनुष्यजन्मानन्तरं हस्तिजन्मनि पुत्तिकाजन्मनि च: क्रमः पूर्वापरभावस्तस्मात्, अपिकारोऽक्रमलाभार्थः, अक्रमो यौगपद्यम् योगिनां कायव्यूहे युगपच्चेत्यर्थः, अवयवोपचयापचयाभ्यां क्रमस्थले, सात्मकायव्यूहोत्पत्त्या च यौगपद्यस्थले 'अविरोधः' पूर्वोपदर्शितो यो 'विरोधः' एकस्मिन् आत्मनि विभिन्नप्रकारपरिणामस्य अयुक्तित्वम्। तस्याभावः इति परेषां प्रतिवचनमाशङ्क्य निषेधति 'न च' इति। तत्र हेतुः 'विकारादिभ्य.' इति विकारः अवयवनाशस्तदुत्पत्तिश्च। तेनानित्यत्वप्रसक्तिः, ननु नित्यसम्बद्धचिदचिद्ब्रह्मवादेऽचिदंशे

परिणामित्वेऽपि यथा नित्यत्वमभ्युपगम्यते तद्वदात्मन. किं न स्यात् इति चेन्न, योगबलेन सचेतनकायव्यूहनिर्म्माणाभ्युपगमे कायस्येव चैतन्यप्रयोजकात्मनो जन्माद्यखिलविकारस्य प्रौव्येणापगमेऽनित्यत्वस्य दुर्वारत्वात्। आदिपदात् मुक्तस्यापि बन्धापत्तिरित्यादिदोषसंग्रहः। अवयवोपचयापचयात्वे: स्वाभाविकत्वे स्वभावस्य यावद्द्रव्यभावित्वात्, मुक्तस्यापि अवयवोपचयापचयाभ्यां बन्धापत्तिः, मुक्तस्यानियतपरिमाणानभ्युपगमात् यदि न स्वाभाविकः; आगन्तुको वाच्यः, तच्चतां कुतोऽवयवा नवीना उत्पद्यन्ते ? कुत्र वा लीयन्ते। अजीवव्यतिरिक्तस्य तस्य भूताद्युपादानकावयवकत्वाभावात् तत्र शक्यते वक्तुम्; इत्येवमादिदोषेभ्य उपचितापचितावयवकत्वं जीवस्य न सम्भवतीत्यर्थः। ।२।२।३५।

नन्वार्हतमते धर्म्माधर्म्मयोर्द्रव्यत्वात्तदुपादानकावयवैः सयोगविशेषेण जीवावयवोपचय, तद्विभागविशेषेण चापचयो भविष्यति, न्यायदर्शनमते पार्थिवदेहे जलावेरुपष्टम्भकसयोगवत् जीवावयवेष्वजीवावयवसयोगविशेषे बाधाभावादित्याशङ्क्य दोषान्तरमाह—

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ।२।२।३६।।

'अन्त्यावस्थितेः' मुक्तानां जीवानां या अवस्थितिः धर्म्माधर्म्मबन्धनरहितस्यावस्थानं तत्र हेतोः 'उभयनित्यत्वाच्च'—उभयस्य = मुक्तिमुक्तमोक्षश्चेति द्वयस्य, नित्यत्वाच्च ;'अवि-

शेष.' सर्वावस्थासु जीवस्य अवयवोपचयादिकृतविशेषविरहो युक्त ।

एतेनैतदुक्तं भवति—आर्हतमतेऽपि मुक्तिनि त्या जीवश्च नित्य', धर्म्माधर्म्मबन्धनरहितस्य सततमूर्द्ध्वगमनं वा तथाविधध्यानावृतज्ञानस्य सुखैकतानस्योपरिदेशेऽवस्थानं वा तन्मते मुक्तिरित्येव स्थिते, तदानीं केनचित् परिमाणेन भवितव्यं, मुक्तेर्जीवस्य च नित्यतया धर्म्माधर्म्मसम्बन्धरहितत्वेन तदुत्पन्नावयवसम्बन्धासम्भवात्, जीवस्य स्वाभाविकपरिमाणं महद्वा अणु वेति स्वीकार्य्यम्, तस्य च सदावस्थानात्, कथं देहपरिमाणकत्वं जीवस्य कल्पयितुं शक्यते, एकस्य युगपत् परिमाणद्वयासम्भवात्, नित्यत्वाच्च जीवस्य नावयविन्व, निरवयवे वस्तुनि आगन्तुकावयवसम्बन्धासम्भवात् मुक्तावस्थायां धर्म्माधर्म्मसम्बन्धाभावेनावयवानाम् आगन्तुकतया कल्पयितुमशक्यत्वाच्च । तस्मान्मुक्तावस्थायां यत् स्वाभाविकपरिमाणं तस्यैव सर्वदा सत्वात् देहपरिमाणत्वं जीवस्येति व्याहत मतमित्यार्हतमतनिरासः ।२।२।३६।

निरीश्वराणां स्याद्वादिनां मतं निराकृत्य स्याद्वादस्य चानिर्वचनीयत्ववादस्य च साम्यात् ईश्वरानङ्गीकारस्य ईश्वरे पारमार्थिकत्वानङ्गीकारस्य च फलत एकत्वाच्च तत्प्रसङ्गेनानिर्वचनीयत्ववादं विवर्त्तवादापराख्यं निराकुरुते—

( पत्यधिकरणम्—८ )

पत्युरसामञ्जस्यात् ।२।२।३७।।

'पत्युः' स विश्वकृत् स हि सर्वस्य कर्त्तेति प्रकृत्य 'सर्वस्याधिपतिः' इति 'एष भूताधिपतिरेष भूतपालः' इति (बृह० ४।४) 'भूयः सृष्ट्वा यतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा' इति ( श्वेता० ५।३) 'पतिं पतीनाम्' (श्वेता० ६।७ ) इति चैवमादिश्रुतिप्रतिपादितस्य पत्युः = परमात्मनः सूत्रे सम्बन्धिपदानुपादानात् पतिशब्दस्य सर्वपतिपरत्वं बोध्यम् । कारणत्वमिति उपक्रमादिना प्राप्तं पूरणीयम् । 'न एकस्मिन्' इति नैकस्मिन्नसम्भवादिति सूत्रादनुकृष्यते । तथाच पत्युः कारणत्वम् एकस्मिन् न युक्तम् असामञ्जस्यात् इति सोपस्कारयोजना । पूर्वम् अचिन्मात्रस्यैकस्य कारणत्वनिराकरणात् अत्र पारिशेष्यादेकस्मिन्नित्यस्य चिन्मात्र इति विशेष्यलाभः । श्रुतिप्रमाणकं यत्सर्वाधिपतेर्जगत्कारणत्वम् , तत् एकस्मिन् वास्तवद्वैतरहितत्वेनाभ्युपगम्यमाने चिन्मात्रे न युक्तम् , कुतः असामञ्जस्यात् अनौचित्यात् असिद्धत्वादिति यावत् । पतित्वस्य सापेक्षतया द्वैताभावे तस्यासिद्धत्वादाश्रयासिद्धेः । चिन्मात्रम्—अन्वयम् अविकारि, पालनशासनादिलक्षणानां पतिकार्याणां तस्मिन् वास्तवसमन्वयाभावेन पतित्वस्यासिद्धेश्च । अपरिणामिनि चिन्मात्रे पक्षे, कारणत्वस्य साध्यस्य परिणामव्याप्यस्य बाधाच । न चायस्कान्तमणेर्विनापि परेषां प्रवर्त्तन-

मयःसमाकर्षणकारणतया कारणत्वे परिणामव्यभिचार इति वाच्यम्, अयस्कान्तमणेः परिणामं विना समाकर्षणहेतुत्वेऽपि तस्योत्पत्तिविनाशादिपरिणामस्य सर्वप्रतीतिसिद्धत्वेन कारणताया परिणामव्याप्यत्वानपायात् । अत्र च कारणत्वं न अपरिणामिमात्रवृत्तिधर्मावच्छिन्नं परिणामव्याप्यत्वात्, यद् यद्धर्मव्याप्यं तत्र तदभाववन्मात्रवृत्तिधर्मावच्छिन्नं घटत्वव्याप्यप्रतियोगित्ववत्, इत्यनुमानमनुसरणीयम् ।२।२।३७।

ननु चिन्मात्रमद्वितीयमिति वास्तवं मायिकश्च प्रपञ्चः तदपेक्षा च पत्यादिश्रुतिः कारणतायां परिणामव्याप्यता च विवादग्रस्तेत्याशङ्कायामाह—

सम्बन्धानुपपत्तेश्च ।२।२।३८।।

ननु यो विश्वकृत् स एव पतिरिति श्रुतिराह तत्र प्रपञ्चो मायिकश्चेदनुपपन्नं ब्रह्मणस्तत्कारणत्वं, न च सूत्रकुलालयोरिव मायाब्रह्मणोर्द्वयोरेव कारणत्वम्; एवं चेद् गतं चिन्मात्रकारणतया, इति चेन्न मायाया ब्रह्मसत्ताभिन्नसत्ताविरहेण चिन्मात्रकारणतायामेव पर्यवसानादित्येवं प्राप्तेऽभिधीयते—सम्बन्धानुपपत्तेश्चेति । मायाया ब्रह्मसत्ताभिन्नसत्ताकत्वाभावेऽभ्युपगम्यमाने तयोरभेदो वा भेदाभेदो वा सम्बन्धो वाच्यः । तयोः सम्बन्धयोरनुपपत्तेर्मायाया ब्रह्मात्मकत्वासम्भवात्, मायिकप्रपञ्चस्य न ब्रह्मकारणकत्वम् । तस्माद् ब्रह्मणि विश्वकर्तृत्वाभावात् विश्वकर्तृ निष्ठपतित्वम् अद्वितीये

चिन्मात्रे ब्रह्मणि न युक्तम्। ननु कथं मायाब्रह्मणोः तादृशसम्बन्धानुपपत्तिरिति चेन्न तमःप्रकाशयोरिव बाध्यबाधकात्मनोऽप्रमारूपयोर्मायाब्रह्मणोः प्रोक्तसम्बन्धद्वयासम्भवात्। अथ मा भूतां प्रोक्तसम्बन्धौ मृत्कुलालयोरिव भेदसम्बन्धस्तूपपद्यते, न चैवं चिदेककारणत्वसिद्धान्तभङ्ग इति वाच्यम् मायाया द्वारकारणत्वाभ्युपगमात्, वदन्ति च—अकारणमपि द्वारं कार्येऽनुगच्छति मृद इव तद्गतश्लक्ष्णत्वादेरपि घटेऽनुगमदर्शनादिति। ततश्च न चिदेककारणत्वसिद्धान्तभङ्ग इति चेत् प्रपञ्चस्योपादानासिद्धिः, ब्रह्मैवोपादानमिति चेत् तस्य मायिकत्वव्यवहारानुपपत्तिः न हि मृन्मयो घटो दण्डकारणकोऽपि दाण्डिक इति वा दण्डमय इति वा व्यवह्रियते। ननु सत्यैव माया किन्तु ब्रह्मशक्तिस्वरूपा शक्तिशक्तिमतोरभेदाच्च नाद्वैतसिद्धान्तभङ्ग इति चेदाख्यायतामभेदोऽयं वास्तव औपचारिको वा ? आद्ये ब्रह्मेति मायेति च पर्यायशब्दौ चिन्मात्रार्थौ स्याताम्। यथा घटः कलश इति कम्बुग्रीवावदर्थौ। द्वितीये अद्वैतसिद्धान्तभङ्गस्तदवस्थः, नहि मञ्चाः क्रोशन्तीत्यादौ मञ्चादिशब्दानां मञ्चस्थपुरुषेषूपचारेऽपि वस्तुतः पुनर्न मञ्चाः पुरुषा भवन्ति पुरुषा वा मञ्चाः। अथ सदसद्विलक्षणा माया, इति चेत् तादृक्पदार्थासिद्धेः स्याद्वादतुल्यतया प्रतिक्षेप्यत्वाच्च। नन्वेवं स्वसिद्धान्ते चिदचितोः सम्बन्धः कथमुपपद्यते ? तयोरपि स्वरूपतो विरोधात्, इति चेन्न प्रदीपपटयोरिव विभिन्नस्वरूपयोरपि तयोरन्तःपृथिक्स्वरूपविरोधाभावात्। स्वरूपतो

विरुद्धे हि वस्तुनी जलानलवत् तमःप्रकाशवच्च न सह भवतः, प्रदीपघटौ तु ज्योतिरज्योतिःस्वरूपावपि सह भवतस्तस्मात्तौ विरुद्धस्वरूपावेवंविधे हि चिदचितौ विज्ञायेते। तस्मात्तयोः सम्बन्धो नानुपपन्नइति तत्त्वम् ।२।२।३८।

ननु मा भूतां मायाब्रह्मणोः प्रोक्त सम्बन्धौ, अधिष्ठेयाधिष्ठातृभावस्तु सम्भवति, राज्ञो राज्याधिष्ठातृत्ववत्, यथा च ब्रह्मणाधिष्ठिता माया कुलालाधिष्ठिता मृत्स्ना घटमिव प्रपञ्चमिमं प्रादुष्करोति, स्मर्यते च घटोत्कचादीनां मायया चतुधारमसृष्टिः सिंहव्याघ्रादिसृष्टिश्च, यदि नाम क्षुद्रमायया वराकेण राक्षसेनैवं कर्त्तुं शक्यते तदा सर्वातिशायिना ब्रह्मणा स्वमायामधिष्ठाय विनैव परिणामं जगन्निर्मितमिति किमसम्भाव्यम्? तत्पतित्वे तत्कारणत्वे च कस्तावदनुयोगावकाश इत्याशङ्क्य प्रत्याचष्टे—

अधिष्ठानानुपपत्तेश्च ।२।२।३९॥

'अधिष्ठानं' = ममेदमित्यभिमानः तत्पूर्वकवद्विनियोगो वा; स च तदधिष्ठात्रधिष्ठेयगुणसापेक्षः, अधिष्ठातृगुणः ज्ञानेच्छाकृतिलक्षणः. अधिष्ठेयगुणः उपादानयोग्यत्वम्, ब्रह्मकर्तृकं तु मायायास्तथाविधमधिष्ठानं नोपपद्यते ब्रह्मणो गुणाभावात्, 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेरप्रत्यक्षायाश्च मायाया उपादानयोग्यताया वाधितत्वाच्च। अत्र पतित्वकारणत्वयोरयुक्तत्वे अधिष्ठानानुपपत्तेर्हेत्वन्तरत्वबोधकश्चकारः समुच्चयार्थः ।२।२।३९।

अत्राशङ्क्योत्तरयति—

करणवच्चेन्न भोगादिभ्यः ।२।२।४०॥

मा भूत् शुद्धब्रह्मकर्तृकमधिष्ठानम्, मा च जीवकर्तृकम्, जीवस्य मायाधीनत्वात्; मायोपाधिकब्रह्मकर्तृकं तद् भवतु, ननु मायाया अश्रुतत्वेनाप्रत्यक्षत्वेन चोपादानयोग्यत्वाभावात् कथमधिष्ठानम्? अत्राह 'करणवत्' जीवो यथा करणानि इन्द्रियाणि अप्रत्यक्षाण्यपि अनुपादानान्यपि अधितिष्ठति, तथा मायोपाधिकं ब्रह्म ईश्वरपदार्थो मायामधिष्ठितः, ततश्च प्रपञ्चसृष्टिरिति पतित्वं जगत्कारणत्वं च तस्योपपन्नं, न चेश्वरो ब्रह्मणोऽतिरिच्यते इत्याशङ्का चेदित्यन्तप्रतीकार्थः, तत्रोत्तरं नेति, ईश्वरकर्तृकमधिष्ठानं 'न' न घटत इत्यर्थः। भोगादिभ्यः, भोगाभ्युदयादिप्रसङ्गात्। जीवस्य करणाधिष्ठातृतया करणप्रयुक्तसुखदुःखसाक्षात्कारलक्षणो भोगः, सुखातिरेकलक्षणोऽभ्युदयो दुःखातिरेकादिश्च स्युः, मायायास्तत्साधकत्वात् ।२।२।४०।

ननु जीवस्य पारतन्त्र्यादसर्वज्ञत्वान्निकृष्टोपाधिकत्वाच्च भोगादयो भवन्तु कथं स्वतन्त्रस्य सर्वज्ञस्योत्कृष्टोपाधिकस्येश्वरस्येत्याशङ्कायां दोषान्तरमाह—

अन्तवत्त्वमसर्वज्ञता वा ।२।२।४१॥

ननु मायोपाधिकब्रह्मण ईश्वरत्वमुक्तं तदेव न युज्यते, उपाध्युपाधेययोर्बाध्यबाधकत्वासम्भवात् अथ ब्रह्मणः प्रकाशैकस्वरूपं तिरोदधत्या विशुद्धसत्त्वप्रधानया माययावच्छिन्नत्वेन

तदुपाधिकत्वं सम्भवतीत्येवं प्राप्ते उच्यते—यदुक्तं स्वरूपतिरोधानं तद्धि विद्यमानस्य प्रकाशस्य विनाशो वा ? मेघेन सूर्यस्येव स्वशक्त्यावरणं वा ? आद्ये मन्त्ववश्यं विनाशित्वं ब्रह्मणः प्रसज्यते स्वरूपनाशात्। अन्त्ये ईश्वरस्य असार्वज्ञ्यापत्तिः, आवृतविषयकज्ञानाभावादित्यनुपपन्नो विवर्त्तवादः ।२।२।४१।

वैष्णवमतं निरस्यति—

( उत्पत्त्यसम्भवाधिकरणम्—८। )

उत्पत्त्यसम्भवात् ।२।२।४२॥

पाञ्चरात्रिका वैष्णवा मन्यन्ते—भगवानेवैको वासुदेवो निरञ्जनो ज्ञानस्वरूपः परमार्थतत्त्वम्। स एव वासुदेवव्यूहः सङ्कर्षणव्यूहः प्रद्युम्नव्यूहोऽनिरुद्धव्यूहश्चेति चतुर्विधो व्यवतिष्ठते। तत्र वासुदेवः परमात्मा, सङ्कर्षणो जीवः, प्रद्युम्नो मन, अनिरुद्धश्चाहङ्कारः। अत्र नास्माकमस्ति कश्चिदपि विवादः। अनन्तरमुच्यते वासुदेवात् सङ्कर्षण उत्पद्यते, सङ्कर्षणाच्च प्रद्युम्नः, प्रद्युम्नाच्चानिरुद्ध इति, तत्प्रत्याचक्ष्महे—न वासुदेवसञ्ज्ञकात्परमात्मनः सङ्कर्षणसंज्ञकस्य जीवस्योत्पत्तिर्भवति। न जायते म्रियते वा विपश्चिदिति श्रुत्या जीवस्योत्पत्तिनिषेधात् ।२।२।४२।

हेत्वन्तरमाह—

न च कर्तुः करणम् ।२।२।४३॥

चो हेतौ कर्त्तुः करणं नोत्पद्यते यत इत्यर्थः एवदुक्तं भवति, सङ्कर्षणप्रद्युम्नानिरुद्धानां क्रमेण जीवमनोऽहङ्काराख्यानामुत्प-

त्तिस्तत्प्रक्रियोक्ता न सम्भवति, यतः जीवः कर्त्ता स सङ्कर्षणश्चेत्, तस्मात् प्रद्युम्नाख्यं मनो नोत्पत्तुमर्हति, मनसः करणत्वात्, नहि करणं कर्त्तुरुत्पद्यमानं दृश्यते, व्यापारस्तु कर्त्तृजन्यो भवति। स्थितमेव कुठारादिकं तक्षादिः कर्त्ता व्यापारयति। न च नायं नियमः—यद् यत्करणं न तत् तत्कर्त्तृजन्यमिति, कुठारादावेव व्यभिचारात्, दृष्टं हि कर्म्मारः कुठारादिकमुत्पाद्य तेनैव छिनत्तीति, इति वाच्यम्, कुठारत्वेनोत्पद्यमाने कार्ये करणान्तरस्यापेक्षणीयतया दृष्टान्तासिद्धेः एतेनैतदुक्तं भवति, कर्म्मारो हि कुठारादिरूपे कार्ये करणान्तमपेक्षते, तेन करणेन कुठारादिकमुत्पाद्य तेन कुठारादिना च्छेदनं सम्पादयति, इह तु मनस उत्पादने सङ्कर्षणस्य किं करणं भविष्यति, यदि स्वयमकरणोऽपि सङ्कर्षणो मनो निर्म्मीयात्, कार्यान्तरमप्यकरण एव निर्म्मास्यति, इति करणस्य मनसः कर्त्तुः सङ्कर्षणादुत्पत्तिरयुक्तेति। अथवा 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इतिश्रुतेः परमात्मन एव मनस उत्पत्तिर्न तु कर्त्तुर्जीवस्वरूपात्सङ्कर्षणादित्यर्थः ।२।२।४३।

अथ सङ्कर्षणादीनां नोत्पत्तिः, उत्पद्यत इति प्रयोगस्तु तेषामुपाधिसम्बन्धग्रहणबोधनार्थः, वास्तवस्वरूपं तु तेषां वासुदेवः, स एकश्च चतुरात्मेति तत्सिद्धान्तात्, इति पूर्वपक्षमाश्रित्य समाधानसूत्रमाह—

विज्ञानादिभावे वा तदप्रतिषेधः ।२।२।४४।

विज्ञानस्यादिर्विज्ञानादिः परमात्मा ब्रह्म, यतस्तैत्तिरीयके

ब्रह्म प्रकृत्य सृष्टिप्रक्रियायां 'सच त्यच्चाभवत्, विज्ञानं चाविज्ञानञ्च' इति श्रूयते। 'वा' पक्षान्तरे जीवमनोऽहङ्कारस्वरूपत्वं वस्तुतः सङ्कर्षणादीनां नास्तीति पक्षाभ्युपगमे, 'विज्ञानादिभावे', तेषां परमात्मस्वरूपत्वे 'तदप्रतिषेधः' तस्य उत्पत्त्यसम्भवदोषस्य अप्रतिषेधः, अनुद्धारः, पाञ्चरात्रिकप्रक्रियायां सङ्कर्षणादीनां या उत्पत्तिरुच्यते तस्या असम्भव एव, परमात्मनो नित्यत्वेन उत्पत्तिविनाशरहितत्वात्, ननूक्तमेव उपाधिमन्वन्धमात्रमहगुणस्योत्पत्तिरूपत्वमिति। मैवम्। उपाधेर्देहादेरुत्वविकल्पासहत्वात्, अयमुपाधिर्देहो वा स्यात्, देहभिन्नः कश्चित्पदार्थो वा स्यात्? नाद्यः तस्य जीव इति सामान्यसञ्ज्ञाया असम्भवात्, न हि जीवात्मनो देवनरपशुतिर्यगादिबहुदेहावस्थितस्य बहुरूपस्य एकेन सङ्कर्षणदेहेनाधिष्ठानं युज्यते। न चाधिष्ठातृत्वम् अधिपतित्वं राज्ञ इव प्रजानामितिवाच्यम्, तस्य जीवत्वेनाभिधानासङ्गतेः, न हि राज्ञः प्रजानाञ्चाभेदस्तत् प्रयोगो वा दृश्यते। अथाकाशप्राणादिशब्दानां ब्रह्मण्यभेदप्रयोगवदयमुपपद्यतामिति चेन्न तत्राकाशादिशब्दस्य श्रुतिप्रामाण्येन तत्परत्वम्, पाञ्चरात्रसिद्धान्ते तु जीवपरमात्मनोरत्यन्तभेदात् तदनुपपत्तेः। 'न द्वितीयस्तत एव, उपाध्यनवच्छिन्नपरमात्मनो जीवस्य च भेदात्। तस्मादयुक्तमस्मिन् प्रकारे पाञ्चरात्रमतम्। न च—'सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः।' इति श्रीमाध्यधृतवचनात्पञ्चरात्रस्य वेदवत्स्वतःप्रामाण्येन तन्मतनिरासो न युज्यते इति

शङ्क्यम्, पाञ्चरात्रिकाणां पाशुपतमतनिरासन्यायस्यात्रापि जागरूकत्वात्। स च न्यायो यत्परः शब्दः स शब्दार्थ इति, तथा चाधिकारिभेदादुपादेयायां वासुदेवस्य परमात्मरूपेणोपासनायां पञ्चरात्रस्य तात्पर्यात्, पशुपतेरुपासनायां च पाशुपतशास्त्रस्य तात्पर्यात् तत्प्रामाण्यस्यात्रानिरासात्, एवमेव सांख्ययोगनिरासः समर्थनीयश्चिदचितोर्नित्यत्वे सांख्यस्य मननादौ योगशास्त्रस्य च साध्यसाधनतया तात्पर्यस्य सत्त्वेन तत्र तस्यानिरासात्। अयमेव प्रकार उत्तरस्मिन्नधिकरणेऽप्यनुसरणीयः ।२।२।४४।

पाशुपतादिमतं निरस्यति—

( विप्रतिषेधाधिकरणम्—१० । )

विप्रतिषेधाच्च ।२।२।४५।

विप्रतिषेधः, श्रुत्यादिप्राप्तस्य विरुद्धवचनम्। तस्मात् पाशुपतादिमतं निरस्तमिति शेषः। पाशुपतमते निरपेक्षः पशुपतिर्जगत्कारणं तच्छास्त्रोपदिष्टेन विधिना तदुपासनं दुःखान्तं घटयति। दुःखान्तश्च द्वेधा निरात्मकः सात्मकश्च। तत्र सर्वदुःखानामत्यन्तोच्छेदो निरात्मकः, सात्मकश्च प्रकृष्टदृक्शक्तिक्रियाशक्तिलक्षणमैश्वर्यम्। उपासनप्रकारे तदीयदीक्षाप्रवेशः प्रथमः, कापालव्रतश्चान्त्यम्। ययोः प्रशस्तिः—'दीक्षाप्रवेशमात्रेण ब्राह्मणो भवति तत्क्षणात्। कापालं व्रतमास्थाय यतिर्भवति मानवः।' इति श्रीभाष्यधृतवचनेनोक्ता। विस्तरस्तु शैवा-

गमादेरवगन्तव्यः। निरपेक्षस्य पशुपतेर्जगत्कारणत्वे वैषम्य-नैर्घृण्ये प्रसज्येयाताम्, जीवादृष्टसापेक्षत्वे तु तद्वशाज्जीवानां वैषम्यम्,—ननु व्यधिकरणमदृष्टं कथमीश्वरेणापेक्ष्येत इति चेन्न व्यधिकरणयोः कार्यकारणभावासम्भवेन, निरपेक्षस्य पशुपतेर्जगदधिकरणावृत्तितया कारणत्वासम्भवाद् यदि तस्य जगद् व्यधिकरणत्वं सम्बन्धविशेषमादाय निरस्येत तदा
१ स्वज्ञानविषयत्वसमवायसम्बन्धाभ्यां जीवान्तर्भावेण पशुपत्य-दृष्टयोः सामानाधिकरण्यस्य न्यायवैशेषिकमते सूपपादनीयत्वात्। तस्मान्निरपेक्षजगत्कारणतावादस्तर्कविरुद्धवचनम्। मानवमात्रस्य पाशुपतदीक्षामात्रेण ब्राह्मण्यवचनं कापालव्रतेन यत्याश्रमश्चैतद्द्वयं वेदविरुद्धम्, ईश्वरकर्तृकब्राह्मणसृष्टिश्रुतेः प्रव्रज्यातद्विधिश्रुतेश्च जागरूकत्वात्, तामिर्मानवसामान्यस्य ब्राह्मण्यादिप्राप्तेर्बोधात्। 'वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिश्रुतेः, 'तमेव विदित्वातिमृत्युमेति' इत्यादिश्रुतेश्च शैवागमसम्मतमोक्षोपायस्यानवगमात्। अत एव—

'यथा काञ्चनतां याति कांस्यं रसविधानतः।
तथा दीक्षाविधानेन द्विजत्वं जायते नृणाम्।'

इत्यत्र दीक्षापदस्य वैष्णवदीक्षापरतया वैष्णवसम्प्रदायग्रन्थ-भूतवचनस्यास्य शैवदीक्षाप्रशंसिवचनानुकारेण केनचिदर्वाचीनेन कल्पितत्वमनुमीयते परमप्रामाणिकवैष्णवाचार्यभगवद्रामानुजपादैस्तदनुल्लेखात्। तत्सत्त्वे तु शैवमतनिरासहेतुवद् वैष्णवमतनिरासहेतोः सत्त्वेन तदनुद्धारे तेषां सत्योपादेयतोक्ति-

रसङ्गता स्यात्। सूत्रे चकारश्च अनिराकृतानां वेदबाह्य-दर्शनानां निरासद्योतकः, तत्रापि विप्रतिषेधादित्येव हेतुः, श्रुतिविरुद्धत्वादित्येव पर्य्यवसितो हेतुः; प्रक्रान्तविचारविराम-द्योतकश्च। पाशुपतादिमतम् उपादेयं नवा ? इति संशये, उपादेयम्—युक्तियुक्तत्वात्तत्तदागमप्रामाण्याच्चेति पूर्वपक्षः। अत्रोत्तरम्, नोपादेयमिति, युक्तीनामाभासत्वात्, श्रुतियुक्तिविरुद्धत्वेन तत्तदागमानामप्रामाण्याच्चेति। एवमस्याधिकरणत्वं सम्पादनीयम्। अनया दिशा चानुक्ताकाराणि अधिकरणान्तराण्यप्युपपादनीयानि, तर्कपादे श्रुतिवाक्यं प्रायेण न विचारार्हमित्यवधेयम्। एवं निरस्तं परमतजातमित्यास्तां विस्तरः।२।२।४५।

इति ब्रह्मसूत्रशक्तिभाष्ये विरोधपरिहाराख्ये द्वितीयाध्याये तर्काश्रयो नाम द्वितीयः पादः।

—

## द्वितीयेऽध्याये—तृतीयः पादः ।

( वियदधिकरणम्—१ । )

### न वियदश्रुतेः ।२।३।१॥

यथा स्वाभ्युपगमविरोधदोषः सांख्यमतोपरि स्वयमुपन्यस्त,
तथा परैः स्वमतोपर्यर्पितो सोपन्यास्तीत्येवदर्थं तृतीयपादारम्भः ।

पर आह—श्रुतिप्रमाणकानां भवतां ब्रह्मोपादानकं जगदिति
ब्रुवतामाकाशमुत्पद्यत इत्यभ्युपगमः स च विरुध्यते, कुतः, यतो
वियन्नोत्पद्यते, 'वियत्' आकाशं 'न' उत्पद्यत इति शेषः, तत्र
हेतुः अश्रुतेः 'सृष्टिक्रमे तस्याश्रवणात्, सृष्टिक्रमश्च च्छान्दोग्ये
'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्याम् प्रजा-
येयेति तत्तेजोऽसृजत, तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽ-
सृजत' इत्यत्र श्रूयते । ( छा० ६।२।२-३ ) अत्र च सर्वो ब्रह्मणः
प्रथम तेजः सृष्टिरुक्ता ततश्चापामद्भ्यश्चान्नसंज्ञयोक्तायाः पृथि-
व्या इति, नात्राकाशसृष्टेरस्ति गन्धोऽपि । तस्मादाकाशसृष्ट्य-
भ्युपगमो दर्शनस्यास्य स्वसिद्धान्तमूलभूतश्रुत्या विरुध्यत इति
पर्यवसन्नम् ।२।३।१।

इमं पक्षं व्यावर्त्तयति—

### अस्ति तु ।२।३।२॥

तु शब्दः पक्षव्यावृत्तिद्योतकः। छान्दोग्यश्रुतौ आकाशसृष्टे-
रप्रतिपादनेऽपि श्रुत्यन्तरे तत्प्रतिपादनमस्ति, तथाच मुण्डको-

पनिषदि पुरुषं प्रकृत्य 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी।' इति एवञ्च, छान्दोग्यश्रुतौ तेजःपदमजहत्स्वार्थलक्षणया मुण्डकाम्नातप्राणादिज्योतिरन्तस्य बोधकम्। तस्मादश्रुतेरित्यसिद्धो हेतुः ।२।३।२।

इत्युक्ते वैशेषिक आह—

## गौण्यसम्भवात् ।२।३।३॥

जायत इत्युत्पत्तिश्रुतिः 'गौणी' लक्ष्यार्थप्रतिपादिका शब्दहेतुकानुमानगम्यत्वेनाभिव्यक्तिपरेति यावत् न तु उत्पत्तिरूपमुख्यार्थपरा। तत्र हेतुः 'असम्भवात्' जायत इत्यत्र जनेरित श्रुत्यन्तरे सम्भूतेरपि मुख्यार्थपरत्वस्यासम्भवात्। असम्भवश्च नियमविरोधादागमविरोधाच्च नियमविरोधस्तावदद्रव्यमनेकद्रव्यञ्चेति त्रिविधं खलु द्रव्यं भवति, अद्रव्यं नित्यमनेकद्रव्यं जन्यम्, अद्रव्यद्रव्यं निरवयवम्। समवायिकारणमन्तरेण भावकार्य्यानुत्पादनियमात्, परं सावयवम्। समवायिकारणाभावेऽपि द्रव्योत्पत्त्यभ्युपगमे नियमविरोधः आगमविरोधस्तावत्, आम्नायते हि तैत्तिरीयके 'सत्यं ज्ञानमनन्तं' ब्रह्मेत्युपक्रम्य तस्माद् वा एतस्मादाकाशः सम्भूतः आकाशाद् वायुर्वायोरग्निः रग्नेरापः, अद्भ्यः पृथिवीति' ( तै० २।१ ) अत्र दर्शितमुण्डकश्रुतिवस्य जायतेरिव सम्भवतेर्मुख्यार्थत्वे छान्दोग्यश्रुतिविरोधो दुर्वारः, अत्र हि तेजसः साक्षाद्वायुसम्भूतत्वम्, छान्दोग्यश्रुतौ साक्षाद् ब्रह्मसम्भूतत्वमिति भेदात्। न तावदेवं नाम

मुण्डकच्छान्दोग्ययोरेकवाक्यत्वमपि दर्शितप्रकारमुपपद्यते, तैत्तिरीयकाविरोधात्। जायत इति मुण्डकश्रुतौ सम्भूत इति तैत्तिरीयकश्रुतौ च जनेः सम्भवतेश्च मुख्यार्थासम्भवेन लाक्षणिकार्थस्वीकारे तु नास्ति कश्चिद्विरोधः। ब्रह्मणः शब्दसृष्ट्या यथा नित्यस्याप्याकाशस्यानुमानगम्यत्वरूपाभिव्यक्तिस्तथा ब्रह्मसम्भवस्यापि तेजसो वायुहेतुकत्वविरूपाभिव्यक्तिः प्रसिद्धैव। नहि निर्धारिते प्रदेशे पद्विर्दीप्यते। तस्मादश्रुतेराकाशं नोपपद्यत इति स्थितम् ।२।३।३।

उत्पत्तिश्रुतिः केवलमसम्भवादेव न गौणी, किं तर्हि —

## शब्दाच्च ।२।३।४।।

असम्भवादिस्युक्तहेतोरन्यत्वद्योतकोऽयं चकारः 'शब्दात्' श्रुतेः। 'वायुश्चान्तरिक्षञ्चैतदमृतम्' इति ( बृ० २।३।३ ) 'आकाशवत् सर्वगतश्च नित्यः' इति च श्रूयते। आत्मनो नित्यत्वेऽस्योपमानत्वं कस्तमनित्यं ब्रूयात्। यदि प्रागुक्तमुण्डकतैत्तिरीयकश्रुत्योर्जनिसम्भूत्योर्मुख्यार्थकत्वं स्यात्, अत्रोपदर्शितश्रुतिद्वयं व्याकुप्येत ।२।३।४।

नन्विदमयुक्तं, 'स प्राणमसृजत' इति ( प्रश्न० ६।४ ) 'तत्तेजोऽसृजत' इति चैवमादिश्रुतेः, मुण्डकश्रुतौ जायत इत्यस्य तैत्तिरीयकश्रुतौ सम्भूत इत्यस्य च मुख्यार्थकत्वमभ्युपगन्तव्यम्, एकस्य शब्दस्य गौणमुख्यार्थकत्वे युगपद् वृत्तिद्वयविरोधापत्तेरित्याशङ्कासमाधानायाह—

## स्याच्चैकस्य ब्रह्मशब्दवत् ।२।३।५॥

'स्याच्च' भवेदपि 'एकस्य' जनेः सम्भूतेर्वा गौणमुख्यार्थपरत्वमिति शेषः, 'ब्रह्मशब्दवत्' यथा 'सर्वे वेदा यत्पदमामनन्ति' इत्युपक्रम्य 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्' इत्याम्नाय 'एतद्ध्येवाक्षरं ब्रह्म' इति 'एतदालम्बनं श्रेष्ठम्' इति च काठकमन्त्रवर्णस्थब्रह्मशब्दो गौण्या मुख्यया च वृत्त्या प्रणवतद्वाच्योभयपरस्तद्वत् । अक्षरत्वालम्बनत्वयोः प्रणवधर्म्मत्वात् सर्ववेदाम्नातपदत्वादीनां तदर्थधर्म्मत्वाच्च द्वयोरेव तत्र प्रत्येतव्यत्वात् । आचार्य्यचरणास्तु 'तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्म' ( ३।२ ) इत्यस्मिन्नधिकारेऽन्नादिषु गौणः आनन्दे च मुख्यः । यथा च तपसि ब्रह्मज्ञानसाधने ब्रह्मशब्दो भक्त्या प्रयुज्यतेऽञ्जसा तु विज्ञेये ब्रह्मणि तद्वदिति । रामानुजाचार्य्यचरणाश्च यथा ब्रह्मशब्दः 'तस्मादेतद् ब्रह्मनामरूपमन्नं च जायते' इत्यत्र प्रधाने गौणतया प्रयुक्तस्तस्मिन्नेव प्रकरणे 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते' इतिब्रह्मणि मुख्यतया प्रयुज्यते तद्वदिति व्याचक्रुः । तदुभयत्रैव यद्यपि श्रूयमाणश्रुतिकब्रह्मशब्दः, अत्र च सकृदुच्चरितमुत्पत्त्यर्थकक्रियापदं तत्र युगपद्वृत्तिद्वयविरोधो नास्ति तथापि तत्र ब्रह्मशब्दस्य श्रूयमाणावृत्तेर्यथार्थद्वयमत्र तद्वदावृत्त्यैव कल्पनीयमर्थद्वयमित्येव तात्पर्य्यमवधेयम् ।२।३।५।

एवमाकाशस्यानुत्पत्तौ प्राप्तायां सिद्धान्तमाह—

प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ।२।३।६॥

अनेः सम्भवतेश्च आकाशपक्षेऽभिव्यक्तिरूपगौणार्थकत्व-स्वीकारे तस्या अभिव्यक्तेः शब्दहेतुकानुमानगम्यतारूपायाः फलतः 'शब्देभ्योऽव्यतिरेकात्'= भिन्नत्वाभावाद् वैशेषिकमते ब्रह्मनिमित्तकाकाशसमवायिकारणकशब्दोत्पत्तौ पर्यवसानात् प्रतिज्ञाहानिः स्यादिति शेषः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा हीयेत, आकाशस्य ब्रह्मप्रकृतिकत्वाभावात्, प्रकृतिज्ञानेन यावद्विकारज्ञानस्य मृदादिदृष्टान्तेनोपपादितस्याकाशे बाधा-दितिभावः ।

यद्वा, नन्वेवम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया हानि-प्रसङ्गः, आकाशस्य ब्रह्मप्रकृतिकत्वविरहादित्याशङ्कायां वैशेषिक आह—प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ।

अभिव्यक्तेः इत्यादिः, अभिव्यक्तेः शब्देभ्योऽव्यतिरेकात् प्रतिज्ञाया अहानिः हानिर्नास्तीत्यक्षरार्थः ।

शब्दहेतुकानुमानगम्यत्वरूपायाः अभिव्यक्तेः फलतः शब्देभ्योऽव्यतिरेकात्, अभिन्नत्वाभावात्; शब्दसत्तायोग-सत्ताकत्वादितियावत् कार्य्यमात्रकर्तृब्रह्मज्ञानेन शब्दज्ञानं तेन च लिङ्गेनाकाशज्ञानमित्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया हानिर्नास्तीति भावः । न चैवं मृदादिदृष्टान्तेन बुबोधयिषितं प्रकृतिविज्ञानाद् यावद् विकारविज्ञानं नोपपद्यते, आकाशस्य विकारत्वाभावात्, इति वाच्यम्, कार्य्यकारणयोरन्यतरविज्ञा-

नेन कारणकार्य्यान्यतरविज्ञानस्यैव तत्र बुबोधयिषितत्वात् । अन्यथा यथा 'सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' इत्ययं दृष्टान्तो नोपपद्येत, नखनिकृन्तननाम्नो नखच्छेदनशस्त्रस्य विकाररूपस्य सर्वकार्ष्णायसप्रकृतित्वाभावात् । यद्यपि क्वचित् सामान्यलक्षणासन्निकर्षेण सर्वेषां सामान्यवतामिव योगजसन्निकर्षेणालौकिकप्रत्यक्षं वस्तुमात्रस्य भवतीत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञार्थ., तस्य च हानिर्नास्त्येव, तत् कथं शङ्का वा समाधानं वेत्युच्यते, तथापि शब्दाश्रयतया सिद्धेन आकाशे परमात्मसाधारणद्रव्यत्वेन सामान्येनालौकिकप्रत्यक्षमाकाशस्यापि घटादौ द्रव्ये चक्षुःसन्निकर्षाद् भवति, योगस्यापि नास्ति तत्रापेक्षेति प्रतिज्ञाहानिप्रसङ्गदोषोद्भावनमविवेकविजृम्भितमित्यावेदयितुं शब्दमन्तर्भाव्याकाशस्य विज्ञानविषयत्वप्रतिपादनमिति तदाशयः। वैशेषिकमते एकविज्ञानेन योऽयं सर्वविज्ञानोपपादनप्रकारः, सः 'अश्रुतं श्रुतं भवती'त्यत्र श्रु धातोः शाब्दबोधपरत्वेन विज्ञानस्य अपरोक्षज्ञानविशेषरूपतायां च, नोपपद्यते। इति तु वेदान्तमतरहस्यम्। तथापि तदनुद्घाट्य सुमहेण प्रकारान्तरेण–सन्मतमनन्तरमेव निरसिष्यतीत्यवसेयम् ।२।३।६।

ननु नास्मन्मते प्रतिज्ञाहानिः, अद्यापि योगेन साक्षात्कृते सर्वं विज्ञातं भवति, यथा सामान्यलक्षणासन्निकर्षेण व्यवहितादीनामपि सामान्यवतां विज्ञानं तद्वत्, दृष्टान्तोऽपि तत्र तथा, ननु प्रकृतिविकारमात्रस्थले, तथा सति नखनिकृन्तनदृष्टान्तो नोपपद्येत, तस्मादाकाशस्यानुत्पत्तिकत्वे न किञ्चिद्

बाधकम्। प्रथमवर्णकपक्षे इत्याशङ्कायां वैशेषिकमतानुप्रवेशेनाह—

यावद् विकारं तु विभागो लोकवत् ॥२।३।७॥

आचष्टां वैशेषिक, आकाशेन वाय्वादेर्विभागो वर्तते न वा?—द्वितीयकोट्यभ्युपगमे, आकाशस्य वाय्वादिसमवायिकारणत्वाभ्युपगमेन स्वसिद्धान्तभङ्गः। प्रथमकोट्यभ्युपगमे तूच्यते, तुरवधारणे, 'यावद्विकारं ' यावन्तो विकारास्तावत्स्वेव न तु तदन्यत्र विकारादन्यत्र अविकारविकारयोरित्यर्थः विभागः स च संयोगप्रतिद्वन्द्वी गुणः, लोकवत् लोके यथा दृश्यते घटपटमठेषु वापीकूपतडागेषु कटककुण्डलहारेषु विकारेषु नियतो मिथो विभागः, तद्वदभ्युपगम्यते भवताकाशस्य घटपटादेर्विभागः, कथं विकारत्वं न साधयेत्। न च विभागवत्सु पार्थिवादिपरमाणुषु विकारत्वबाधाद्व्यभिचार इति वक्तव्यम्, स्वमते विकारत्वस्य तत्रापि सत्त्वेन बाधासम्भवात् अनणुत्वे सतीति हेतुविशेषणाद्वा व्यभिचाराभावात्। नन्वेवमपि चिन्मात्रस्याप्रकृतित्वेन विभागसम्भवादविकारत्वेन च व्यभिचार इति चेन्न चिन्मात्रस्य निर्गुणत्वेन विभागानाश्रयतया व्यभिचारविरहात् प्रकृतित्वप्रयोजकसत्तायाश्चित्साधारणतया विकाराद् विभागासम्भवाच्च। विकारः कार्यमित्येकोऽर्थः। इति पूर्वसूत्रस्य प्रथमवर्णकानुवृत्तिं भाष्यमेतत्। द्वितीयवर्णकपक्षे तु—एवमनुत्पत्तावाकाशस्य साधितायां सिद्धान्तसूत्रम्—'यावद् विकारं [illegible] विभागो लोकवत्।' तुशब्दः पूर्वपक्षव्यवच्छेदकः। व्याख्यानं तु

यथाक्रमत्रापि ग्राह्यम्। तथा च मुण्डकश्रुतितैत्तिरीयकश्रुती मुख्यार्थकजनिसंभवतिप्रयोगमावहतः, तस्मात् खाऽभ्युपगताकाशोत्पत्तिः श्रुतिप्रमाणसिद्धा, छान्दोग्यश्रुतौ तदनुपादानं च रूपवत्सृष्ट्यभिप्रायेण, 'त्रीणि रूपाणीत्येव सत्यम्' इत्युत्तरत्राम्नानात्। रूपवद्द्रव्येषु तेजसः प्राथम्यं सर्वसम्मतमिति वर्णकद्वयतात्पर्यम् ।२।३।७।

अतिदेशेन वायोरुत्पत्तिमत्त्वं प्रतिपादयति—

( मातरिश्वाधिकरणम्—२। )

## एतेन मातरिश्वा व्याख्यातः ।२।३।८।।

'एतेन' वियदधिकरणेन 'मातरिश्वा' वायुः 'व्याख्यातः' विचारितः, छान्दोग्यश्रुतौ तेजःपूर्वकसृष्टिक्रमे वायूत्पत्त्यनभिधानं मुण्डकश्रुतौ तदभिधानं चेति द्वैधे वायोरनुत्पत्त्यविरोधिनी शब्दलिङ्गकानुमानगम्यतारूपाभिव्यक्तिस्वरूपा गौण्युत्पत्तिरभ्युपगम्या, शब्दं प्रति तस्य निमित्तकारणत्वात्। अन्यथा परमाण्वात्मकवायोरपि वायुत्वसामान्येन प्राप्त्या तस्य चाद्गुण्यरवैरप्युत्पत्तिः प्रसज्येत, किं च तेजसः साक्षाद्ब्रह्मकारणकत्वमामनन्त्याश्छान्दोग्यश्रुतेस्तस्यैव साक्षाद्वायुकारणकत्वमभिदधानया तैत्तिरीयकश्रुत्या विरोधो दुर्वारः स्यात्। इत्येवं वियदधिकरणोक्तविचारक्रमे, 'प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः' इत्ययं वाय्वनुत्पत्तिपक्षे दोषः पूर्वोपदर्शितप्रथमवर्णकानुसारेण योजनीयः, यदि च योगजप्रत्यक्षेण प्रतिज्ञाया अहानिरिति

द्वितीयवर्णकमुपादाय वैशेषिकमतमेव समर्थ्यते, तदा 'यावद्विकारमित्यादि सूत्रेणैवोत्पत्तिरुपपादनीया। तत एव 'गौण्यसम्भवात्' इतिसूत्रोक्तयुक्तिनिरासेन श्रुतिप्रमाणकत्वं वायूत्पत्तावपीति न स्वाभ्युपगमविरोधाक्षेपोऽत्र परेषां युक्त इति भावः। परपरिकल्पितशब्दलिङ्गकानुमानगम्यस्वरूपाभिव्यक्तेराकाशवायुसाधारण्येऽप्याकाशाद्वायुरिति पौर्वापर्यभावे कथन्तानिवृत्तये मातरि = पालनेन मातृतुल्ये आकाशे, श्वयति सञ्चलति वर्द्धते वेति योगज्ञापनाय मातरिश्वेति नामोपादानम्। तथा, सत्यपि वायोर्नानात्वे कालस्य दिशश्च 'द्रव्यत्वनित्यत्वे वायुना व्याख्याते' ( २।२।७,११ ) इति नित्यत्वातिदेशे, 'अद्रव्यत्वेन नित्यत्वमुक्तम्' ( २।१।१३ ) इत्युपदिष्टनित्यताकतया वायोर्वैशेषिकसूत्राभ्यामुपादानेन विशेषतस्तन्निराकरणाय मातरिश्वाधिकरणमिदमित्यवधेयम् २।३।८।

नन्ु सदेव सोम्येदमग्र आसीदित्यादिसृष्टिक्रमवर्णनपरच्छान्दोग्यश्रुतौ नामतोऽनुद्दिष्टयोरपि वियन्मातरिश्वनोस्तु एवकारतैत्तिरीकयश्रुत्याद्यनुरोधेन सम्भवोऽभ्युपगतश्चेदभ्युपगम्यतां नामप्रथमोद्दिष्टस्य सतोऽपि सम्भवः 'ततो वै सदजायत' इति तैत्तिरीयकश्रुतेः, इत्याशङ्कां निरस्यति—

( असम्भवाधिकरणम्—३। )

**असम्भवस्तु सतोऽनुपपत्तेः ।२।३।९॥**

पूर्वानुवृत्तसाधर्म्यव्यवच्छेदकस्तुशब्दः। 'सतः' 'सदेव'

इत्यादिश्रुतिघटकसच्छब्दार्थस्य 'असम्भवः' उत्पत्तिर्नास्ति, कुतः 'अनुपपत्तेः' अयुक्तत्वात्,—'ततो वै सदजायत' इति श्रुतिघटकच्छब्देन 'असदेवेदमग्र आसीत्' इति प्रकान्तस्य असत एव परामर्शप्रौव्ये 'कथमसतः सज्जायेतेति' च्छान्दोग्य-श्रुत्यैवायुक्तत्वस्याम्नानात् । अनवस्थादोषेणायुक्तत्वाच्च । तथा हि कारणपरम्परायामधिगमनीयायां क्वचिद् विश्रामो वाच्यः, अविश्रामे चानवस्था। विश्रामस्थानं हि मूलकारणम्, स च छान्दोग्यघटकसच्छब्दार्थः। एवकारेण, अग्र इत्यासी-दित्येताभ्यां च तत्पूर्वकालसामान्ये तस्य सतः सत्त्वं तदन्यस्य चासत्त्वं प्रतीयते असति च कस्मिंश्चिदन्यस्मिन्, केन कारणेन भूयेत? असति च कारणे कथन्नामोत्पत्तिः स्यात्? श्रूयते च 'महानजः' इति 'न जायते म्रियते वा विपश्चित्' इति 'न चास्य कश्चिज्जनिता' इति, 'आदिः स संयोगनिमित्तहेतुः' इति चैवमादि। एतच्छ्रुतिजातप्रतिपाद्यो यः खल्वजः स एव सत्पदार्थः। 'असद् वा इदमग्र आसीत् ततो वै सदजायत' इति श्रुतिस्तु सत्ताविशेषगर्भतया व्याख्या-तपूर्वेति न सर्वमूलस्य सतः कुतोऽपि सम्भव इति तत्त्वम् ।२।३।२।

तेजःसृष्टिश्रुतीनां मूलनिर्देशविरोधादेकतरश्रुतिमनुसृत्य तदुत्पत्त्यभ्युपगमे श्रुत्यन्तरविरोध इति तत्समाधानमाह—

( तेजोऽधिकरणम्—४ । )

## तेजोऽतस्तथा ह्याह ।२।३।१०॥

यद्यपि तत्तेजोऽसृजतेति च्छान्दोग्यश्रुतिः श्रुत्यन्तरैकवाक्य-तया न तेजःपूर्वकसृष्टिपरेति प्रतिपादितं तथापि तेजसः सन्मूलकत्वं तया यदाम्नायते,—यच्च तैत्तिरीयके 'वायोरग्निः' इति वायुमूलकत्वं यदपि प्रश्नश्रुतौ स प्राणमसृजत प्राणा-च्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीत्यादिना प्राणाख्यहिरण्य-गर्भमूलकत्वमुच्यते—यच्च बृहदारण्यके "नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीत्", इत्युपक्रम्य 'सोऽर्चन्नचरत्त-स्यार्चत आपोऽजायन्त आपो वा अर्कस्तद् यदपां शर आसीत् समहन्यत सा पृथिव्यभवत्—तस्यामश्राम्यत् तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्त्ततार्ग्निः" इत्यबादिपूर्विकाग्न्यन्तसृष्टि-रुक्ता, तदेषां विरोधे क्रमनिर्देशकतैत्तिरीयकश्रुत्यनुरोधाद् वायो-रिति प्राप्तम्, यद्यपि 'स त्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयम्' इति तथापि तत्र वाय्वादित्ययोर्द्वयोरेव तृतीयत्वेनाभि-धानात्, त्रेधाकर्त्तुरग्नेश्च प्रजापतिरूपत्वादुत्पत्तिक्रमस्तत्रापि नोपलभ्यते, तस्माद् वायोरित्येव युक्तम्, तत्रोच्यते—तेजोऽतः = 'अतः' इदंपदेन सन्निहितपरामर्शकेन पूर्वसूत्रस्थसच्छब्दार्थला-भात् सत इत्यर्थः । 'तेजः' उत्पद्यते इति शेषः, 'तथा ह्याह' 'तथाहि' सतस्तेज उत्पत्तिमेव 'आह' आमनति श्रुतिरिति शेषः 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योति-

राप:' इत्यादिना। 'वायोरग्नि:' इति, 'स प्राणमसृजत प्राणात् श्रद्धाम्' इति च यत् श्रूयते, तदुभयमपि सत एव तत्तद्भावमापद्य उपादाननिमित्तरूपेण व्यवतिष्ठमानात् तेज उत्पत्तिं बोधयति, सच्च चिदचिदात्मकं ब्रह्मेत्यसकृदुपपादितमतः श्रुतीनां नास्ति विरोधः। एकवाक्यतापन्नसर्वश्रुतिसम्मतोऽयं एवास्मत्सिद्धान्तो नात्र स्वाभ्युपगमविरोधादसामञ्जस्यमिति ध्येयम् ।२।३।१०।

ननु माभूदाकाशादिभिः स्वाभ्युपगमविरोधः, अद्भिस्तु भवत्येव, 'वायोरग्निरग्नेराप:' इति तैत्तिरीयकश्रुत्या तेजः प्रभवत्वमपां गम्यते,'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिराप:' इति मुण्डकश्रुत्या, 'स इमान् लोकानसृजत अम्भोमरीचीर्मरमाप:' इत्यैतरेयश्रुत्या च परमेश्वरप्रभवत्वमिति द्वैधे एकतरपक्षपरिग्रहे स्वाभ्युपगमविरोधः, किञ्च उत्पत्तिक्रमेऽपि विरोधः, तैत्तिरीयश्रुत्या आकाशवायुतेजसामनन्तरमपामुत्पत्तिः, 'ततो रात्रिरजायत ततः समुद्रोऽर्णव:' इतिक्रमे 'यथापूर्वमकल्पयद्दिवं च पृथिवीं च' इति मन्त्रवर्णेन चाकाशोत्पत्तेः पूर्वमपामुत्पत्तिराम्नायते एकतरपरिग्रहे स्वाभ्युपगमविरोध इत्याशङ्कायामाह—

( अबधिकरणम्—५ । )

आपः ।२।३।११॥

अतस्तथाह्याहेति पूर्वसूत्रादनुवर्त्तते, 'अत:' सतः, तेजो-

भावापन्नादिति तु तद्विशेषणं यथाह्याहेत्यनेन लब्धम्,—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत, तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत' इति श्रुतिः बहु भवनेच्छयाऽंशतः परिणम्य तेजोभावमापन्नात् सत एवापामुत्पत्तिमाख्याति। तत्तेज ऐक्षतेतितेजःकर्तृकमीक्षणं चिदचिदात्मकसत्स्वरूपस्य तेजस्त्वमावेदयति। अस्यामेव श्रुतावुत्तरत्र त्रिवृत्करणोक्त्या तेज इदमत्रिवृत्कृतत्रयान्तर्गतम्। त्रिवृत्कृतश्च 'समुद्रोऽर्णवः' तदुपक्रान्ते द्यावापृथिव्यावपि सादृश्यैः स्तः समभिव्याहाराच्च। त्रिवृत् करणं च पञ्चीकरणपरमित्याचार्यवचः। पञ्चीकरणे तु नवादिक्रमस्यादरः श्रुतिप्रामाण्यात्, अत एव मनुरप्याह 'अप एव ससर्जादौ' इति ।२।३।११।

नन्वद्भ्यः पृथिवी-सृष्टिरिति तैत्तिरीयकश्रुतावस्ति "अद्भ्यः पृथिवी" इति। ऐतरेयश्रुतौ च "स इमान् लोकानसृजत अम्भो मरीचीर्मरमापः" इति। अत्र मरशब्देन पृथिव्युच्यते, तदनन्तरञ्च आप इति निर्देशात् पाठक्रमेण पृथिव्यनन्तरमपां सृष्टिरिति गम्यते।

न च ऐतरेयश्रुतौ अद्भ्यः पृथिवीति निर्देशात् आर्थक्रमेण पाठक्रमस्य बाध इति वाच्यम्, छान्दोग्यश्रुतौ "ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति अन्नमसृजन्त" इत्यनेन अद्भ्योऽन्न-सृष्टि-प्रतिपादकेनैकवाक्यतया तैत्तिरीये पृथिवीपदस्य अन्न-परत्व-सम्भवेन ऐतरेयपाठक्रमस्य बाधविरहात्। पृथिवीसृष्ट्यनन्तरमपां सृष्टौ पृथिव्यामन्नसृष्टेयुक्तत्वादन्नस्य ब्रीहियवादे-

रोदनस्य वाप्साध्यत्वात् तेजःसृष्ट्यनन्तरं पृथिवीसृष्टिरित्यस्य युक्ततया छान्दोग्यादौ पूरणीयत्वात्। पृथिवीसृष्टिश्च साक्षात्परमात्मन एव मुण्डकश्रुत्या ऐतरेयश्रुत्या च तथाम्नानात्। इत्येवं प्राप्ते स्वसिद्धान्ते दोषः स्यात्, अतस्तन्निराकरोति—

( पृथिव्यधिकाराधिकरणम्—६ । )

पृथिव्यधिकार-रूप-शब्दान्तरेभ्यः ।२।३।१२॥

'अतस्तथाह्याह' इति यथापूर्वमनुवर्त्तते, छान्दोग्ये "ता अन्नमसृजन्त" इति यदन्नं सैव पृथिवी, न तु व्रीह्यादिरूपम्। सा च अब्भावापन्नात् सत उत्पद्यते इति सा श्रुतिरेवाह। ननु कथमेतत्? अन्नशब्दो हि व्रीहियवादावोदने वा प्रसिद्धः, प्रसिद्धार्थमपह्नाय कथं पृथिव्यर्थं गमयेत्? इत्याशङ्कायामुत्तरं पठति,'अधिकाररूपशब्दान्तरेभ्यः' अधिकारात् रूपात् शब्दान्तराच्च, अधिकारः खलु 'तत्तेजोऽसृजत तत् अपोऽसृजत' इति च महाभूतविषयः, पृथिवी च अन्तिमं महाभूतम्, क्रमप्राप्तं तन्महाभूतमतिक्रम्य न व्रीह्यादिपरिग्रहो युक्तः। रूपमपि वाक्यशेषे तेजसोऽपाञ्च रूपाद्भिन्नलक्षणं रूपं यत् कृष्णं तदन्नस्य इति दर्शितम्। तच्च पृथिव्याः, इत्याचार्य्याः। वस्तुतः सूत्रस्थरूपशब्दस्य अत्रिवृत्कृतस्वरूपमर्थः। त्रिवृत्करणस्य छान्दोग्यश्रुतावनन्तरमवगतेनोक्तत्वात्। न तावद् व्रीह्यादिरूपमन्नम् अत्रिवृत्कृतं भवति, पृथिवी तु अत्रिवृत्कृतापि भवति। शब्दान्तरं श्रुत्यन्तरं तस्मादपि अद्भ्यः पृथिवी जायत इति गम्यते, तथा हि बृहदारण्यके "तद् यदपां शर

आसीत् समहन्यत, सा पृथिव्यभवत्" इत्यद्भ्यः पृथिव्युत्पत्तिमाख्याय पृथिव्यास्तु व्रीह्यादेरुत्पत्तिमामनन्ति "पृथिव्या ओषधयः ओषधिभ्योऽन्नम्" इति। एवं अधिकारादिभ्यो हेतुभ्यः पृथिव्येव, छान्दोग्यस्थस्य अन्नपदस्यार्थः मुख्यार्थपरतायामधिकारादिलक्षणहेतूनां बाधकत्वात्। एवञ्च तैत्तिरीयश्रुतौ पृथिवीशब्दस्य मुख्यार्थपरतया ऐतरेयश्रुतौ मरीचीर्मरमिति पाठक्रमो बाधितः, आर्थक्रमस्य बलवत्त्वात्, 'एतस्माज्जायते प्राण' इत्यादि मुण्डकश्रुत्यादिभिः, अद्भ्यः पृथिवीत्यादिश्रुतिविरोधस्तु अब्भावापन्नात् सतः उत्पद्यते इति व्याख्यानेनैव परिहृतः। तथा च अस्मत्सिद्धान्ते स्वाभ्युपगमविरोधो नास्ति ।२।३।१२।

ननु तेज आदीनां सृष्टौ सतः कारणत्वम् श्रूयते तैत्तिरीयके च वायुकारणकत्वमिति विरोधः न चोक्तमेव वायुभावापन्नात् सत उत्पत्तिरिति, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः" इत्यादिमुण्डकश्रुत्यैकवाक्यत्वादितिवाच्यम्, सतो मूलकारणत्वेनैव 'एतस्माज्जायते' इत्यादि श्रुतिसमन्वयसम्भवेन एकवाक्यत्वार्थं तथाकल्पनस्यान्याय्यत्वादित्याशङ्कामधिकरणान्तरेण परिहरति—

( तदभिध्यानाधिकरणम्—७। )

तदभिध्यानादेव तु तल्लिङ्गात् सः ।२।३।१३॥

तुशब्द उक्ताशङ्कानिरासद्योतकः। 'सः' सत्पदार्थः परमे-

श्वरः आकाशसृष्टाविव वायु तेज आदिसृष्टौ च साक्षादेव कारणम्; कुतः ? 'तदभिध्यानादेव तल्लिङ्गात्' = तस्य = परमेश्वरस्य यत् अभिध्यानं = सङ्कल्पः तस्मादेव = तत्स्वरूपादेव 'तल्लिङ्गात्' तस्य सकलकार्य्यम् प्रति साक्षात्कारकत्वस्य, लिङ्गात् = ज्ञापकात् । तथाहि तैत्तिरीयके "सोऽकामयत बहु स्याम् प्रजायेय" इत्युपक्रम्य "इदं सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्, निरुक्तञ्चानिरुक्तञ्च निलयनञ्चानिलयनञ्च विज्ञानञ्चाविज्ञानञ्च" इत्यादिकं पठ्यते, 'अकामयत' इत्यनेन यदभिध्यानं ज्ञापितं तेनैव निखिलकार्य्येषु कारणत्वं तुल्यतयैव परमेश्वरस्य दर्शितं तस्य च कार्य्यानुप्रवेशरूपा कार्य्यभावापत्तिः बहुभवनञ्चेति निमित्तप्रकृतिरूपस्य चिदचिदात्मकस्य तस्यैवेति सर्वासां श्रुतीनां पर्यवसितार्थं एवासां यथोक्तरूपेण तेज आदि सर्गः साक्षादेव परमेश्वरकारणक इति, नातः स्वाभ्युपगमविरोधशङ्का सृष्टिक्रम इति सिद्धम् ।२।३।१३।

नन्वेवमपि 'अम्भो मरीचीर्मरमापः अन्तरिक्षं मरीचयः' इत्यैतरेयश्रुतेर्दर्शितपूर्वाणाम् च सृष्टिश्रुतीनां मिथो विरुद्धक्रमप्रतिपादकतया एकतरपरिग्रहे स्वाभ्युपगमविरोध इत्याक्षेपं निरस्यति ।

( विपर्ययाधिकरणम्—८ । )

विपर्ययेण तु क्रमोऽत उपपद्यते च ।२।३।१४।।

तुशब्द आक्षेप-तत्समाधानद्योतकः । 'अतः' परमेश्वरस्य

प्रथमकार्यं प्रति स्वरूपेण तदुत्तरकार्यं प्रति पूर्वकार्यभावापत्त्या च कारणत्वादेव—चकारस्यावधारणार्थत्वात् भिन्नक्रमत्वाच्च। 'विपर्ययेण' विपर्ययो बाधः तेन, बाधश्च पाठक्रमप्राप्तस्यार्थस्य, आर्थक्रमेण यद्बाधितत्वम्, तेन, 'क्रमः' भूतसृष्टौ पौर्वापर्यम्—उपपद्यते निश्चीयते। यथा हि सतः कारणत्वं पूर्वसूत्रेण यथा दर्शितं तस्मादेव कारणात् 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः' इत्यादौ पञ्चमीप्रकृतितयोपस्थितमाकाशादिपदं तद्भावापन्नपरमेश्वरपरं, ततश्च तस्य आकाशादिभूतमात्रार्थकत्वबाधेन "एतस्माज्जायते प्राण" इति मुण्डकश्रुत्या समानार्थकतया एतदार्थक्रमतदीयपाठक्रमाभ्यामेकार्थप्रतिपादनात् आकाश-वायु-ज्योतिरप्पृथिवीनामुत्पत्तिक्रमो निर्णीतो भवति। छान्दोग्यश्रुतौ 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यत्र वियद्वाय्वोरन्तरापूरणं तात्पर्याबाधात्, तात्पर्यञ्च श्रुत्यन्तरदर्शनेनोन्नीतं भवति। न खलु पाठक्रममन्तरेण पूरणबाधकं किञ्चिल्लिङ्गमस्ति, पाठक्रमश्च श्रुत्यन्तरेण बाधितो भवति। 'ततो रात्रिरजायत ततः समुद्रोऽर्णवः' इत्यादि श्रुतिस्तु पञ्चीकृतापविषया, तैत्तिरीयकच्छान्दोग्यादि श्रुतिस्तु अपञ्चीकृतभूतपरेति तात्पर्यभेदादेकत्र सदितरबाधेन तैत्तिरीयकच्छान्दोग्यादिश्रुतीनामार्थे सृष्टिक्रमे न काचिदनुपपत्तिः। 'ततः समुद्रोऽर्णवः' इत्यादिश्रुतितात्पर्यस्य पञ्चीकृतगोचरतया तेनास्याः श्रुतेर्विरोधासम्भवात्। 'मरीचीर्मरमापः' इत्यैतरेयश्रुतौ पाठक्रमस्तु श्रुत्यन्तरप्रसिद्धार्थक्रमेण बाधितः बाधकानु-

भावितया पृथिवीवाचकमरशब्दस्य आप इत्यनन्तरं योजनया सर्ववेदान्तसम्मतः समानो भूतसृष्टिक्रमः। सूत्रमिदम् आप इत्यादि सूत्रभाष्यवर्णितसिद्धान्तस्य प्रमाणमिति दिक् ।२।३।१४।

नन्वेवं छान्दोग्यश्रुतेर्मुण्डकश्रुत्या विरोधे मुण्डकश्रुतौ पूरणमावश्यकमन्यथा स्वाभ्युपगमविरोध इत्याक्षेपगर्भं समाधानाधिकरणमाह—

( अन्तरा विज्ञानाधिकरणम्—६ । )

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ।२।३।१५।।

'अन्तरा' "एतस्माज्जायते प्राणो मनः" इत्याथर्वणमुण्डकश्रुतौ कारणनिर्देशानन्तरं प्राक् च महाभूतनिर्देशात्, अभिमानवृत्तिकमहङ्कारमाचक्षाणं सदपि मनःपदं विज्ञानबोधकं किमपि पदं ततः प्राक् नास्ति, भवेतां च तत्र विज्ञानमनसी क्रमेण, इत्यथम् 'अन्तरा विज्ञानमनसी क्रमेण' इत्यस्यार्थः, कथं भवेताम् ? तदाह 'तल्लिङ्गात्' इति—महाभूतसृष्ट्यभिध्यायिच्छान्दोग्यश्रुतौ सदेवेत्युपक्रम्य तदैक्षत बहु स्यां प्रजायेयेत्यनेन बुद्ध्यहङ्कारयोः सृष्टिर्महाभूतसृष्टेः पूर्वं सत्पदार्थात् परमेश्वरात् सूचिता, ईक्षणं नाम विशिष्टज्ञानं बुद्धेर्लक्षणं तदेव बुद्धेर्लिङ्गम्, बहु स्यामिति चाभिमानरूपाहङ्कारस्य वृत्तिर्लक्षणमित्यहङ्कारस्य लिङ्गम्, तस्मात्। न च तयोः सृष्टिराथर्वणश्रुतावुक्ता, वक्ता तु

तत्र प्राणमनसोः सृष्टिः । एवं द्वैधे एकतरपरिग्रहे स्वाभ्युपगमविरोध इति पूर्वपक्षः । तं निरस्यति 'इति चेत्' उच्यते 'न' तत्र युक्तम् ' अविशेषात्"। आथर्वणश्रुतौ प्राणशब्देनैव विज्ञानप्राप्तेः, 'विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः' एतानि प्रज्ञानस्य नामधेयानि भवन्तीति' ( ऐत० ३।२१ ) विज्ञानप्राणयोरेकार्थवाचकत्वश्रुतेः, यतः प्राण इत्यसुरिति चैकोऽर्थः । नन्वेवमपि आथर्वणश्रुतावन्तरा 'सर्वेन्द्रियाणि च' इति भूतसृष्टेः प्रागस्ति, न तु छान्दोग्यश्रुताविति विशेषे सत्यपि कथमविशेषादित्युक्तम् इति चेत्, विवक्षितोत्पत्तिक्रमत्वेनाविशेषात् । छान्दोग्यश्रुतौ 'अन्नमयं हि सोम्य मनः आपोमयः प्राणः तेजोमयी वाक्' इतिपरचादुपदेशेन इन्द्रियसृष्टेर्भूतसृष्टितयैवात्र विवक्षितत्वात् । आथर्वणश्रुतौ तु गोबलीवर्दन्यायेन पृथगुपादानात् । तत्र चोत्पत्तौ पाठक्रमस्य छान्दोग्योपदर्शितभौतिकत्वविरोधेनाविवक्षितत्वात् । अथ, 'अन्नमयं हि सोम्य मनः' इति छान्दोग्यश्रुतावन्नमयादिशब्दे मयट्प्रत्ययो न विकारवचनः, किन्तर्हि ? प्राचुर्यवचनः, अन्नरसजनितोपचयवद् मन इत्येवमन्यत्रापि तात्पर्यम् । यद्यभौतिकत्वमिन्द्रियाणाम् तथापि भूतोत्पत्त्यनन्तरमिन्द्रिय-प्रकारोपन्यासेनैतदनन्तरमेव तदुत्पत्त्यभ्युपगमेन बुद्ध्यहङ्कारपञ्चमहाभूतोत्पत्तिक्रमे न तावदिन्द्रियाणां बाधकत्वम् । आथर्वणश्रुतौ प्रागुविन्यासस्तु नोत्पत्तिक्रमविवक्षार्थं किन्तु मनस इन्द्रियाणाञ्च मिथः सम्बन्धबोधनार्थ इति श्रुत्योर्न विरोधः । अत्र

चान्यत्र च विरुद्धवत् प्रत्यये विपर्ययेणेति पूर्वसूत्रोपदिष्टदिशा समाधेयः ।२।३।१५।

अत्राशङ्कते—

( चराचरव्यपाश्रयाधिकरणम्—१० । )

चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ।२।३।१६॥

'चराचरव्यपाश्रयः' चराचरौ वाय्वाकाशादिपदार्थौ व्यपाश्रयौ तदितरव्यावृत्तविषयौ यस्य सः 'तद्व्यपदेशः' तेषां व्यपदेशः संज्ञा, 'तद् भावभावित्वात्'—तेषामेव भावः स्वरूपं तद्भावः, तद्भावित्वात् तत्प्रापकत्वात् तदुपस्थापकत्वादिति यावत् । 'भाक्त' लाक्षणिक औपचारिकः स्यात्, 'तस्माद् वा एतस्मादात्मनः आकाशः सम्भूतः आकाशाद्वायुः' इत्यादावाकाशादिशब्दस्य तद्भावापन्नब्रह्मपरत्वे लक्षणा स्यादित्यर्थः ।

उत्तरयति—

नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ।२।३।१७॥

'न' इयमाशङ्का न युक्ता, कुतः 'आत्माश्रुते.' श्रुतिः श्रुतिजन्यशाब्दबोध., अश्रुतिः तदभावः, यद्वा अश्रुतिः श्रुतिविरोधः, आत्मनः सत्पदार्थस्य परमेश्वरस्य अश्रुतिः, आत्माश्रुतिः तस्याः आत्मसम्बन्धिश्रुतिजन्यशाब्दबोधाभावात्, आत्मविषयकश्रुत्यर्थापरिज्ञानात् तदयुक्तेयमाशङ्का, अतएव न युक्ता, आत्मप्रतिपादकश्रुतिविरोधाद्वा आशङ्का न युक्तेति

तद्वाक्यार्थः। आत्मसम्बन्धिनी श्रुतिश्च 'आत्मैवेदं सर्वमिति' (छा० ७।२५।२१) एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, ऐतदात्म्यमिदं सर्वमिति सच्च त्यच्चाभवदित्यादिका। तथा च यथा घटादिशब्दस्य संस्थानविशेषविशिष्टमृदि अभिधावृत्तिः कोषादवगम्यते, तथाप्तवाक्यात्, विशिष्टमृदोऽपि उपादानानन्यतया ब्रह्मत्वनिश्चयात् तस्यां मृदि घटशब्दस्याभिधा ध्रुवास्य ब्रह्मणि भाक्तत्वापादनमिवाकाशवाय्वादिशब्दस्य ब्रह्मणि भाक्तत्वापादनमयुक्तमिति भावः। ननु भस्मन उपादानमपि काष्ठं भस्मानुगततया नोपलभ्यते, न वा भस्म काष्ठमिदमिति कश्चित् प्रत्येति, ततश्च भस्मशब्दस्य काष्ठविकारे स्वीकृतायामप्यभिधायां काष्ठे तदनङ्गीकारवत् ब्रह्मण्यपि वाय्वाद्यभिधा नाङ्गीक्रियत इत्यत आह—'नित्यत्वाच्च ताभ्यः' श्रुतिभ्यः नित्यत्वात् नित्यस्वावगतेः। ताश्च श्रुतयः—'विरजः पर आकाशादज आत्मा महान् ध्रुवः' इत्युपक्रम्य 'स एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः' इति वाजसनेयी (बृह० ४।४।२०,२२) 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययम् तद्भूतयोनिं परिपश्यन्ति धीराः' इत्याथर्वणी (मुण्डक १।२।६) 'नित्यो नित्यानां चेतनश्चेतनाना'मिति काठकी चैवमाद्याः। अव्ययनित्यत्वेन स्वरूपविकारो नास्य सम्भवति। काष्ठे भस्मन इव नास्मिन् जगत उपादानत्वमपि मृदादौ घटादेरिवेति न भाक्तत्वापादनं युक्तमिति पर्यवसितम्।२।३।१७।

प्रसङ्गागतजिज्ञासानिवृत्तये यस्मादाकाशाद्युत्पत्तिः श्रुता, तत्स्वरूपमाह—

( ज्ञाधिकरणम्—११ । )

ज्ञोऽतएव ।२।३।१८॥

'अतएव'=श्रुतिभ्य एव, सः 'ज्ञः' अत्र विभक्त्यर्थे एकत्वं विवक्षितम्, एक एव, जीवस्य परमेश्वरादन्यत्वात्; 'ज्ञः' न तु ज्ञानमात्रम् यतश्च श्रुतयः—'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नामरूपमन्नञ्च जायते' ( मु० १।१।९ ) इति 'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च' ( क० २।५।९ ) इत्याद्यः स्वरूपप्रतिपादिकाः । 'सच त्यच्चाभवत्' इति 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति एकविज्ञानेन सर्वविज्ञानं बोधयन्ती श्रुतिश्च ब्रह्मणो जगदुपादानता दर्शयन्ति—तेन तस्य चिन्मात्रस्वरूपत्वमपाकृतं चिन्मात्रस्याविकारित्वात्, अविकारस्योपादानत्वासम्भवात् । 'नित्यो नित्यानां चेतनश्चेतनानाम्' इति काठकी, सर्वस्येशान इत्यादिगर्भा वाजसनेयी श्रुतिश्च यथायोगं साक्षात्, ईशितृत्वव्यापकतया च ज्ञातृत्वं साधयतः । ननु सर्वस्य कार्यजातस्य चिदचिदुभयात्मकत्वेन ज्ञत्वं प्रसज्यते इति चेन्न बिम्बभूतचिदचिदात्मकब्रह्मणो बुद्ध्युपहितस्य लिङ्गशरीरोपहितस्य वा तत् प्रतिबिम्बस्य च ज्ञत्वं तदन्यत्र तदभावश्चेति भेदात् ।

विशेषस्त्वेतावान् केवलचिदंशो प्रकाशस्वरूपज्ञानत्वमात्रं न तु ज्ञत्वधर्मचिदंशे न तादृशज्ञानत्वं न वा स्वतो ज्ञातृत्वमसत्त्वद ज्ञस्य जडत्वमुच्यते । चिदात्मकप्रकाशस्वरूपज्ञानं सत्त्वधृत्याख्यमन्यजूज्ञानध्यादायोभयावच्छेदेन ज्ञातृत्वमानन्दमयत्ववद् बोध्यम् । अत एव आकाशाद्वायुर्वायोरग्निरित्यादि श्रुत्यर्थविवरणे यदाकाशादिभावापन्नपरमेश्वराद् वाय्वादिसृष्टिरुक्ता, स तदीयजडांशस्य परिणामो बोध्य. ।२।३।१८।

नन्वयं किं परिमाणकः ? महत्परिमाणो वा अणुपरिमाणो वा ? न च 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' इति दर्शितश्रुत्या विभुत्वस्य सर्वगतत्वस्य च प्राप्त्या संशयस्य नावसर इति वाच्यम् सुसूक्ष्ममित्यनेनाणुपरिमाणस्य लाभे विभुशब्दस्येश्वरार्थकतायाः सर्वगतशब्दस्य सर्वत्र गमनसमर्थार्थकतायाश्च सम्भवेन संशयस्य लब्धावसरत्वात्, इत्येवं जाते संशये, न महत्परिमाणक इति पूर्वपक्षस्तत्र हेतुमाह—

( उत्क्रान्तिगत्यधिकरणम्—१२ । )

उत्क्रान्तिगत्यागतीनाम् ।२।३।१९॥

अतएवेत्यनुवर्त्तते । श्रुतिभ्य एव इत्यर्थः । परममहत्परिमाणत्वे, उत्क्रान्तिश्रुतिर्गतिश्रुतिरागतिश्रुतिश्च नोपपद्यन्ते इत्यर्थः देहपरिमाणकत्वे दोषस्तु जैनमतनिरसनावसरे प्रदर्शित., महदन्तरपरिमाणकत्वे तत्तुल्यन्यायतया दोषो बोध्यः । तत्रो-

क्रान्तिश्रुतिः 'स यदास्मात् शरीरादुत्क्रामति सहैवैतैः सर्वै-रुत्क्रामति' इति, ( कौषी० ३।२ ) गतिश्रुतिः 'ये केचिदस्मात् लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति, ( कौ० १।२ ) आगतिश्रुतिश्च 'तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मणे' इति ( बृह० ४।४।६ ) । न चोत्क्रान्तिर्मरणम्, सा च परिच्छिन्नदेहे स्वाम्याभिमाननिवृत्तिरूपा चलनहीत्यापि सम्भवतीति वाच्यम् तथापि गत्यागतिश्रुतिविरोधस्य दुष्परिहरत्वान्न परममहत्परिमाणो ज्ञः ।२।३।१९।

एवं प्राप्ते कश्चिदाह—

## स्वात्मना चोत्तरयोः ।२।३।२०॥

चकारः पक्षान्तरद्योतकः । ज्ञस्य परममहत्परिमाणकत्वे नास्ति गत्यागतिश्रुतिविरोधः, कुतः ? 'उत्तरयोः' गत्यागत्योः स्वात्मना स्वस्य आत्मना स्वरूपेण जीवेन कर्त्तरि तृतीया, गत्यागत्योर्जीवकर्तृकत्वादित्यर्थः । 'अनेन जीवेनात्मनानुप्रविश्य' इति श्रुतौ आत्मनो जीवाभेदनिर्देशेन—अत्रापि तदर्थमेवात्मपदोपन्यासात्, अन्यथा आत्मपदमत्र व्यर्थं स्यात् । अथवा ममात्मा भद्रसेन इतिवत् परमात्मीयवचनः खल्वात्मशब्दः । अत्र प्रतिबिम्बभावेन स्थितस्य जीवस्य भेदविवक्षणेन तदायत्ततया तदीयत्वं बोध्यम् । एतेनैतदुक्तं भवति, ज्ञो बिम्बभूतः परममहत्परिमाणकः, जीवस्तत्प्रतिबिम्बभूतः सोऽणुः, तस्यैव गत्यागती श्रुत्या प्रतिपाद्येते, न तु ज्ञस्येति । नन्वेवम् एको ज्ञ

इति नोपपद्यते इति चेन्न ज्ञशब्दस्य बिम्बभूतपरमेश्वरपरत्वात्, तस्य चैकत्वेनैको ज्ञ इति नानुपपन्नम् ।२।३।२०।

ननु जीवोऽणुरित्यनुपपन्नमित्याक्षेपगर्भं तत्समाधानसूत्रमाह—

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ।२।३।२१॥

जीवः 'न अणुः' अणुपरिमाणकः 'अतच्छ्रुतेः' अतस्य=न सः न अणुः अतः तस्य अनणोर्महत इति यावत्, श्रुतेः, 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' (बृह० ४।४।२२) 'विरजः पर आकाशादज आत्मा महान् ध्रुवः' (बृह० ४।४।२१) 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्' ( मुण्ड० १।१।६ ) इत्यादिश्रवणात् नच सुसूक्ष्ममित्यणुत्वश्रुतिर्विभुं सर्वगतमिति श्रुतेरर्थान्तरपरतायाः दर्शितत्वात्, इति वाच्यम्, सुसूक्ष्ममित्यस्य 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितम्' इत्यादिरूपेण दुर्विज्ञेयमित्यर्थपरत्वादन्यथाशास्त्रे क्लिष्टकल्पना स्यात् । 'इति चेत्' इति यदुच्यते तत् 'न' न युक्तम्—'इतराधिकारात्', इतरस्य बिम्बभूतस्य ह्यस्य अधिकारात् प्रकरणात्, परमात्मप्रकरणे अनणुपरिमाणश्रुतेः, जीवपक्षे तस्यादोषत्वात् । यदि च 'विज्ञानमयः प्राणेषु' इत्यनेन प्रकृतं व्यवच्छिद्य जीवस्य महत्त्वमित्युच्येत तथापि वास्तवाभेदस्य प्रतिपिपादयिषितत्वया तथोपदेशाद् भेददृष्टौ जीवस्याणुपरिमाणत्वे बाधकाभावः ।२।३।२१।

अणुपरिमाणत्वे स्पष्टश्रुतिं तदनुगुणयुक्तिञ्चाह—

स्वशब्दोन्मानाभ्याञ्च ।२।३।२२॥

'स्वशब्द' अणुत्ववाचकः शब्दः, उन्मानम् उत्कृष्टं निर्दिर्वर्त मानं सोलनं ताभ्याम् । सौत्रश्चकारः पूर्वहेत्वपेक्षया । स्व-शब्दो यथा 'एषाऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश' इति ( मुण्ड० ३।२।९ ) श्रुतिः, अत्र पञ्चप्राणसंवेशस्थानत्वादयं जीव एव स चाणुरिति स्पष्टम् । उन्मानं यथा 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः' ( श्वेता० ५।९ ) इत्यादिरूपम् ।२।३।२२।

ननु जीवस्याणुपरिमाणत्वे देहव्याप्युपलब्धिर्व्याहन्येत, इत्याशङ्क्याह—

अविरोधश्चन्दनवत् ।२।३।२३॥

चन्दनवत् =हरिचन्दनबिन्दोरिव अविरोधः अव्याघातः यथा देहैकदेशे निहितस्य हरिचन्दनबिन्दोर्देहव्यापिनिर्वृ-तिजनने व्याघातो न भवति, तद्वत् अणोरपि जीवस्य देहव्या-प्युपलब्धिजनने नास्ति कश्चिद् व्याघातः ।२।३।२३।

अत्राक्षेपमुपन्यस्य तत्समाधानसूत्रमाह—

अवस्थितिवैशेष्यादिति चेन्नाभ्युपग-
माद्धृदि हि ।२।३।२४॥

हरिचन्दनबिन्दोर्दृष्टान्तत्वं न सम्भवति, 'अवस्थितिवैशे-ष्यात्' हरिचन्दनबिन्दोर्देहैकदेशे निश्चितावस्थितिः, जीवस्य तु

अवस्थितिरेकदेशे वा शरीरावच्छेदेन वेति न निश्चिता, तस्मा-दुभयोरवस्थितेरेवं भेदात् कथं तद्दृष्टान्तेन देहव्याप्युप-लब्धिः संस्थाप्यते ?

'इति चेत्' 'न' नेदं युक्तम् । जीवस्यापि देहैकदेशे हृदि, अवस्थितिरभ्युपगता श्रुतिभिः 'हृदि ह्येष आत्मा' 'स वा एष आत्मा हृदि' इत्याद्याभिः । तस्मान्न दृष्टान्तवैषम्यम् । 'हि' इति श्रुतावधारणसूचकम् ।२।३।२४।

ननु तथापि विषमो दृष्टान्तः, कार्ययोर्वैशेष्यात् । शारी-रिकी निर्वृतिस्तावत् शारीरवहितसकलानविशेषजन्या यदव-च्छेदेन शरीरे हरिचन्दनबिन्दुस्पर्शः, तदवच्छेदेन रोमकूपद्वारक-चलच्छोणितधारासम्पर्कात् सर्वतो भवति हृदि स्थितेनाणुना जीवेन तु यदा स्पृष्टस्य कथमुपलब्धिः ? त्वक्संयोगादिति चेत्, यदवच्छेदेन त्वचि जीवसंयोगस्तदवच्छेदेनैव त्वचोपलब्धिः, नान्यदेशावच्छेदेनाचेतनत्वादिति दृष्टान्तान्तरमाह—

## गुणाद्वालोकवत् ।२।३।२५॥

यथा गृहैकदेशस्थस्यापि दीपस्वरूपालोकस्य प्रकाशरूपाद् गुणात् समस्तगृहस्य दर्शने न व्याहन्यते, तद्वत् अणोर्जीवस्य हृदिस्थस्यापि चैतन्यस्वरूपाद् गुणात् समस्तदेहव्यापि कार्यं न व्याहन्यते इत्यर्थः ।२।३।२५।

ननु न खलु गुणिनमतिक्रम्य गुणो वर्त्तते, आलोकस्य प्रकाशश्च प्रभालक्षण , स न गुणः, शिथिलावयवसंयोगरूपं

तेजोद्रव्यमेव प्रभा, अथ तदीयं भास्वररूपं यदि प्रकाशत्वेन मन्यते, सोऽपि प्रभामतिक्रम्य न तिष्ठति, चैतन्यं गुणोऽपि ज्ञातारमतिक्रम्य न तिष्ठतीति पुनरपि विषमो दृष्टान्तः, इत्याशङ्कायां गुणिव्यतिरेकेणापि गुणस्थितिं दृष्टान्तेनोपपादयति—

व्यतिरेको गन्धवत् ।२।३।२६॥

गुणस्यापि पद्मादिगन्धस्य वायुनोपनीयमानस्य गुणिव्यतिरेको यथा भवति तथा गुणस्य चैतन्यस्य गुणिनो जीवाद्व्यतिरेकः सम्भवति । व्यतिरेकश्च तदन्यवृत्तित्वमिति ध्येयम् ।२।३।२६।

ननु तत्रानुद्भूतरूपरसस्पर्शा उद्भूतगन्धाश्च पद्मादिरेणव एव वायुनानीयमाना घ्राणसंयुक्ता भवन्ति, गृह्यन्ते च गन्धास्तदसमवेता एव, कुतो व्यतिरेकः इत्यनुमानोपयोगिनं दृष्टान्तमपहाय श्रुतिं प्रमाणयन्नाह—

तथा च दर्शयति ।२।३।२७॥

हृदयायतनत्वमणुपरिमाणत्वञ्चात्मन आम्नाय तस्यैव 'आलोमभ्य आनखाग्रेभ्यः' इति ( ८।८।१ ) चैतन्येन गुणेन सर्वशरीरव्यापित्वं छान्दोग्यश्रुतिर्दर्शयति ।

एवञ्च श्रुतिप्रामाण्याद् गन्धस्यापि गुणिव्यतिरेकसम्भवेऽनुद्भूतरूपरसस्पर्शानामुद्भूतगन्धानाञ्च पद्मादिरेणूनामकल्पनेऽपि न तदनुपलब्धिः । एतेन उद्भूतरूपवदनुद्भूतरूपवदवयवैरुद्भूतरूपवद्द्रव्यस्यानारम्भेणानुद्भूतरूपोद्भूतगन्धवतो

रेणोः पद्मे नोपष्टम्भकाख्यसंयोगवत्तया तदवयवत्वाभावात् तद्गन्धस्य पद्मगन्धत्वानुपपत्तिरित्यपि परास्तम् । पद्मगन्धस्यैव पद्मव्यतिरेकसम्भवादिति विभावनीयम् ।२।३।२७।

श्रुत्यभिप्रायेण स्वपक्षं दृढीकरोति—

## पृथगुपदेशात् ।२।३।२८॥

'प्रज्ञया शरीरं समारुह्य' इति कौषीतकिब्राह्मणश्रुत्या प्रज्ञाभिधस्य चैतन्यस्य करणतया समारोहणकर्त्तुर्जीवस्य कर्तृत्वेन शरीरव्याप्तित्वोपदेशात्, यदि समारोहणनाम्नाभिहितं शरीरस्य व्यापनं कर्त्तुरात्मनः प्रज्ञावत् स्वयमेव स्यात् प्रज्ञयेतिकरणस्य पृथगुपादानं न स्यात् । पृथगुपदेशरूपलिङ्गद्वारकमिदमिति विशेषात् पूर्वसूत्रेण न गतार्थत्वमिति ज्ञेयम् । तस्मादणुरात्मेति कस्यचिन्मते प्राप्तम् ।२।३।२८।

अत्र स्वमतमाह—

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ।२।३।२९॥

तुकारः अणुपक्षव्यवच्छेदद्योतकः । जीवात्मा प्राज्ञवत् परमेश्वरवत् तत्त्वदृशा विभुरेवेत्यर्थः । अस्य दृष्टान्तस्योपन्यासो बिम्बप्रतिबिम्बयोर्लौकिकभेदप्रतीतिमाश्रित्य । नन्वेवं स्वशब्दोन्मानविरोधो गत्यागतिश्रुतिव्याकोपश्चेत्यत आह— 'तद्गुणसारत्वात् तद्व्यपदेशः' इति तद्गुणसारत्वादुपाधिगुणप्रधानत्वात् तद्व्यपदेशः, तासाम् अणुत्वोत्क्रान्तिगत्यागतीनां व्यपदेशः=श्रुत्याम्नानम् । अयमर्थः, योऽसौ प्राज्ञपदवाच्यः स

एव अणुपरिमाणबुद्धिप्रतिबिम्बितो जीव इत्यभिधीयते, नास्ति बिम्बप्रतिबिम्बयोर्वास्तवो भेदः कश्चित्, तेन प्राज्ञस्य देवात्मशक्तिरूपपरब्रह्मणो यद् विभुत्वं नित्यत्वं च तदेव प्रतिबिम्बभूतजीवस्य, विशेषस्त्वेतावान् प्रतिबिम्बमुपाधिगुणेन समृद्धमिव गृह्यते। उपाधिभूतस्य बुद्धितत्त्वस्य लिङ्गशरीरस्य वा अणुत्वात् क्षुद्रत्वात् तस्य च गत्यागत्यादिमत्त्वाद् दर्पणप्रतिबिम्बितसूर्यस्य स्वोपाधिदर्पणगतमालिन्यकम्पादिभिरिव प्रतिबिम्बभूतजीवस्यापि अणुत्वगत्यागत्यादिभिर्व्यपदेशः परिग्रहश्च भवति लोकानाम्। यथा बिम्बस्य सूर्यस्यैकत्वेऽपि उपाधिभूतदर्पणादीनां नानात्वेन नानात्वमपि प्रतिबिम्बस्य गृह्यते तथा प्राज्ञस्यैकत्वेऽपि जीवस्योपाधिभेदान्नानात्वम्। लीलादेहग्रहणे प्राज्ञस्यापि यथा परिच्छिन्नत्वनानात्वादिकं भवति तद्वत् प्रतिबिम्बभावेऽपीति ॥२।३।२९॥

नन्वनित्याया बुद्धेर्वियोगे जीवस्य स्वरूपभङ्गोऽसंसारित्वं वा, चेष्टापत्तिः, स्वरूपभङ्गस्वीकारेऽनित्यत्वापत्तिः, असंसारित्वस्वीकारे विनापि तत्त्वज्ञानान्मुक्तिरापद्येत, इत्याशङ्कायामुत्तरमाह—

**यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥२।३।३०॥**

बुद्धेरित्यादिः। 'यावदात्मभावित्वात्' आत्मनः जीवस्य यावद्भावः सत्त्वं तावद्भावित्वात्, तावदेव सत्त्वात्, 'न दोषः' न अनन्तरोक्तो दोषः प्रसज्यते, अत्र प्रमाणमाह

'तद्दर्शनात्' यतः श्रुतिरेव तद्दर्शयति, तथाहि 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव' इति (बृ० ४।३।७) अत्र विज्ञानमय इत्यस्य बुद्धिमय इत्यर्थः 'बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च' इति 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः' इति च काठके सारथिरूपतया बुद्धेरेव विज्ञानशब्देन विवरणदर्शनात्। बुद्धिमयत्वं च तद्गुणसारत्वेन, यथा स्त्रीमयो देवदत्त इति स्त्रीरागप्रधानत्वं देवदत्तस्य बोधयति तद्वदित्याचार्याः। एतेनैतदुक्तं भवति बुद्धौ तद्घटितलिङ्गशरीरे वा प्रतिबिम्बितं ब्रह्मैव जीवः, ब्रह्मभावेन तस्य नित्यत्वं, न तु जीवभावेन, बुद्धिवियोगे जीवत्वभङ्ग इष्यत एव, न खलु तावता तस्य स्वरूपनाशः, ब्रह्मण एव तत्स्वरूपत्वात्। बुद्धिवियोगश्च न स्वयं भवति किंतु तत्त्वज्ञानादेव, तत्र चासंसारित्वमिष्टम्। 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनाय' इति श्रुतेः। मृत्युः संसारः तस्मादुत्तरणं बुद्धिविलयादेव भवति। तस्माद् बुद्धिविलयेऽसंसारित्वमिष्यत एवेति नात्र कश्चिद्दोषः ।२।३।३०।

ननु सुषुप्तिदशायां जीवस्य 'स्वमपीतो भवति' इतिश्रुत्या स्वाप्ययप्रतिपादनं बुद्धिसत्त्वे कथं युज्यते? बुद्धिलयाभ्युपगमे तु प्रबोध एव न स्यात्, एवम् एकप्रलयोत्तरं पुनः सृष्टौ जीवो न स्यात् तत्त्वज्ञानाभावेऽपि मुक्तिर्वा संसाराभावेन स्यादित्याशङ्कां परिहरति—

पुंस्त्वादिवत् त्वस्य सतोऽभिव्यक्तियोगात् ।२।३।३१॥

सुषुप्तौ बुद्धेस्तमोऽभिभवमात्रं, न लयः प्राणवृत्तेः सत्त्वात्, स्वाप्ययस्तु तदानीं तस्यां प्रतिबिम्बाभावात् प्रलये तस्या लयेऽपि नात्यन्तं लयः, अनागतावस्थया सत्त्वात् । विचारितमिदं मधस्तात् । अत्र दृष्टान्तेन तदुपपादयति—'पुंस्त्वादिवत्' पुंस्त्वादिकं यौवनलक्षणं यथा बाल्येऽप्यनागतावस्थया तिष्ठति सत एव तस्य यौवनेऽभिव्यक्तियोगः, तथा 'सतः' अनागतावस्थया तिष्ठतः 'अस्य' बुद्धिवस्तुनः 'अभिव्यक्तियोगात्' आविर्भावप्रयुक्तात् सम्बन्धात्, स्वापोत्तरं प्रबोधः पुनः सृष्टौ तयैव जीवत्वं संसारश्चेति पर्यवसन्नम् । तुकारः पूर्वपक्षव्यवच्छेदार्थः ।२।३।३१।

ननु दृश्यमानदेहप्रतिबिम्बितस्य ज्ञानेन्द्रियप्रतिबिम्बितस्य वा चित्स्वरूपस्य जीवत्वमस्तु किं बुद्ध्यभ्युपगमेनेत्याशङ्कायामुत्तरमाह—

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ।२।३।३२॥

'अन्यथा' बुद्ध्यनभ्युपगमे नित्योपलब्ध्यनुपलब्धिप्रसङ्गः, उपलब्धिः प्रत्यक्षम्, अनुपलब्धिरप्रत्यक्षं तयोः नित्यं सदैव प्रसङ्गः स्यात् यौगपद्यमापद्येत, प्रबोधे उपलब्धेः सुषुप्तौ चानुपलब्धेर्दर्शनात्—अवस्थाद्वय एव देहसत्त्वेन, देहयोपलब्ध्यनुपलब्ध्यवच्छेदकत्वे तयोर्यौगपद्यं कथं वार्येत,

यदि वा सर्वज्ञानेन्द्रियप्रतिबिम्बितस्य जीवत्वं तथाप्ययं दोषोऽनतिक्रमणीयः, इन्द्रियाणां नानात्वेन जीवनानात्वादहं प्रत्ययस्य पृथगेवाभ्युपगन्तव्यतया अहं पश्यामि नाहं पश्यामीति प्रत्यययोर्यौगपद्यं स्यात् चक्षुर्जीवस्य दर्शनकर्तृत्वात् श्रोत्रादिजीवाना तदभावाच्च ।

अथैकस्मिन् ज्ञानेन्द्रिये प्रतिबिम्बितस्य चित्स्वरूपस्य जीवत्वमस्तु तथा च नायं दोष इत्यत आह 'अन्यतरनियमो वा' अन्यतरस्य = उपलब्ध्यनुपलब्ध्योः प्रकृतत्वेन तयोरन्यतरस्य, 'नियम.' अवधारणम्, उपलब्धे. अनुपलब्धेर्वा नियमः स्यात्, न तु अनवधारितोपलब्धिरनवधारितानुपलब्धिर्वा, चक्षुरिन्द्रियप्रतिबिम्बितस्य जीवत्वस्वीकारे चाक्षुषमेव प्रत्यक्षं स्यात् नित्यं च श्रावणादिप्रत्यक्षाभाव., एवमिन्द्रियान्तरप्रतिबिम्बपक्षेऽपि । च अतो बुद्धि. स्वीकार्या । तस्यामेकस्यां प्रतिबिम्बस्वीकारे नोक्तदोषप्रसङ्ग । तस्मात्तद्गुणसारत्वात्तद्व्यपदेश इति युक्तम् ।२।३।३२।

प्रसङ्गाज्जीवस्य धर्म्मान्तरमुपपादयति—

( कर्त्रधिकरणम्—१३ । )

कर्त्ता शास्त्रार्थवत्त्वात् ।२।३।३३॥

ब्रह्मण इव जीवस्यापि निराकारत्वं साकारत्वं च; अन्तःकरणप्रतिबिम्बितं हि चैतन्यं जीवः यस्य बुद्धिप्रतिबिम्बितचैतन्यत्वेन वा लिङ्गशरीरप्रतिबिम्बितचैतन्यत्वेन वा व्यप-

देशः, पदार्थस्यैकत्वात्। स हि सूक्ष्मतायां निराकारः मनुष्याद्याकारप्राप्तौ साकार इति वस्तुभेदाभावेऽपि धर्म्मभेदाद् व्यपदेशभेदः, यथा देवदत्त एव कदाचित् स्रग्वी इति कदाचित् कुण्डलीत्यादिना च व्यपदेशभागी तद्वत्। जीवः 'कर्त्ता' इति प्रतिज्ञा। अत्र हेतुः 'शास्त्रार्थवत्त्वात्' कर्त्तृत्वतद्व्याप्यरूपा ये शास्त्रार्थाः श्रुतिस्मृतिप्रतिपाद्या धर्म्मास्तद्वत्वात्, तथा च श्रुतयः 'स्वर्गकामो यजेत' इति 'यावज्जीवमग्निहोत्रं जुहोति' इति 'तज्जलानिति शान्त उपासीत' इति चैवमाद्याः। स्मृतयश्च 'त्रिराचामेदपः पूर्वं द्विःप्रमृज्यात्ततो मुखम्' इति (मनु० २।६०) 'विनायकस्य जननीमुपतिष्ठेत् ततोऽम्बिकाम् दूर्वासर्षपपुष्पाणां दत्त्वार्घ्यं पूर्णमञ्जलिम्।' (याज्ञवल्क्य० १।२९०) इति 'नीरजस्तमसा सत्त्वशुद्धिर्निस्पृहताशमः। एतैरुपायैः संशुद्धः सत्त्वयुक्तोऽमृती भवेत्। (याज्ञ० ३।१५६) इति चैवमाद्याः।

एतैः शास्त्रैर्जीवे कर्त्तृत्वविशेषः तद्व्याप्याः कामना यागमोक्षोपायोपादानशरीरसम्बन्धादयश्च प्रतिपाद्यन्ते। अथ कथमेतदुपपद्यते यावता प्रतिबिम्बस्य स्वरूपतो न सत्यत्वं जीवश्च चित्प्रतिबिम्बमिति चेत्, न, केवलस्य चित्प्रतिबिम्बस्य तद्रूपेण सत्यत्वविरहेऽपि उपाधेः सत्यत्वेन सत्यानां तद्गतधर्म्माणां च प्रतिबिम्बे समारोपस्यैकैकब्रह्मणः सृष्टिमारभ्यानुवर्त्तमानस्य वानादेर्वा यावदज्ञाननिवृत्ति प्रवाहरूपेणावतिष्ठमानस्यापलपितुमशक्यतया तदधिकारेण शास्त्रार्थतया-

जीवे कर्तृत्वोपपत्तेः। यत्तु जीवः कर्ता न वेति संशयः, न कर्ता 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' इत्यादावीश्वरस्यैव कर्तृत्वश्रुतेः इत्येवं प्राप्ते उत्तरमाह 'कर्ता' जीव इति, अत्र हेतुमाह 'शास्त्रार्थवत्त्वात्' शास्त्रस्य अर्थवत्त्वात् सार्थकत्वात्, कर्तृत्वं हि द्विविधं योग्यतापेक्षस्वशक्तिमात्रनियन्त्रित्वमन्यनियन्त्रित्वञ्च, तत्रेश्वरस्य कर्तृत्वमाद्यं द्वितीयं च जीवस्य, तेनैव 'यजेत' 'जुहुयात्' इत्यादिश्रुतिस्मृतिरूपं शास्त्रं प्रवर्त्तनेन सार्थकं भवति, नहीश्वरो विधिवाक्येन क्वापि नियुज्यते, जीवस्तु नियुज्यते इति व्याख्यानम्, तत्, विहितप्रतिषिद्धादिरथर्यादिभ्यः इत्याग्रामिसूत्रसमानार्थकत्वान्नोपादेयमस्माभिः ।२।३।३३।

ननु 'यजेत' 'जुहुयात्' इत्यादिश्रुत्या त्रिराचामेदपः पूर्वमित्यादिस्मृत्या च बोधितं कर्तृत्वं शरीरस्यैवास्तु न जीवात्मनः इत्याशङ्कायामाह—

## विहारोपदेशात् ।२।३।३४॥

विहरणं गमनमतिक्रमणं तस्योपदेशो विधिप्रत्ययमुक्तो वेदः। तस्मात्—जीवस्यैव कर्तृत्वं बोध्यते न शरीरस्य। स च वेदः, 'त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिरुध्य। ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि' इति श्वेताश्वतरीयमन्त्रवर्णः। प्रतरेतेति विधिप्रत्ययान्तधात्वर्थान्वितं कर्तृत्वं न शरीरे, शरीरस्य प्रतरणसाधनांशे कर्मतया निर्देशात्। यद्वा विहरणं स्वयं विचरणं तस्योप-

देशात् तच्छ्रुतेः। सा च श्रुतिः, स्वप्नेन शरीरमभिप्रहत्येत्युपक्रम्य 'स ईयते मृतो यत्र कामम्' इति ( बृ० ४।३।११ ) मन्त्रवर्णः। 'स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा च' इति च ( बृ० ४।३।१६ ) ब्राह्मणम्। नहि स्वप्ने मरणे च यथा कामं विचरणं स्थूलशरीरस्य भवति तस्माद् जीवस्य कर्त्तृत्वम् ।२।३।३४।

ननु भवतु बुद्धिमात्रस्य कर्त्तृत्वं न जीवात्मन इत्याशङ्कायामाह—

## उपादानात् ।२।३।३५।।

कर्त्तृत्वश्रुतौ बुद्ध्यात्मनोर्द्वयोरव 'उपादानात्' ग्रहणात्। सा हि श्रुतिः 'एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा, कर्त्ता विज्ञानात्मा पुरुषः' इति विज्ञानशब्दो हि बुद्ध्यर्थः श्रुतिप्रसिद्धः, विज्ञानसम्बन्धी तत्प्रतिबिम्बित आत्मा चैतन्य-जीवात्मा। विज्ञानशब्देन बुद्धिमात्मशब्देन च तत्प्रतिबिम्बितचैतन्यमुपादाय तस्यैव कर्त्तृत्वं श्रावयति, न बुद्धिमात्रस्य ।२।३।३५।

नन्वस्ति बुद्धेरपि आत्मशब्देन श्रुतौ निर्देशः, 'आत्मा महान् परः। महतः परमव्यक्तम्' इत्यत्र प्रतिपादितपूर्वत्वात्, तथा च विज्ञानात्मा बुद्धिरेवेति शङ्कायामाह—

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ।२।३।३६।।

'क्रियायां' दर्शितश्रुतिस्थेन बोद्धेति पदेनोपस्थापितायां

बोधक्रियायां 'व्यपदेशात्' वैलक्षण्येन अपदेशात् कथनात् न बुद्धिमात्रस्य कर्त्तृत्वम् इति प्रकरणाद् गम्यते। 'न चेत्' बुद्धिमात्रस्य कर्त्तृत्वाभ्युपगमे 'निर्देशविपर्ययः' निर्देशस्य 'बुद्धिश्च बोद्धव्यञ्च' इत्यादिना पूर्वमेव यो निर्देशः तस्य विपर्ययः—क्रमतोऽर्थतश्च बाधः, प्रसज्येत,—तथाहि प्रश्नोपनिषदि चतुर्थप्रश्नेऽष्टमनिगदे 'चक्षुश्च द्रष्टव्यं च श्रोत्रञ्च श्रोतव्यं च घ्राणं च घ्रातव्यं च' इति करणकर्म्मप्रवाहे पतितस्य 'बुद्धिश्च बोद्धव्यं च' इत्यस्य बोद्धव्यशब्देन बोधकर्मेण इव बुद्धिशब्देन तत् करणस्यैव निर्देशेन तत्रैवाष्टम निगदे 'एष द्रष्टा' इत्यादिना दर्शनादिकर्त्तुश्चक्षुरादिकरणभिन्नत्वेनेव बोद्धेत्यनेनापि बुद्धिभिन्नत्वेन बोधकर्त्तुरेव निर्देशो युक्तः, करणकर्म्मकर्त्तॄणां क्रमनिर्देशस्य प्राप्तत्वात्। बुद्धेः कर्त्तृत्वे च तत् क्रमबाधः, अर्थतो बाधश्च, बुद्धिरिति निर्देशस्य बोधकरणार्थकत्वात् कर्त्तृत्वकरणत्वयोर्विरोधेन बोद्धृपदार्थे तद्बाधात्। एवं च 'विज्ञानं यज्ञं तनुते' इति श्रुतौ विज्ञानपदं विज्ञानात्मपरमन्यथा-करणत्वप्रसङ्गादिति ।२।३।३६।

ननु बुद्धिभिन्नस्य स्वतन्त्रस्य चेतनस्य कर्त्तृत्वे नियमेन प्रियं हितं च कुर्यान्नाप्रियमहितं च, दृश्यते तु विपरीताचरण-मित्याशङ्कायामाह—

उपलब्धिवदनियमः ।२।३।३७।

यथा साम यथोना उपलब्धिरुपलब्धुरप्रियविषया चाहित-

विषया च भवति न तु नियमेन प्रियहितविषया, तथैव सामग्र्यधीना कार्य्यनिष्पत्तिः, कर्त्तुः प्रियहितपर्य्यवसायिनी नियमेन न भवतीत्यर्थः ॥२।३।३७॥

ननु विषमो दृष्टान्तः, उपलब्धेर्वस्तुतन्त्रतयेच्छानधीनत्वात्, कार्य्यस्य चेच्छाधीनत्वादित्याशङ्कायामाह—

शक्तिविपर्य्ययात् ॥२।३।३८॥

न विषमो दृष्टान्तः, शक्तिविपर्य्ययात्, शक्तेः शक्तिकर्त्तृकाद् विपर्य्ययात्, अन्यथाभावसाधनात्, उपलब्धेः सामग्रीकोटौ यथा शक्तेः प्रवेशः, तथा कार्य्यान्तरस्यापि । शक्तिर्हि द्विविधा, तत्राद्या ब्रह्मरूपा देवात्मशक्तिरित्यादिना या पूर्वमसकृदुक्ता । सा खलु चिदचिदुभयपर्य्याप्तसत्तैका सर्वाश्रया; द्वितीया स्वाश्रिता विविधा च । 'परास्य शक्तिर्विविधैव श्रूयते' इति मन्त्रवर्णात्, 'सर्वशक्तिसमन्विते' इति सप्तशतीस्मरणाच्च । उक्तं च पूर्वतन्त्रवार्त्तिके भट्टपादैः 'शक्तिः कार्य्यानुमेयत्वाद् यद्गतैवोपयुज्यते । तत्रैव साभ्युपेतव्या स्वाश्रयान्याश्रयापि वा ।' इति, पराख्यानां शक्तीनां भेदोऽपि दृष्टिभेदकृतः, सर्वं खल्विदं ब्रह्मेति श्रुतेः, यच्च किञ्चित् क्वचिद् वस्तु सदसद्वाखिलात्मिके। तस्य सर्वस्य या शक्तिः सा त्वम्, इति या देवी सर्वभूतेषु शक्तिरूपेण संस्थितेति सप्तशतीस्मृतेश्च । दूरत्वादिदोषशक्त्याऽदृष्टशक्त्या वा यथोपलब्धे रज्जौ सर्प इत्याकारोऽप्रियाहितरूपो विपर्य्ययः पुरुषविशेषस्य भवति, तद्वत् प्रियहितेच्छया प्रवृत्तस्यापि चेतनस्य कर्त्तृविशेषस्य स्वोपाधिशक्तेर्वा पारमेश्वरकृपानिजिवृत्तापर्य्यवसाय्यपूर्वात्मकशक्तेर्वा विपर्य्ययोऽप्रियाहितरूपो-

भवतीति दृष्टान्तदार्ष्टान्तिकयोः साम्यादित्यर्थः ॥२।३।३८॥

ननु तथापि, अवयवानामवयविनोऽनतिरेकेण गौरः पुरुषः पद्भ्यां गच्छतीत्यादौ कर्तुरनन्यस्यापि पदद्वयस्य करणत्वमवच्छेदकभेदाद् यथाभ्युपेयं, तथैव केवलबुद्धौ करणत्वं तद्व्यतिरिक्तायामपि विशिष्टबुद्धौ च कर्तृत्वमवच्छेदकभेदेनाभ्युपगन्तव्यं लाघवादित्याशङ्कायामाह—

समाध्यभावाच्च ।२।३।३९॥

यदि वृत्तिविशिष्टबुद्धेः कर्तृत्वं, तर्हि—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिश्रुत्युपदिष्टस्य समाधेरभावः प्रसज्येत, बुद्धिवृत्तिनिरोधलक्षणे समाधौ कर्तुरसत्त्वात्, तदसत्त्वे च कार्य्यस्य कर्तृसापेक्षत्वात् समाधेरेवानुदयादिति भावः। चकारः समुच्चयार्थः ॥२।३।३९॥

ननु कर्तृत्वं कृत्याश्रयत्वं कृतिश्चिद्धर्मः, सा चेष्टसाधनत्वज्ञानजन्या, ज्ञातृत्वं च चित एवेत्युपपादितमधस्तात्, तदुभयाधिकरणयोरनयोः कथं जीववृत्तित्वमित्याशङ्कां परिहरति—

( तक्षाधिकरणम्—१४। )

यथा च तक्षोभयथा ॥२।३।४०॥

यथा तक्षा, 'उभयथा' चिदंशाचिदंशाभ्याम्, चिदंशेनेष्टसाधनत्वज्ञानवान्, अचिदंशेन हस्तेन धृतकुठारादिरिति चिदचिदुभयप्रकारेण काष्ठं छिनत्ति, तथा जीवोऽपि चिदवच्छेदेनेष्टसाधनताज्ञानवान् अचिदवच्छेदेन कृतिमान्, कर्ता भवति।

न धूच्छेऽयवच्छेदकभेदेन कपिसंयोगतदभावयोरिव जीवेऽप्यवच्छेदकभेदेन ज्ञानकृत्योः सत्त्वात् कर्तृत्वं नानुपपन्नम्। यद्वा, केवलायां बुद्धौ न तादृशी कृतिः किन्तु चिदुज्ज्वलितायाम्, चिदुज्ज्वलिता सा च तदुपाधिकचित्प्रतिबिम्बरूपा मुख्यया जीवसंज्ञया व्यपदिश्यते। तस्य जीवस्य य उपाध्यंशस्तस्य स्थूलशरीरपर्यन्तवास्तवसम्बन्धात् संघातोऽपि जीवत्वेन व्यवह्रियते। व्यवहारश्चायं लौकिको वैदिकश्च। व्यक्ती भविष्यति चेदमुपरिष्टात्। तद्दृष्टान्तेन जीवस्य जातिगोत्रसम्बन्धोऽपि सूचितः। उपपादयिष्यते चेद तदन्यत्रप्रतिपत्त्यधिकरणे। तस्मात् स्थूलशरीरसम्पाद्ये कर्म्मणि मानसे च जीवस्य कर्तृत्वं नानुपपन्नमेतेनोपलब्धृत्वं जीवस्येति व्याख्यातम्। ।२।३।४०।

एवं जीवस्य कर्तृत्वं प्रसाध्य कर्तृत्वमिदं परमेश्वरमपेक्ष्य वा तमनपेक्ष्य वेति संशये निर्णयमाह—

( परायत्ताधिकरणम्—१५। )

परात्तु तच्छ्रुतेः ।२।३।४१।।

तु-शब्द पूर्वपक्षव्यवच्छेदसूचक। परमेश्वरनिरपेक्षमेव कर्तृत्वमन्यथा जीवस्य करणत्वं स्यात्, दात्रेण धान्य लुनातीत्यादिवत्। इति प्राप्ते, उत्तरमाह—'परात्' परमेश्वरात्, परमेश्वरमपेक्ष्य, 'तच्छ्रुते' तस्य = परमेश्वरापेक्षित्वस्य, श्रुतेः, श्रूयते हि 'एष ह्येव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य

उन्निनीषते, एष ह्येवासाधु कर्म्म कारयति तं यमधो निनीषते' ( कौषी० ३।८ ) इति 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति, 'यो वेदांश्च प्रहिणोति तस्मै' इति च। न चैवं जीवस्य करणत्वम्, कुर्वन्तं प्रयुङ्क्ते इत्यस्यैव कारयतीत्यनेन बोधिततया जीवस्यापि कर्तृत्वप्रतिपादनात्। देवदत्तेन पाचयतीत्यत्र तृतीयानुक्तकर्त्तर्य्येव। तस्मात् परमेश्वरः प्रयोजककर्त्ता प्रयोज्यकर्त्ता च जीव इति सिद्धम् ।२।३।४१।

नन्वेवं परमेश्वरस्य वैषम्यनैर्घृण्यापत्तिरित्याशङ्क्याह समाधत्ते—

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धस्य वायर्थ्यादिभ्यः ।२।३।४२।

कृतापेक्षो वा प्रयत्नापेक्षो वा परमेश्वरो जीवमुन्निनीषतेऽधो निनीषते च। किंतावत् कृतम्? पूर्वजन्मकृतं कर्म्म शुभाशुभरूपं धर्म्माधर्म्माविति फलितार्थः, कृतमित्यतीतकालवाचिप्रत्ययनिष्पन्नतया पूर्वजन्मकृतमिति लब्धम्। प्रयत्नापेक्ष इति प्रयत्नस्य पृथङ्निर्देशेन कृतादन्यः स इत्यस्य प्रतीतत्वात् अनागतावधः प्रयत्न इति फलितम्, स च धर्म्माधर्म्महेतुकर्म्मप्रवृत्तिः, असौ जीवोपाधिबुद्धिधर्म्मः, अनागतावस्थत्वं हि, 'अस्य प्रयत्नो धर्म्महेतुरस्याधर्म्महेतुरस्य चोभयहेतुरवश्यम्भविष्यति' इति परमेश्वरबुद्धिविषयत्वम्; यथा हि चुल्लीदहनप्रध्यमाणे कटाहचीरे स्वावयवान्यावर्त्तनानि जायन्ते, तथा

परमेश्वरस्य सिसृक्षाविज्जृम्भिताचिदंशेऽपि, यान्युदञ्चि तानि सत्त्वप्रधानानि यान्यवाञ्चि तानि तमःप्रधानानि, रजस्तु तेष्वनुगतमिति न तत् पृथगुक्तम्, तत्र तत्र चित आकाशस्येव पल्वलेषु प्रतिबिम्बानि जीवतया व्यपदिश्यन्ते। उपाधिस्वाभाव्येन सङ्कुचितांस्तानसभावानपसारयितुं परमेश्वरस्य वेदप्रकाशनं तेन च विहितेषु प्रवर्त्तनं निवर्त्तनं च प्रतिषिद्धेभ्योऽर्थं—सार्थकं भवति, यदि जीवकर्तृत्वं स्यात्। एतेन परमेश्वरस्य कारयितृत्वमपि सार्थकम्, जीवार्थसाधकत्वात्, अन्यथोपाधिस्वाभाव्येन तामसोपाधिकानां चिरमेव मोहोऽभविष्यत्। वेदप्रकाशनेन च तस्य प्रवर्त्तकत्वं निवर्त्तकत्वञ्चेति। अवैयर्थ्यादिभ्य इत्यादिपदात् स्तुतिनिन्दादिरूपार्थवादलौकिककर्म्मणां च परिग्रहः। 'तरति पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्यत्र तरितृत्वं जीवकर्तृत्वं गमयति। तण्डुलानोदनं पचतीत्यादौ लौकिककर्म्मण्यपि जीवकर्तृत्वम्। अतो यः प्रयत्नस्तदपेक्ष इतिव्याख्याने प्रयत्नपदोपादानप्रयोजनं चिन्त्यम्, कृतापेक्ष इत्यनेनैव विवक्षितार्थसिद्धेः।२।३।४२।

ननु जीवात्मनः कर्तृत्वं परमेश्वरस्य कारयितृत्वञ्चेद् भवितव्यं तयोर्भेदेन, न त्वस्ति भेदो 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' इति श्रुतेः, इत्याशङ्कामपाकरोति—

( अंशाधिकरणम्—१६ । )

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवा-दित्वमधीयत एके ।२।३।४३॥

यथा एकत्वश्रुतिरस्ति, तथा 'अन्यथा च' प्रकारान्तरेणापि जीवः प्रतीयते इति शेषः, कुतः 'नानाव्यपदेशात्' नानाव्यपदेशः, जीवस्य नानात्वश्रुतिरप्यस्ति 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्ये तु संयन्ति यथा कर्म यथा श्रुतम्' इति, 'एको वशी सर्वभूतान्तरात्मा' इति परमेश्वरस्य चैकत्वादत्यैव तस्य जीवाद् भेदः, इत्येवं प्राप्तो विरोधः 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुत्या। परिहारस्तु अंश.' इति, एकस्य परमेश्वरस्यांशो जीवः, अंशाभिप्रायेण नानात्वम्, अंश्यभिप्रायेण चैकत्वम्—अंश इत्यस्य अंशसदृशे लक्षणा प्रतिबिम्बमित्यर्थः, अन्यथा 'आभास एव च' इत्यग्रिमसूत्रेण विरोधः प्रसज्येत। बिम्बाभिप्रायेणैकत्वश्रुतिः, उपाधिभेदप्रयुक्तप्रतिबिम्बभेदाभिप्रायेण नानात्वश्रुतिः, सूर्यप्रतिसूर्यकवदिति तात्पर्यम्। प्रतिबिम्बानां मिथो नानात्वस्य दृश्यमानत्वेऽपि, वस्तुगत्या तानि बिम्बान् नातिरिच्यन्ते—इत्याह 'अपि दाशकितवादित्वमधीयत एके' एके शाखिनः = आथर्वणिका इत्यर्थः, ब्रह्मसूक्ते 'ब्रह्मदाशा ब्रह्मदासा ब्रह्मैवेमे कितवाः' इत्यपि अधीयते पठन्ति। धीवरादिनिकृष्टनरानपि ब्रह्मतया श्रावयन्ति। मलिनोपाधिप्रतिबिम्बभूतप्रतिसूर्याणामपि बिम्बभूतसूर्यानतिरेकादिति भावः ।२।३।४३।

एकेन सूत्रेन जीवनानात्वं पारमेश्वरं सर्वजीवात्मत्वञ्चोपपादयन् हेत्वन्तरमाह—

मन्त्रवर्णाच्च ।२।३।४४॥

'मन्त्रवर्णाच्च' देवीसूक्तमन्त्रवर्णाच्च जीव. परमात्मनोंऽश इति सिध्यति। तथाहि 'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः, अहं मित्रावरुणाविभर्म्यहमिन्द्राग्नी अहमश्विनोभा'। इति मन्त्रे रुद्रादीनां मिथोभेदान्नानात्वम्। 'मया सोऽन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्' अत्र मन्त्रे भोजनदर्शनप्राणनश्रवणानां कर्तृत्वस्यैकस्मिन् परमात्मनि परमेश्वरीरूपे प्रतिपादनेन जीवानां पृथक् सत्त्वाभावानुशासनाद् बिम्बभूतस्य परमात्मन एकत्वसंशित्व च प्रतिबिम्बत्वपर्यवसन्नमशत्वं नानात्वं च जीवानां सिद्ध्यति। अस्मिन् श्रोतशक्तिदर्शने देव्याः शक्तेः प्रकृतत्वेन, तत् प्रमाणं देवीसूक्तमिति विशेषमादृत्य सूत्रमिदम्। अस्य दाशकितवादिमन्त्रभिन्नमन्त्राचरादित्यक्षरार्थः ।२।३।४४।

अत्र स्मृतिमपि प्रमाणयति—

अपि च स्मर्य्यते ।२।३।४५॥

अपिः समुच्चये चकारो हेतो। स्मृतेश्चेति सूत्राक्षरार्थः। स्मृतिश्च 'एकैवाहं जगत्यत्र द्वितीया का ममापरा' इति, 'ममैवांशो जीवलोके जीवभूत. सनातन.' इति च ।२।३।४५।

ननु बिम्बानुरूपं प्रतिबिम्बं भवति सर्वत्र तथादर्शनात् सुखदुःखभागिजीवानां बिम्बभूतेन परमेश्वरेणापि सुखदुःखभागिना भवितव्यमित्याशङ्कायामाह—

प्रकाशादिवन्नैवं परः ।२।३।४६।।

'परः' परमेश्वरः, 'एवं' जीववत् सुखदुःखभागी, 'न' न भवति। 'प्रकाशादिवत्' चन्द्रसूर्यवत्। आदिपदाद् बिम्बान्तरग्रहणम्। प्रकाशो ज्योतिः। चन्द्रसूर्यादयो ज्योतिःस्वरूपाः, दर्पणस्थतदीयप्रतिबिम्बेषु दर्पणमालिन्यकम्पादिसम्बन्धो गृह्यमाणोऽपि यथा बिम्बभूतचन्द्रसूर्यादिषु नास्ति तद्वत्, उपाधिसुखदुःखयोः सम्बन्धस्य प्रतिबिम्बभूतजीवेषु ग्रहणेऽपि बिम्बभूते परमेश्वरे नास्त्येव। वस्तुतः पुनः प्रतिबिम्बेऽपि नास्ति, ग्रहणं तु दोषादेवेति ध्येयम् ।२।३।४६।

अत्रागमं प्रमाणयति—

स्मरन्ति च ।२।३।४७।।

स्मरन्ति व्यासादयो महर्षय इति शेषः। स्मृतिप्रमाणं प्रक्रान्तमिति तदनुरोधात् प्रथमं कण्ठतस्तद्ग्रहणम्, चकारेण श्रुतिरपि समुच्चीयते। जैवेन दुःखेन परमेश्वरो न सम्बध्यते इति स्मृतिर्यथास्ति तथा श्रुतिरपि। 'तत्र यः परमात्माहि स नित्यो निर्गुणः स्मृतः। न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा' इति स्मृतिः। 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' इत्याद्या श्रुतिश्चेति।२।३।४७।

नन्वेवं जीवेऽपि सुखदुःखानुपपत्तिः, सुखदुःखहेत्वोः शारीरव्यापारजन्ययोर्धर्माधर्मयोर्जीवे उपाध्यवच्छेदेनापि सत्त्वासम्भवादित्याशङ्कयाह—

अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ।२।३।४८॥

'अनुज्ञापरिहारौ' विधिनिषेधौ, स्मार्तौ यथा 'श्राद्धशेषं भुञ्जीत' इत्यनुज्ञा, अष्टम्यां नारिकेलं नाश्नीयादिति परिहारश्च, श्रौतौ यथा 'अग्नीषोमीयं पशुमालभेत' इत्यनुज्ञा, 'न ब्राह्मणायावगुरेत' इति परिहारश्च । एतदनुज्ञापरिहारविषयभूतं कर्म्म स्थूलदेहस्य, स्थूलदेहश्च न जीवः, बुद्ध्युपाधिकप्रतिबिम्बचैतन्यस्यैव मुख्यजीवत्वात्, न चान्यकृतकर्म्मफलं धर्म्माधर्म्मावन्यस्य भवति, अन्यदीयधर्म्माधर्म्मजन्ये सुखदुःखे वान्यस्य, तथापि तादृशावनुज्ञापरिहारौ युज्येते,—कुतः देहसम्बन्धात् देहाभ्यां लिङ्गदेहस्थूलदेहाभ्यां देहेन केवलेन स्थूलदेहेन वा सम्बन्धात् सम्बन्धविशेषात्, एतेनैतदुक्तं भवति, चैतन्यप्रतिबिम्बोपाधिबोधकबुद्धिशब्दस्य यदि बुद्धिमात्रपरत्वं स्यात् बुद्धिमनःसूक्ष्मभूतदशेन्द्रियात्मकलिङ्गदेहेन बुद्धे रवयवावयविभावसम्बन्धः स्थूलदेहे च संयोगविशेषः, यदि वा बुद्धिपदं तत्प्रतिपाद्यप्रधानतया लिङ्गशरीरपरं तदा स्थूलदेहेन लिङ्गशरीरस्य संयोगविशेष एव संबन्धः, एवं च चित्प्रतिबिम्बोपेतबुद्ध्यादिः स्थूलदेहान्तः सङ्घातो गौणवृत्त्या जीवशब्देनोच्यते स्थूलश्चेन्द्रदेहस्तदन्तसंघातस्य पुरुषसंज्ञापि,

यथा 'सतः पुरुषात् केशलोमानि' इति श्रूयते, तत् पुरुषीयं कर्म तत्पुरुषीयधर्माधर्म्मयोः कारणमिति बोध्यम् । सामानाधिकरण्यं वा संघातान्तर्भावेण, स्थूलदेहेन तस्य संयोगविशेषो यद्यवच्छेदकत्वाख्यः, स्वाश्रयावच्छेद्यत्वसम्बन्धेन अनुज्ञापरिहारविषयो भोजनादिकं कर्म्म, आश्रयत्वसम्बन्धेन धर्म्माधर्म्मयोः कारणमिति सामानाधिकरण्यसिद्धिः, यदि तु संयोगविशेषस्यावच्छेदकतारूपत्वं नाङ्गीक्रियते, स्वरूपसम्बन्धविशेष एवावच्छेदकत्वं, तन्निरूपितत्वस्य कारणतावच्छेदकसम्बन्धत्वेऽपि क्षत्यभावात् । धर्म्माधर्म्मयोर्बुद्धिनिष्ठयोः स्वर्गनरककारणत्वं च बुद्ध्यन्तर्भावेणैव, नातः सामानाधिकरण्यव्याघातः । उपाधिभूतबुद्धेः स्वर्गनरकौ जीवे उपचर्येते । नन्वेवं मुख्यवृत्त्या अजीवस्य संघातस्य कथं जीवत्वमुच्यते इत्यत आह 'ज्योतिरादिवत्','खं वायुर्ज्योतिरापश्च' इति श्रुतौ ज्योतिःशब्देन मुख्यवृत्त्या पञ्चीकरणप्रागवस्थज्योतिर्मात्रबोधनेऽपि पञ्चीकृतसङ्घातरूपस्यापञ्चीकृतभूयभिन्नस्याप्यादित्यादेर्यथा 'आदित्येनैव ज्योतिषा' 'चन्द्रमसैव ज्योतिषा' ( बृ० ४।३।४-५ ) इत्यादिश्रुतौ ज्योतिष्ट्वमुच्यते प्रधानेन व्यपदेशा भवन्तीति न्यायात्, तद्वत् । आदिपदात् पञ्चीकृतस्य भूतान्तरस्य ग्रहणम् एतेन लौकिकानुज्ञापरिहारावपि जीवस्थ व्याख्यातौ ।२।३।४८।

ननु प्रतिबिम्बचैतन्यमेव जीव इति सामान्यलक्षणं, जीवविशेषलक्षणं च तत्तद्बुद्ध्युपाधिकं प्रतिबिम्बचैतन्यं

चित्प्रतिबिम्बमिति वा यस्यासकृदुक्तिः, तस्य च बिम्बादनन्यतया स्वर्गनरकयोः सङ्करापत्तिः, इत्याशङ्कायामाह—

## असंततेश्चाव्यतिकरः ।२।३।४९॥

'असंततेः' भोगस्य अविस्तारात्, उपाधेरुपाहितान्तराप्राप्तेः, अव्यतिकरः असंकरः, चकारः सूचितशङ्काव्यवच्छेदार्थः। अयमाशयः, प्रतिबिम्बस्य बिम्बादनन्यत्वेऽपि—प्रतिबिम्बे स्वर्गनरकादिभोगस्य प्राप्तेः, बिम्बे च तद् भोगाभावात्, सङ्करासम्भवात्। प्रतिबिम्बे तद्भोगसम्बन्धग्रहणं तु दोषादेवेत्युक्तम् ।२।३।४८॥

ननु जीवो यदि प्रतिबिम्बचैतन्यं स्यात् मास्तूद् भोगविस्तार., तदेतत्त्वसिद्धम्, कण्ठरवेण 'अंशो नानाव्यपदेशात्' इतिसूत्रे अंशचैतन्यस्यैव जीवत्वेनोक्तत्वात्,—अंशस्य कस्यचिद् यदि स्वर्गः कस्यचिद् यदि नरकस्तदांशिनि सङ्करो दुष्परिहर:, इत्याशङ्कामपाकरोति—

## आभास एव च ।२।३।५०॥

चो हेतौ। मैवं वोच, यत 'आभास एव' प्रतिबिम्बमेव जीवो न त्वंशः, अंश इत्युक्तिस्तु तत्सादृश्येन। न वा साङ्ख्यवैशेषिकादिसम्मतमात्मनःनात्वम्। अत एव भगवदाचार्यचरणाः, "आभास एवैष जीव. परस्यात्मनो जल-

सूर्यकादिवत् प्रतिपत्तव्यः। न स एव साक्षात्, नापि वस्त्वन्तरम्। अतश्च यथैकस्मिन् जलसूर्ये कम्पमाने जल-सूर्यकान्तरं न कम्पते, एवं नैकस्मिन् जीवे कर्म्मफलसम्बन्धिनि जीवान्तरस्य तत्प्रसङ्गः, एवमप्यव्यतिकरः कर्म्मफलयोः" इति व्याचक्रुः ।२।३।५०।

ननु अंशत्वेऽप्यसङ्करउपपद्यते;—आत्मनानात्वे च सुतरामेव, अदृष्टभेदादित्याशङ्कायामंशपक्षमादौ निराचष्टे—

## अदृष्टानियमात् ।२।३।५१॥

अदृष्टं धर्म्माधर्म्मौ, तस्यानियमात्, इदमदृष्टम्—अस्यैवांशस्य, नांशान्तरस्य इति नियमाभावात्। अयमभिसन्धिः— ननूपाधेर्वा उपाहितस्य चैतन्यांशमात्रस्य वा, चिदचिदुभयात्मकब्रह्मसम्बन्धितयाविधांशस्य वा अदृष्टम्?—नाद्यस्तेन सह चैतन्यस्य सम्बन्धाभावात्, सम्बन्धाभ्युपगमे वा अंशांशिनोरभेदेन तस्य सर्वजीवसाधारण्ये बाधकाभावात्। अतएव, न द्वितीयतृतीयौ, अंशांशिनोरभेदात्। नच घटाकाश-पटाकाशादीनामिवान्योऽन्यं भेदः इति वक्तव्यम्। तत्रैव भेदा-सिद्धेः। भेदस्य वास्तवकाल्पनिकत्वविकल्पासहत्वाच्च। यदि वास्तवो भेदः 'नान्योऽतोऽस्ति द्रष्टा' इत्याद्येकत्वश्रुतिर्बाध्येत। यदि काल्पनिकः, जीवान्तरेऽपि काल्पनिकत्वाविशेषेण सङ्कर-प्रसङ्गात्। कल्पनाया अपि प्रतिव्यक्ति भिन्नत्वमितिमतमात्म-नानात्वपक्षस्याग्रिमसूत्रेण निराकरिष्यते ।२।३।५१।

तथाहि—

अभिसन्ध्यादिष्वपि चैवम् ।२।३।५२॥

'अहमिदं फलं प्राप्नवानि' 'इदं परिहराणि' इत्येवं व्यक्तिभेदभिन्ना येऽभिसन्ध्यादयो भावाः, त एव भेदकल्पनाया अहमहमित्याकारेण प्रत्यायकाः, तथाच व्यक्तिभेदभिन्ना कल्पना, तयैव सङ्करो निराकरणीयः, इति प्राप्तेऽभिधीयते, अभिसन्ध्यादिष्वपि चैवमिति। अभिसन्धिरिच्छा, आदिपदात् प्रवृत्तिनिवृत्त्यादिपरिग्रहः। इच्छाकारस्तूक्त । 'एवम्'—तेषु अभ्युपगम्यमानेष्वपि प्रागुक्त एव दोषः स्यात्। एतेनैतदुक्तं भवति—अभिसन्धिः कस्य? उपाधेर्वा? उपाहितचिदंशस्य वा? उपाध्यवच्छिन्नांशस्य वा? नाद्यः, उपाधिचिदंशयोरत्यन्तभिन्नत्वात्, अन्यस्थितत्वेऽन्यत्र फलजनकत्वे व्यभिचारात्; न द्वितीयः, उपाहितचिदंशस्य निर्गुणतया तत्राभिसन्ध्याद्यसम्भवात्, न तृतीय, तस्य चिदचिदात्मकब्रह्मसम्बन्धितथाविधांशपर्य्यवसितत्वे नाशांशिनोरभेदात् सर्वजीवसाधारण्ये बाधकाभावेन सङ्करस्य दुर्वारत्वात्। आत्मनानात्वपक्षोऽप्येतेन निराकृत । तथाहि साङ्ख्या वैशेपिकाश्चात्मनानात्वं मन्यन्ते तथाच सङ्करो नास्त्येव, अभिसन्ध्यादिजन्ययोर्धर्म्माधर्म्मयोः प्रतिव्यक्तिविभिन्नतया तत्फलभूतस्वर्गनरकयोस्तत्तन्नियतयोरात्मान्तरासम्बन्धित्वादिति प्राप्ते तदुत्तरवचनमिदम्—'एवम्' एव दोषस्तत्राप्यभिसन्ध्यादिषु प्रसज्यते—इति तदर्थः। सर्वेषामात्मनां

विभुत्वात् सर्वदेहसम्बन्धात्, साङ्ख्यमते—संसारिणा-मात्मनां प्रकृतिसम्बन्धस्य विभिन्नबुद्ध्यादिसम्बन्धस्य चा-विशेषात्, वैशेषिकमते—सर्वदेहेषु सर्वेष्वात्मसु मनःसंयोगस्या-विशेषेण तज्जन्याभिसन्ध्यादीनां सर्वसाधारण्ये व्यावर्त्तकत्वा-भावात्। अथ युक्तिसंयोगो मनःसंयोगो वा एकैकस्मिन्ना-त्मनि विलक्षणः कल्पनीयः येनैकैकस्यात्मनो विलक्षणा अभिसन्ध्यादयः स्युरिति चेत्, किं तद् वैलक्षण्यप्रयोजकम्? अदृष्टमिति चेदापतितं चक्रकादिदापैः, अदृष्टस्य अभिसन्ध्या-दिजन्यत्वात् अभिसन्ध्यादिजनकपरम्परासु तस्य प्रवेशाच्च। नचास्त्यत्र श्रौतं प्रमाणं किञ्चित्। आभासे तु 'एकस्तथा सर्व-भूतान्तरात्मा रूपं रूपं प्रतिरूपो बभूव,' इति मन्त्रवर्णः, 'अप्सु परीव दद्दशे' इत्यादिकं श्रुत्यन्तरं च। एतेन नीरूपस्य प्रति-बिम्बासम्भव इत्यपास्तम्, लोहितादिरूपस्य जपादिवृत्ते प्रति-बिम्बदर्शनात्, प्रतिध्वनौ ध्वनिप्रतिबिम्बत्वाच्च सरूपस्यैव प्रतिबि-म्बपात इति नियमे व्यभिचाराच्च। नचांशपक्षेऽप्यस्ति श्रौतं स्मार्त्तं च प्रमाणम्, 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सह-स्रशः प्रभवन्ते सरूपाः। तथाक्षराद् विविधाः सोम्यभावाः' (मुण्डक० २।१।१) इति 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति प्रदर्शिता स्मृतिश्चेति वाच्यम्, मुण्डकमन्त्रस्य सरूपा इति विविधा भावा इति लिङ्गाभ्याम् अजामेकां लोहित-शुक्लकृष्णामिति मन्त्रपूर्वार्द्धसमार्थकत्वाचिदचिदात्मकब्रह्मप्रकृ-तिकं जगदित्यस्य प्रतिपादनेन परमेश्वरजीवयोरंशांशिभावे ता-

दपर्य्यविरहात्, आभासश्रुत्यनुरोधेन 'ममैवांशः' इति स्मृतेरं-शतुल्यपरतायाः प्रागुपदर्शितत्वाच्चेति ध्येयम् ।२।३।५२।

नन्वंशांशिनोरभेदात् सङ्करदोषोऽशवादे दुष्परिहरः, इति यदुक्तं तन्न, आकाशस्यैकत्वेऽपि शङ्खादिप्रदेशे जायमानशब्दस्य प्रादेशिकत्ववदभिसन्ध्यादीनां तत्तत्स्थूलदेहप्रदेशावच्छिन्नत्वं भवतीति न सङ्करप्रसङ्ग, इत्याशङ्कागर्भं तत्समाधानमाह—

## प्रदेशादितिचेन्नान्तर्भावात् ।२।३।५३॥

'प्रदेशात्' स्थूलदेहप्रदेशमाश्रित्य, अभिसन्ध्यादिमत्त्वम् 'इति चेत्' इति यदुच्यते 'न' तन्न युक्तम्, यस्मिन्नासने स्थितस्य पुरुषस्य स्थूलदेहावच्छेदेन यत्र परमेश्वरांशो जीवेऽभिसन्ध्यादि-कमनूत् क्षणान्तरे तदेवासनमध्यासीनस्य पुरुषान्तरस्य स्थूलदेहे तस्यैवांशस्य 'अन्तर्भावात्' सङ्करप्रसङ्गतादवस्थ्यात्, स्पन्दवतः शरीरस्य गतिमत्त्वेऽपि ध्रुवस्य परमेश्वरांशस्य तत्प्रदेशस्थित्यै-कत्वात्, कालभेदेऽपि पूर्वगगनवत्। न चावच्छेदकभेदादंशभेद इति वक्तव्यम् अवच्छेद्यस्यावच्छेदकाधीनतायामेतदभ्युपग-मस्यायुक्तत्वादन्यथा स्थानभेदेन देवदत्तभेदः प्रसज्येत, प्रति-बिम्बपक्षेऽवच्छेदकाधीनत्वमवच्छेद्यस्य, अवच्छेदकभूतमुपाधिं विना अवच्छेद्यस्य प्रतिबिम्बस्य स्वरूपलाभाभावात्, अंशरूपमव-च्छेद्य तु अवच्छेदकं विनाप्यस्तीत्यतस्तस्य तदधीनत्वाभावात्। गृहान्तरादौ शब्दानुत्पत्तिश्च तदवच्छेदेन गुणसमारुतायभावा-दुपपद्यते। आत्मनानात्ववादे प्रादेशिकत्वयुक्तिरसङ्गत्येव,

गौण्यसम्भवात् ।२।४।२॥

'तस्माद्वा एतस्मादाकाशः सम्भूत आकाशाद्वायुः' इत्यादि प्रक्रियायां संभवशब्दस्य सर्वमहाभूतान्वितार्थत्वेन, वाय्वादिवद् वियतोऽप्युत्पत्तिर्लब्धा, अत्र तु 'असम्भवात्' महाभूतसृष्टिप्रवाहे प्राणानामप्रवेशेन सम्भवपदार्थान्वयित्वाभावात् 'आपोमयः प्राणः' इतीयं श्रुतिः 'गौणी' लक्षणया अद्भिः पुष्टः प्राण इत्यर्थपरा, न तु अपां विकारः प्राण इति मुख्यार्थपरा। तस्मात् प्राणा नोत्पद्यन्ते ।२।४।२।

अनुत्पत्तिसाधकं व्यक्तहेतुमनन्तरमाह—

तत्प्राक्श्रुतेश्च ।२।४।३॥

तेषां प्राणानां 'प्राक्-श्रुतेः' प्राक्=सृष्टेः पूर्वं श्रुतेरित्यर्थः, चकारः समुच्चायकः पूर्वपक्षसमाप्तिद्योतकश्च। सा च श्रुतिः—'असद्वा इदमग्र आसीत् तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीत् तदाहुः के ते ऋषय इति, प्राणा वाव ऋषयः' इति। अतः प्राणोत्पत्तिश्रुतयो गौण्यः। तस्मात्, प्राणा नोत्पद्यन्त इति पूर्वपक्षः ।२।४।३।

प्राणशब्दार्थं विघृण्वन्नुत्तरयति—

तत्पूर्वकत्वाद्वाचः ।२।४।४॥

प्राणशब्दः प्राणापानादिरूपेण पञ्चधाविभक्ते पदार्थे तद्वृत्ति वा मुख्यवृत्तिः। इन्द्रियसामान्ये गौणवृत्तिः, त्रिविधा एव प्राणा उत्प-

द्यन्ते 'वाचः' वाक्छब्देनोपलक्षितस्य इन्द्रियगणस्य 'तत्पूर्वकत्वात्' मुख्यप्राणपूर्वकत्वात् मुख्यप्राणस्य यद्युत्पत्तिः, तत्पूर्वकाणामिन्द्रियाणामुत्पत्तिः कैमुतिकन्यायसिद्धा। तत्पूर्वकतया श्रुतिसिद्धा चेतिसूत्रार्थः। 'प्राणो वै ज्येष्ठश्च श्रेष्ठश्च' (बृह० ६।१।१) 'स प्राणमसृजत प्राणात् श्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम्' इति (प्रश्न० ६।४)। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मुण्डक०) इति च श्रुतेः।

ननु 'तेजोमयी वाक् आपोमयः प्राणः' इति श्रुत्या वाक्पूर्वकत्वं प्राणस्य प्रतिपाद्यते इति चेत्, तत्र सत्यटेर विकारवचनत्वाभावेन सृष्टिक्रमे वाक्पूर्वकत्वस्याप्रतीतेः। यदुक्तं प्राणानां सृष्टेः पूर्वतनत्वं श्रुतिप्रामाण्यात्तदेतेन परिहृतम् तदपत्तेः पूर्वं प्राणानामनभिव्यक्तत्वेनासद्व्यपेक्षावस्थानस्य सत्कार्यवादिनामुत्पत्तेरेव मानत्वात्। अत्र तत्त्वञ्च स्पष्टश्रुत्यैव परिहृतम्, गौणी-कल्पना त्वसति बाधे नोपपद्यते। अत्र च, यद्यपि सर्व एव ते प्राणा उत्पद्यन्ते तथापि मुख्यप्राणस्यात्मे विचार्यमाणतयास्मिन्नधिकरणे प्राणशब्द इन्द्रियवचन इति केचित्, तच्चिन्त्यम् ।२।४।४।

उत्पत्तिं प्रसाध्य गौणप्राणानां संख्याविप्रतिपत्तिं निराकुरुते—

( सप्तगत्यधिकरणम्—२ )

## सप्त गतेर्विशेषितत्वाच्च ।२।४।५॥

वागादयः प्राणा बहुधा श्रूयन्ते—तत्र छान्दोग्ये 'न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्येवाचक्षते।'

सर्वेषामात्मनामेकस्य शरीरस्याभ्यन्तरे मनस्थाने भाव मन संयोगस्य सर्वत्रैव सम्भवादिन्द्रियेणात्मना च म संयोगमभ्युपगच्छता मतस्य त्वणुना मनसो नास्त्यनेकस, इत्युक्तस्यानिरासात्, नान्योऽतोऽस्ति द्रष्टा इत्यादिश्रुतिविराध तस्मादाभास एव परमेश्वरस्य जीव इति सिद्धम् ।२।३।५३।

इति ब्रह्मसूत्रशक्तिभाष्ये विराधपरिहाराख्ये द्वितीयाध्यार वियदादिश्रुतिसमाधान नाम तृतीय पाद ।

## द्वितीयाध्याये चतुर्थः पादः ।

परप्रत्युपस्थापितस्वाभ्युपगमविरोधनिरसनाय श्रुतिविरोधमपाकुर्वन् प्रासङ्गिकबलवज्जिज्ञासाविषयजीवस्वरूपनिरूपणान्तरितमपि तं चतुर्थपादे पुनरुत्थापयति ।

( प्राणोत्पत्त्यधिकरणम्—१ )

### तथा प्राणाः ।२।४।१॥

अत्र तथाशब्दस्तृतीयपादोपक्रान्तश्रुतिविरोधपरिहारस्यास्मिन्नपि पादे कर्त्तव्यतासूचनाय । तृतीयपादाद्यसूत्रे यथा वियन्नोत्पद्यत इत्युक्तम् , तथा प्राणा नोत्पद्यन्ते, इत्युच्यते; अश्रुतेः, 'तत्तेजोऽसृजत' इत्यादि—छान्दोग्यस्थसृष्टिप्रक्रियायां 'तस्माद्वा एतस्मादाकाशः सम्भूतः' इत्यादि तैत्तिरीयकसृष्टिप्रक्रियायाञ्चोत्पत्त्यश्रवणात् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया ब्रह्मप्रकृतिकं जगदिति प्राणोत्पत्तिकोटिः छान्दोग्यादिसृष्टिप्रक्रियायां तदुत्पत्त्यश्रवणादनुत्पत्तिकोटिश्चोपतिष्ठते, ततश्च संशये पूर्वपक्षपरं सूत्रमिदम् ।२।४।१।

ननु वियत उत्पत्तेरेव सिद्धान्तविषयतया अनुत्पत्तिपक्षे दृष्टान्ततया तस्य ग्रहणं नोचितमित्याशङ्कायां दृष्टान्तदार्ष्टान्तिकयोः सर्वधर्म्माणामैक्याभावेऽपि न क्षतिरित्याशयेन वियतो दृष्टान्ततया ग्रहणमनुत्पत्तौ तत्रत्यहेतोरुपादानाय, तस्यानुत्पत्ताविव बाधस्तु प्राणानुत्पत्तिपक्षे नास्तीति प्रतिपादयति—

( ५।१।१५ ) इत्यत्र वाक्चक्षुश्रोत्रमनांसीति चत्वारः, 'सप्त प्राणाः प्रभवन्ति' ( मुण्ड० २।१।८ ) वाक्चक्षुर्द्वयं श्रोत्रद्वयं घ्राणद्वयं चेति, हस्तसहितास्त एवाष्टौ,'अष्टौ ग्रहा अष्टावतिग्रहाः' इति श्रुत्यन्तरे ( बृ० ३।२।१ ) परत्र 'सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ' ( तै० स० ५।१।७।१ ) इति, पायूपस्थाभ्यां सहितास्त एव शीर्षण्या इति नव, 'नाभिर्दशमी' इति क्वचिद् दश, 'दशेमे पुरुषे प्राणा आत्मैकादशः' (बृ० ३।९।४) इत्येकादशाप्यन्यत्र । इत्येवं प्राणानां सख्याविषये संशये पूर्वपक्षः ,'सप्त' सप्तैव प्राणाः, कुतः ? 'गतेर्विशेषितत्वाच्च' गतिस्तु जायमानेन म्रियमाणेन वा जीवेन सह लोकेषु सञ्चरणरूपा सप्तानामेव श्रूयते, 'सप्तेमे लोका येषु सञ्चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त' ( मुण्ड० २।१।८ ) इति वीप्सा च पुरुषभेदाभिप्राया । 'विशेषितत्वात्' ऋषिवृत्तिसप्तत्वसख्यासामान्येन इतरेभ्यो व्यवच्छिन्नत्वाच्च । सा च श्रुतिः 'के ते ऋषयः इति प्राणा वाव ऋषयः' इति प्रागुपदर्शिता । प्रसिद्धा हि ऋषीणां सप्तत्वसंख्या, तत्सामान्येन ऋषित्वं प्राणानामिति । ते च प्रागुपदर्शिताः शीर्षण्याः सप्त विशारीरकभाष्यम् । 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम् ।' इति विशेषिता, प्राणाः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणबुद्धिमनांसीति तु श्रीभाष्यम् ।

सख्यान्तरविशिष्टाः प्राणाश्च कचिदेषामन्तर्भूताः, कचिच्चाल्पोपकारकतया नैतत्समशीला इति तत्तत्सख्याव्यवच्छेदात् सप्तैव प्राणा इति ।२।४।।

अत्रोत्तरम्—

हस्तादयस्तु स्थितेऽतो नैवम् ।२।४।६॥

तुकारः पूर्वपक्षव्यवच्छेदार्थः । 'स्थिते' अमुक्ते जीवे 'हस्तादयः' आदिपदात् हस्तातिरिक्तकर्मेन्द्रियचतुष्कज्ञानेन्द्रियपञ्चकमनसां परिग्रहः । चित्तस्य मनसि बुद्धौ वान्तर्भावात्, प्राणा एकादशेति फलितम् . भवन्तीतिशेषः । 'अतः' हस्तादीनां प्राणानां सत्त्वात् 'नैवम्' 'एवं' सप्तप्राणा इति मतं 'न' न युक्तमित्यर्थः । अत्रोदाहृता हि श्रुतिः 'दशेमे पुरुषे प्राणा आत्मैकादशः' इति, आत्मशब्देनात्र मनो गृह्यते 'इन्द्रियाणि दशैकञ्च' इति च स्मृतिः ।

आदानवचनविहरणोत्सर्गानन्दाः शब्दस्पर्शरूपरसगन्धाश्च दशप्राणवृत्तयो भवन्ति तत्त्वभेदहेतवः । एतेषां प्रव र्तकत्वं सुखादिप्रयत्नकरणत्वं च मनसः; बुद्ध्यहङ्कारयोर्मनोद्वारकयोरेव विषयसम्बन्धाच्च तयोः पृथगिन्द्रियत्वम् । अत एकादशाधिका न भवन्तीन्द्रियापरनामानः प्राणाः, 'एकादशं मनोज्ञेयम्' इति स्मृत्यन्तरात् । 'सप्त शीर्षण्याः' इति स्वधिष्ठानभेदात् वृत्तिभेदाद्भेदे तु वागादयः प्रागुक्ताश्चत्वारो भवन्ति, तेषामेव गतिः नाधिष्ठानविशेषाणां स्थूलानाम् । शीर्षण्या इति स्थाननिर्देशेन सर्वप्राणानां तेनाग्रहणात्, द्वाववाञ्चाविति पृथगुक्तेश्च । गतिरपि सर्वेषां प्राणानाम्, 'दशेमे पुरुषे प्राणाश्चात्मैकादशस्ते यदास्माच्छरीरादुत्क्रामन्त्यथ रोदयन्ति'

इति श्रुतेः ( बृ०३।६।४ ) तस्मादेकादशैव प्राणा न सप्तेति सिद्धम् ।२।४।६।

धर्मान्तरमाह

( अण्वधिकरणम्—३ )

अणवश्च ।२।४।७।।

उत्पत्तिमन्तः खलु भावा धर्म्मिणः स्थूलाः सूक्ष्माश्च भवन्ति, श्रुतिप्रमाणकोत्पत्तयः प्राणाः स्थूलाः सूक्ष्मा वेति संशये— 'सप्त वै शीर्षण्या द्वाववाञ्चौ' इति श्रुतेः, शीर्षण्यादय इन्द्रियाख्याः प्राणाः स्थूला इति गम्यते प्रत्यक्षविषयत्वात् । इत्येवं प्राप्तेऽभिधीयते, अणवश्चेति ये एकादशत्वसंख्यावत्तया प्रतिपादिताः सर्व एव ते 'अणवः' सूक्ष्माः अदृश्याः न त्वणुपरिमाणाः, कृत्स्नदेहव्यापिकार्य्यानुपपत्तिप्रसङ्गात् । चः समुच्चयेऽवधारणे वा । अन्यथा, प्रागुपदर्शितश्रुत्युक्तोत्क्रान्तिदशायां प्रत्यक्षाः स्युरिति भावः । यद्वा, 'शीर्षण्याः' इति श्रुत्या परिच्छिन्नत्वं 'त एते सर्व एव समाः सर्वेऽनन्ताः' इतिश्रुतेरानन्त्यं नामापरिच्छिन्नत्वमिति परिच्छिन्नत्वापरिच्छिन्नत्वसंशये, अधिष्ठानरूपावच्छेदकस्य परिच्छिन्नतया स्वरूपेणानवच्छिन्नानामपि शीर्षण्यत्वाभिधानमिति प्राप्तेऽभिधीयते, अणवश्चेति, उत्क्रान्तिश्रुत्यनुरोधात् परिच्छिन्ना एवेति तदर्थः । आनन्त्यश्रुतिश्च जीवभेदाभिप्रायेणासङ्ख्येयत्वं प्रतिपादयति नत्वपरिच्छिन्नत्वमिति आ

इदानीं विशेषतो मुख्यप्राणोत्पत्तिमुपपादयति—

(श्रेष्ठप्राणाधिकरणम्—४)

श्रेष्ठश्च ।२।४।८।।

मुख्यप्राणश्चोत्पद्यत इति शेषः । ननूक्तपूर्वमेतत्, कथं पुनरुच्यते, इति चेत् विशेषतः संशयस्य पूर्वपक्षस्य च तत्रासूचनेन न्यूनतया, तद्घटितस्याधिकरणस्यास्य वक्तव्यत्वात् । एवंच, यथा 'प्राणमसृजत' इतिश्रुतिः, तथा 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यत् न परः किंच नास ।' (ऋ० सं० ८।७।१७) इति नासदीयसूक्तमन्त्रवर्णोऽस्ति । तत्रानीदिति प्राणकर्मोपादानात् प्राक् सृष्टेः प्राणसत्तां सूचयति । तस्मात् संशयः मुख्यप्राण उत्पद्यते न वा ? नोत्पद्यते प्रदर्शितनासदीयसूक्तमन्त्रवर्णात्, 'प्राणमसृजत' इति श्रुतिश्च प्राणसम्बन्धिवृत्तिविशेषपरेति प्राप्तेऽभिधीयते, श्रेष्ठश्चेति । परं तस्मादन्यत् किंचिन्नासीदिति प्रवेदयता तन्मन्त्रवर्णेनापि ब्रह्ममात्रसत्ताप्रतिपादनेन, प्राणादिसत्तायाः प्राक्सृष्टेः प्रतिषेधात् । आनीदित्यस्य च कारणावस्थस्वात्मकप्राणमादायोपपादयितुं युक्तत्वात् । 'प्राणस्य प्राणम्' इति श्रुतेः । स्वात्मकप्राणातिरिक्तप्राणवत्तायाः, 'अप्राणो ह्यमनाः शुभ्रः' इति श्रुत्या प्रतिषेधाच्च । श्रेष्ठ इति हि मुख्यप्राणमाह 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' इति श्रुतेः । तस्मान्मुख्यः प्राणश्चोत्पद्यत इति ।२।४।८।

विप्रतिपत्तिविषयं मुख्यप्राणस्वरूपं प्रसक्तनिषेधमुखेन प्रतिपादयति—

( वायुक्रियाधिकरणम्—५ )

**न वायुक्रिये पृथगुपदेशात् ।२।४।९॥**

'यः प्राणः स वायुः' इति श्रुते मुख्यप्राणः किं महाभूतविशेषः 'प्राणोऽस्मि प्रज्ञात्मा' इति श्रुतेर्बुद्धिवृत्तिविशेषरूपो वा ? अथ कथमियं द्वितीया कोटिः ? यतः प्रज्ञात्मेत्यनेन 'यो वै प्राणः सा प्रज्ञा या च प्रज्ञा स प्राणः' इत्यनन्तरवाक्येन च प्रज्ञाप्राणयोरेकत्वबोधनाद् वृत्तिविशेषरूपतया प्राणस्याप्राप्तेरितिचेत्, नैष दोषः, वृत्तितद्वतोरभेदविवक्षया प्रज्ञावृत्तिविशेषस्यैव तत्र प्रज्ञापदेनोपादानात्, अन्यथा 'सह ह्येतावस्मिन् शरीरे वसतः' इतिहेतुमन्निगदो नोपपद्येत, वृत्तिपक्षे तु वृत्तिवृत्तिमतोः स्थिति-यौगपद्यं न विरुध्यते, तादात्म्यकथनहेतुश्च स्थितियौगपद्यम्, अतएव मतिरित्यसुरिति च प्रज्ञाननामतया ऐतरेयश्रुतावुक्तम् । इत्येवं प्राणस्य प्रज्ञावृत्तिरूपतायाः सिद्धेः । एतदभिसन्धायोक्तं सांख्याचार्यैः सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चेति, सामान्यकरणवृत्तेरपि प्रज्ञावृत्तित्वानपायात्,—इति संशये कोटिद्वयस्यैव श्रुतिमूलकतया द्वावेव पक्षौ प्राप्तौ, तत्र वायुपक्षे प्राणोऽस्मि प्रज्ञात्मेति श्रुतिरुपासनार्था प्रज्ञावृत्तिपक्षे यः प्राणः स वायुरिति श्रुतिश्च वायुसाम्यहेत्वाहारविहारयुक्त्युपदे-शार्थेति । अनेन सूत्रेण तावुदस्यति, 'न वायुक्रिये' मुख्यो हि

प्राणः—न वायुस्वरूप, न वा प्रज्ञावृत्तिरूपक्रियाविशेषस्वरूपः, त्रिगुणाया बुद्धेर्या करणसामान्यसाधारणी राजसी वृत्तिस्तस्याश्चलनात्मकत्वात् क्रियापदेन तदुपस्थापनात्। कुतो न वायुक्रिये ? तदुच्यते, 'पृथगुपदेशात्'='एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति श्रुतौ प्राणवाय्वोर्भेदेनाम्नानात्, 'बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहं कर्त्तव्यं च चित्तं च चेतयितव्यं च, तेजश्च विद्योतयितव्यं च, प्राणश्च विधारयितव्यं च' इतिश्रुतौ प्रज्ञाप्राणयोर्भेदेनाम्नानाच,—बुद्धिप्रज्ञयोरनर्थान्तरत्वात्, तदुक्तं महाभारतीयाश्वमेधिकपर्वणि चत्वारिंशाध्याये 'महानात्मा मतिर्विष्णुर्जिष्णुः शम्भुश्च वीर्यवान्। बुद्धिः प्रज्ञोपलब्धिश्च तथा ख्यातिधृतिः स्मृतिः। पर्यायवाचकैः शब्दैर्महानात्मा निगद्यते।' इति।२।४।९।

तत् कः खलु मुख्यप्राणपदार्थः ? इत्यपेक्षायामाह—

चक्षुरादिवत्तु तत्सहशिष्टयादिभ्यः।२।४।१०॥

तुकारः प्राणस्य करणभिन्नत्वव्यवच्छेदार्थः। प्राणो हि चक्षुरादिवत् जीवस्य करणविशेष. बुद्धिरित्यर्थः; कुतः 'तत् सहशिष्टयादिभ्यः' तत्सहशिष्टिः=तैः—चक्षुरादिभिः सहोपदेश., चक्षुरादीत्यादिपदात् श्रोत्रादीनां परिग्रहः। शिष्टयादिभ्य इत्यादिपदात् उपदिष्टस्य कमपि विशेषमाश्रित्य पुनरुपदेशः, श्रुत्यन्तरं च, तेभ्यः। ननु चक्षुरादिभि. सहोपदेशो यथा, चक्षुरच

द्रष्टव्यं च श्रोत्रञ्च श्रोतव्यं चेत्युपक्रमाया बुद्धिश्च बोद्धव्यं चेति श्रुतौ बुद्धिरस्ति, तथा तस्यामेव श्रुतौ तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च' इत्युत्तरप्रतीके प्राणस्य पृथङ् निर्देशात्, बुद्धिप्राणयोर्भेदः प्रदर्शित एवेत्याशङ्कायां 'शिष्ट्यादिभ्यः' इत्यादिपदमुपात्तम्। तेन 'तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च' इति प्रतीके यथा 'तेजश्च तेजोमात्रा च' इति प्रागुक्तस्य तेजसः पुनरुपदेशस्तथा बुद्धिश्च बोद्धव्यं चेत्यत्रोक्ताया बुद्धेरेव प्राणशब्देन पुनरुपदेशः कर्म्मभेदबोधनाय, तैर्थिकान्तराभ्युपगतजीवनयोनियत्नापरनामप्राणनाख्यराजसवृत्तिविशेषवत्या बुद्धेः प्राणशब्देनोक्ताया विधारणं कर्म्म, न च कर्म्मभेदाद् वस्तुभेदः, यथा एकोऽप्यग्निर्दाहकः पाचकः प्रकाशकश्चेति तद्वत्। श्रुत्यन्तरं च प्राणः प्रज्ञात्मेति प्रागुपदर्शितम्। तस्मात् प्राणनाख्यराजसक्रियाविशिष्टा बुद्धिः प्राणः नतु पदार्थान्तरमिति। ननु 'सह ह्येतावस्मिन् शरीरे वसतः' इति श्रुतेः प्रागुपदर्शितायाः का गतिरिति चेन्नैष दोषः, यया वृत्त्या बुद्धेः प्राणत्वं तस्या बुद्धिवृत्त्यन्तराद्भेदप्रदर्शनाय वृत्तिवृत्तिमतोर्भेदविवक्षया तथाभिधानात्, प्राणनवृत्तिजनितप्रवेशनिर्गमवत्तया शारीरवायौ भूतेऽपि प्राणशब्द औपचारिकः, ततश्चास्याप्यस्मवायुरिति संज्ञा। अतएव यो वै प्राणः स वायुरिति श्रुतिरप्युपपादिता भवति। 'एतस्माज्जायते प्राणो मनः' 'तदैक्षत बहु स्यां प्रजायेय' इत्यादिश्रुतीनामेकवाक्यत्वे—प्राणबुद्ध्यो-

रनन्यत्वं स्वरूपतः सिद्ध्यति, वृत्तिभेदाच्च कार्य्यभेद इति ध्येयम् ।२।४।१०।

ननु प्राणो न बुद्धिरकरणत्वात्, घटादिवत्, न च बुद्धेर्येतृकरणत्वं बुद्धिश्च बोद्धव्यं चेतिश्रुतिप्रमाणकं तेनैव प्राणस्य करणत्वं सिध्यति, प्राणस्य बुद्ध्यव्यतिरेकादिति वाच्यं बुद्ध्यव्यतिरेकनिरासाय प्रस्तुतविचारे स्वाभ्युपगत बुद्ध्यव्यतिरेकस्य प्रमाणत्वेनानुपादेयत्वात्, सहशिष्टेश्चासन्नत्वात् । इत्याक्षेपं परिहरति—

अकरणत्वाच्च न दोषस्तथा हि दर्शयति ।२।४।११।।

'अकरणत्वात्' प्राणस्य करणभिन्नत्वात् 'दोषः' बुद्धिस्वरूपत्वबाधः, 'न' प्राणे न भवति, 'तथा हि दर्शयति' 'तथा' करणत्वप्रकारेण, 'हि' यतः दर्शयति—श्रुतिरेव ज्ञापयति प्राणस्य विधारयितव्यं चेति धारणं प्रति प्राणस्य करणत्वम्, एतेनैवदुक्तं भवति, यथा हि एकस्य काष्ठस्य पाके प्रहारे च करणत्वं—काष्ठैः स्थाल्यामोदनं पचति काष्ठैः प्रहरतीति च प्रयोगात्, यथा वा 'मनसा ह्येव पश्यति मनसा शृणोति' 'मनसा विजानाति' ( बृ०१। ।३ ) इति श्रुतेरेकस्य मनस एव, दर्शनश्रवणविज्ञानेषु करणत्वम्, तथा बुद्धेर्बोधं प्रतीव शरीरधारणं प्रत्यपि करणत्वम् । तस्मादकरणत्वात् प्राणो न बुद्धिरित्याक्षेपः परास्तः ।२।४।११।

नन्वेवमपि प्राणो न बुद्धिः पञ्चधाविभक्तत्वात्, आकाशादिभूतपञ्चकवत्, इत्यनुमानेन प्राणे बुद्धिव्यतिरेकसिद्धिरित्याशङ्क्याह—

पञ्चवृत्तिर्मनोवद् व्यपदिश्यते ।२।४।१२।।

यथा एकमेव मनः 'कामः सङ्कल्पो विचिकित्सा' इत्युपक्रम्य 'एतत् सर्वं मन एव' (बृ० १।५।३) इति श्रुत्या सङ्कल्पादि पञ्चान्यूनवृत्ति मनो व्यपदिश्यते, तथा प्राणोऽपि प्राणापानसमानोदानव्यानाख्याभिः पञ्चभिर्वृत्तिभिर्विशिष्टो व्यपदिश्यते, 'प्राणोऽपानो व्यान उदानः समानः' ( बृह० १।५।३ ) इति श्रुत्येति शेषः । एतेनैतदुक्तं भवति, प्राणो न पञ्चधा विभक्त, किन्त्वेक एव धर्मी, पञ्च च तद्वृत्तयः प्राणाद्याः । धर्मी प्राण प्रज्ञात्मा बुद्धिरिति, महानित्यादिकानि तस्यैव नामान्तराणि । वृत्तिवृत्तिमतोर्भेदाभेदसम्बन्धः, भेदसम्बन्धाभिप्रायेण 'सह वसतः' इति अभेदसम्बन्धाभिप्रायेण 'यो वै प्राणः सा प्रज्ञा' इत्यादि । पञ्चधा विभागश्च वृत्तीनां न तु वृत्तिमतः । वृत्तिमति प्राणे पञ्चधा विभक्तत्वरूपहेतोरसिद्धया न तेनानुमानेन प्राणे बुद्धिव्यतिरेकसिद्धि । तस्माद् बुद्धिरेव प्राण इति सिद्धम् ।२।४।१२।

गौणप्राणानां परिमाणमुक्तं मुख्यप्राणस्यापि तदाह—

( श्रेष्ठाणुत्वाधिकरणम्—६ )

अणुश्च ।२।४।१३।।

मुख्यः प्राणोऽणुर्वा विभुर्वेतिसंशये, द्वैरूप्यप्राप्ते, उत्क्रान्त्यादिभिरणुत्व 'सम एभिस्त्रिभिर्लोकै समोऽनेन सर्वेण'

( बृह० १।३।२२ ) इति श्रुत्या च विभुत्वमवगम्यते। अत्र च विभुत्वं प्राणस्य, उत्क्रान्त्यादिश्रुतिश्च गौणप्राणोत्क्रान्त्या जीववदुपपादनीया, न च 'समः प्लुषिणा समो मशकेन' ( बृ० १।३।२२ ) इत्यणुत्वमपि श्रौतमिति वाच्यं उपाधिपरिच्छेदे-नोपाधेयपरिच्छेदात् सूचीकरकमत्रिकोदरावच्छेदेनाकाशस्येव प्लुषिमशकाद्यवच्छेदेन विभोः प्राणस्याणुतया व्यपदेशसम्भवा-दिति प्राप्तेऽभिधीयते, 'अणुश्च' अणुरेव = परिच्छिन्नोऽप्रत्यक्ष-श्चेति निश्चितम्। उत्क्रान्त्यादिश्रुतिविरोधात्। यत्तूक्तं गौण-प्राणोत्क्रान्त्या सा श्रुतिरुपपादनीयेति तदयुक्तं नत्तु तदु-पपद्यते—'तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ति' ( प्रश्न० २।४ ) इतिश्रुत्या गौणप्राणोत्क्रमणस्य तदुत्क्रमणाधीनताया आम्नानात्। विभुत्वकथनन्तु समष्टिप्राणाभिप्रायेण। तस्मात्, एकैकजीवस्य एकैको मुख्यः प्राणोऽणुरेवेति निर्णयः।२।४।१३।

प्राणानां विशेषान्तरबुबोधयिषयाह—

( ज्योतिराद्यधिकरणम्—७ )

## ज्योतिराद्यधिष्ठानं तु तदामननात् ।२।४।१४।

प्राणा इति प्रक्रान्तास्तेषां कार्य्यप्रवृत्तिः स्वाभाविकी वा चेतनाधिष्ठानेन वा? यदि चेतनाधिष्ठानेन, कोऽयं चेतनः तत्तत्-प्राणाश्रयशरीरस्वामी जीवो वा देवता वा ? इति संशयद्वयम्, स्वाभाविक्येव प्रवृत्तिः चाक्षुषं प्रत्यक्षं रासनं प्रत्यक्षमिति प्रसि-द्धत्वात् सारथं भक्तित्यादिवत् अथ यदि चाक्षुषमित्यादिना

करणत्वमेव चक्षुरादेः प्रतीयते करणं च कर्त्रधीनं कर्त्ता च 'एष हि द्रष्टा' इत्यादिपूर्वोपदर्शितश्रुतेः शरीरस्वामी जीव एवेति तस्य चेतनस्याधिष्ठानेन करणभूतानां स्वस्वकर्म्मप्रवृत्तिरित्युच्यते, तदा देवताधिष्ठानेन न प्राणानां प्रवृत्तिरितिप्राप्तम्, अत्रोच्यते, 'ज्योतिराद्यधिष्ठानं तु' इति। तुकारः पूर्वपक्षव्यवच्छेदार्थः। 'ज्योतिरादिभिः'—अग्न्याद्यभिमानिदेवताभिः अधिष्ठानं तत्तत्कर्म्मप्रवृत्तिहेतुरित्यर्थः, नन्विदमयुक्तं तत्तच्छरीरस्वामिनो जीवविशेषस्य प्रवर्त्तकत्वदर्शनात् दिदृक्षमाणो हि देवदत्तो विषये चक्षुः प्रवर्त्तयतीति को नाभ्युपगच्छेत्? इति चेन्न, चक्षुरादेः रूपादिग्रहणसामर्थ्यजनकदेवताधिष्ठानस्य तत्प्रवृत्तिहेतुत्वात्, विषयप्राप्त्युपाय तत्सामर्थ्यरहितस्य करचरणादेरप्रवृत्तेः। देवताधिष्ठाने मानमाह—'तदामननात्' तत्र तत्र देवताधिष्ठानस्य श्रुतिस्मृतिभ्यां प्रतिपादनात्, 'अग्निर्वाग् भूत्वा मुखं प्राविशत्।' ( ऐत० २।४ ) इति 'वायुः प्राणो भूत्वा नासिके प्राविशत्' इति च श्रुतेः। 'वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः। वक्तव्यमधिभूतं च वह्निस्तत्राधिदैवतम्।' इति स्मृतेश्च। प्राणसूत्रे प्राणस्य धारणसामर्थ्यं वायुदेवताकृतमिति तात्पर्यम्। अतएव मुख्यप्राणवाक्चक्षुःश्रोत्रमनांसि प्रकृत्य 'ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्म जग्मुस्तद्धोचुः को नो वसिष्ठ इति' ( छा० ६।१।७ ) एतेषां विवादगमनभाषणानि पृथग्देवताधिष्ठानमन्तरेण न सम्भवन्ति तदाश्रयशरीरस्वामिजीवाधिष्ठाने एकात्मतायां प्राणानां श्रेष्ठत्वस्पर्द्धया विवादासम्भवात्।

देवताधिष्ठानत्वे तु देवानामग्निवाय्वादीनां मिथः स्पर्द्धया विवादो नासङ्गतः। तस्माद् देवताधिष्ठानेन प्राणाः प्रवृत्तिमन्त इति सिद्धम् ।२।४।१४।

ननु अग्न्यादिदेवतानां वागाद्यधिष्ठितत्वे ताभिरेव तत्कर्म्म-फलं भुज्यताम्, देवदत्तशरीराधिष्ठितजीववत्,—यथा हि देव-दत्तशरीरसम्पादितकर्म्मफलं देवदत्तशरीराधिष्ठितेन जीवेन भुज्यते तद्वद् वागादिसम्पादितवेदपाठमिथ्याभाषणादिशुभा-शुभकर्म्मणां फलं वागाद्यधिष्ठिताग्न्यादिदेवताभिर्भुज्यता-मित्याक्षेपं परिहरति—

प्राणवता च शब्दात् ।२।४।१५॥

चोऽवधारणे, प्राणवता प्राणस्वामिना कार्य्यकरणसङ्घात-स्वामिना शारीरेणैव तत्फलं भुज्यते, 'शब्दात्' श्रुतिस्मृतिरूप-शब्दप्रमाणात्। 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथा कर्म्म यथाश्रुतम्' ( क० २।५।७ ) इत्यादि श्रुतेः 'शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्।' इत्यादि स्मृतेश्च ।२।४।१५।

ननु देवा अपि प्राणवन्तः, तदधिष्ठानं यदि वागादिकं स्यात् तत्कर्म्मफलभोगस्य देवतासाधारण्यं, कथं नाभ्युपगम्यते इत्याशङ्क्याह—

तस्य च नित्यत्वात् ।२।४।१६॥

तस्येत्येकत्वं विवक्षितम्, चोऽवधारणे—'तस्य' प्राणवतः,

एकस्यैव प्राणवत इत्यर्थः, 'नित्यत्वात्' नैयत्येन भोगं प्रत्यधिकारात् । देवदत्तादिजीवव्यक्तेरेव भोगः, न तु देवताजीवानां सर्वजीवव्यागादिसाधारणानाम् । अयं भावः, शरीरभेदेन शारीरो भिद्यते अग्न्यादिदेवाश्च सर्वजीवशरीरवृत्तिवागाद्यधिष्ठातारो न शरीरभेदभिन्नाः किन्तु वागधिष्ठातारिनः, प्राणाधिष्ठाता वायुरित्यादिरूपेण मिथोभिन्नाः, तस्मादेषां भोगं प्रति नियताधिकारासम्भवेन सङ्करात्, एकशरीरस्थवागिन्द्रियेण वेदपाठे अन्यशरीरावच्छिन्नवागिन्द्रियेण मिथ्याभाषणे च अधिष्ठातुरग्नेः कतरफलभोग इत्यस्य नियन्तुमशक्यत्वात्, किञ्च शारीरजैः कर्मदोषैरित्युपदर्शितस्मृतिवचनेन वाङ्मनोऽतिरिक्तेन्द्रियकृतकर्मणां शारीरजान्तर्गततया इन्द्रियाधिदेवतानां च भेदेनापि उपस्थेन्द्रियकृतशारीरकर्मणा जगन्नाथमुखदर्शीचक्षुरधिदेवादित्यस्य स्थावरत्वप्राप्तिप्रसङ्गः,शरीरजत्वाविशेषात् । यथाकर्म यथाश्रुतमिति श्रुतिश्च पीड्येत । तस्माद् जनकादीनां दुहित्रादिभिरिवाधिष्ठातृदेवानामिन्द्रियैः पोष्यपोषकत्व-सम्बन्ध एव, नतु भोग्यभोक्तृत्वसम्बन्धः, स हि एकस्य पत्युः स्वपत्न्येव एकस्य शारीरस्य कार्यकरणसङ्घातात्मकस्वशरीरेणेति तात्पर्यम् ।२।४।१६।

मन्त्रियद्भिः सूत्रैः कृतेऽपि प्राणविचारे केनापि सूत्रेण न विज्ञापितं तत् स्वरूपं, तत्पूर्वकत्वाद्वाच इति सूत्रात्, हस्तादयस्त्विति सूत्राच्च प्राप्तः कथञ्चिद् वाक्चक्षुःश्रोत्रमनःसहितहस्तादिकर्मेन्द्रियपरिचयः केवलकर्मेन्द्रियपरिचयो वा, सप्तगतेर्विशे-

सूत्रस्य पूर्वपक्षीयत्वात्, तत किं प्राणाश्चक्षुः श्रोत्रमनःसहितानि कर्म्मेन्द्रियाणि कर्म्मेन्द्रियमात्रं वा सर्वाणीन्द्रियाणि वेति संशये, सूत्रस्वरसेन प्राणब्राह्मणश्रुत्या च पूर्वपक्षे स्थापिते—निर्णयार्थमाह—

( इन्द्रियाद्यधिकरणम्—८ )

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ।२।४।१७॥

'इन्द्रियाणि' 'ते' प्राणाः बहुवचनसामर्थ्यादिन्द्रियत्वावच्छेदेन प्राणत्वं लब्धम्, तेन, मनःसहितानि दशेन्द्रियाणीति सर्व्वाणीन्द्रियाणि प्राणा इत्युक्तं प्राणपदार्थस्वरूपम् इत्यर्थः, किन्तु 'अन्यत्र श्रेष्ठात्' मुख्यप्राणं वर्जयित्वा, कुतः 'तद्व्यपदेशात्' तत्र शब्दप्रमाणात्, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इत्यादि श्रुते, अत्र सर्वेन्द्रियाणां मुख्यप्राणस्य च पृथङ् निर्देशात्, वागादीन्द्रियाणां प्राणब्राह्मणादौ प्राणत्वेन निर्देशात् 'दशेमे प्राणा एकादश आत्मा' इति श्रुतेः, 'श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी । पायूपस्थं हस्तपदं वाक् चैव दशमी स्मृता । एकादश मनो ज्ञेयं स्वगुणेनोभयात्मकम्' इति मनुस्मरणाच्च । तस्माद् वागादीन्द्रियचतुष्टयसहितहस्तादिकर्म्मेन्द्रियाणि हस्तादिकर्म्मेन्द्रियमात्रं वा न गौणप्राणाः किन्त्वेकादशेन्द्रियाणीति सिद्धम् । संशयपूर्वपक्षौ वाऽन्यावेतेन सूचितौ निरस्तौ च वेदितव्यौ । यथा हि एकस्य मुख्यप्राणस्य प्राणापानादिपञ्चकवदिन्द्रियाण्यपि वृत्तिभेदो न वा ? इति

संशय., अत्र पूर्वपक्षः, वृत्तिभेदा एव लाघवात्, प्राणापानादीनां प्राणशब्देन ग्रहणवत् इन्द्रियाणामपि तेन शब्देन ग्रहणात्। एवं प्राप्तेऽभिधीयते त इन्द्रियाणीति। 'एतस्माज्जायते प्राण.' इत्यादिश्रुतौ मुख्यप्राणस्य मनस. सर्वेन्द्रियाणां च पृथग्व्यपदेशात् न तानि मुख्यप्राणवृत्तिरूपाणि, वृत्तीनामत्र सन्निवेशे प्राणापानादिपञ्चकमप्यत्र व्यपदिश्येत। ज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकयोर्मनोऽधीनत्वात्, मनस पृथक्त्वेन व्यपदेशः। वस्तुतः, तद्धेतुस्तु वक्ष्यते। एकैकज्ञानकर्मकरणानां दशेन्द्रियाणामेव सर्वेन्द्रियतया व्यपदेश इति केचित्। तस्मादेकादशेन्द्रियाणि तत्त्वान्तराणि प्राणा = प्राणशब्दप्रतिपाद्यानि, मुख्यार्थसम्बन्धात्; मुख्यः प्राणश्च प्राणशब्दशक्यार्थ इति सूत्रतात्पर्यम् ।२।४।१७।

ननु यथा मनस इन्द्रियत्वेऽपि केनचिद् विशेषेण पृथग्व्यपदेशस्तथा मुख्यप्राणस्य तद्वृत्तिस्वरूपेन्द्रियाणाञ्च कार्यभेदादेव पृथग्व्यपदेशो न तु तत्त्वान्तरत्वेनेत्याशङ्कायामाह——

## भेदश्रुतेः ।२।४।१८॥

मुख्यप्राणस्य वागादीनाञ्च 'भेदश्रुते.' भेदेन श्रवणात्। तथा हि 'ते ह वाचमूचुस्त्वं न उद्गाय' इति देवानां प्रार्थनं प्रक्रम्य वागादीनामसुरकृतपाप्मानुवेधादसामर्थ्योपवर्णनेन प्रकरणं परिसमाप्य 'अथ हेममासन्यं प्राणमूचु.' इत्यनेन मुख्यप्राणस्य अथ-शब्दोपन्यासपूर्वकं पृथगेव ग्रहणात्, न तद्वृत्तित्वं वागादीनां युज्यते, वृत्तिमन्तमनुपस्थाप्य वृत्त्युपस्थानस्यासम्भ-

वात्, नहि परित्यज्य चक्षुः, चाक्षुषी वृत्तिरामायते। तस्माद् वागादीनां तत्त्वान्तरत्वम् ।२।४।१८।

ननु यथा मनोभूतां शाखामाश्रित्य दुरारोहवनस्पत्यारोहणं तथैव वृत्तिमाश्रित्य वृत्तिमदुपसर्पणं देवानां नायुक्तमित्यत आह—

वैलक्षण्याच्च ।२।४।१९॥

दृष्टान्तदार्ष्टान्तिकयोर्वैलक्षण्याद् वैषम्यात्, तथा हि, मुख्यः प्राण आसन्यशब्दोपपादितयत्प्रदेशवृत्तिर्वागिन्द्रियमपि तद्वृत्ति, चक्षुःश्रोत्रं व्यवहितम्, यदि वागिन्द्रियं सुग्रहमिति प्रथमं तदुपस्थानं वृत्तिमतो मुख्यप्राणस्योपसर्पणाय, भवत्वेवम्; उच्यतां नु कथं नाम देवास्तदिष्टमपहाय व्यवहितं चक्षुःश्रोत्रमुपसर्पेयुः। वस्तुतः, वैलक्षण्यं लक्षणविरोधः, धारणकरणत्वं मुख्यप्राणलक्षणम्, वचनादिकरणत्वं च वागादिगौणप्राणलक्षणम्, तस्मात्, अनयोरुभयोर्न वृत्तिवृत्तिमद्भावः, वृत्तिवृत्तिमतोर्व्यापारव्यापारिणोः समानकार्य्यत्वात्, 'वाक् च वक्तव्यं च हस्तौ चादातव्यं च' इत्यादिकमुपक्रम्यान्त्यः 'प्राणश्च विधारयितव्यं च' इत्यादिश्रुतयो हि मुख्यगौणयोः प्राणयोर्वैलक्षण्यं बोधयन्तीति भावः। चकारः समुच्चयार्थोऽधिकरणसमाप्तिसूचकश्च ।२।४।१९।

मुख्यप्राणप्रसङ्गान्नामरूपरचना मुख्यप्राणकर्तृका परमेश्वरकर्तृका वेति संशये समुद्भूते, निर्णयार्थमाह—

( संज्ञामूर्त्यधिकरणम्—६ । )

संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत् कुर्वत उपदेशात् ।२।४।२०।।

अत्र 'स प्राणमसृजत प्राणात् श्रद्धा खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपोमन्त्राः कर्म्म लोका लोकेषु नाम च' ( प्रश्न० ६।४ ) इति श्रुतेः, प्राणहेतुकश्रद्धादिसृष्टिक्रमे लोका इत्यनेन रूपस्य स्वरूपत एव नाम्नश्चाम्नानात् मुख्यप्राणकर्तृकैव । न चासृजतेति क्रिययान्वयात् परमेश्वरस्यैव कर्त्तृत्वमिति वक्तव्यम्, खमित्यादेः प्रथमान्ततया जाता-नीत्यध्याहारात्, प्राणादित्यस्योपस्थितस्यापादानस्य तेनान्वयात्, परमेश्वरकर्त्तृकत्वस्य तत्रासिद्धेः । इत्येवंरूपः पूर्वपक्षः समस्ति । तत्रोत्तरम्,—संज्ञामूर्त्तिक्लृप्तिरिस्त्विति, तुकारः पूर्वपक्षव्यवच्छेदार्थः, 'संज्ञामूर्त्तिक्लृप्तिः' संज्ञा नाम, मूर्त्तिः रूपं शरीरम्, तयोः क्लृप्तिः रचना, 'त्रिवृत् कुर्वत' यस्त्रिवृत्-कर्त्ता तस्यैव, कर्तरि षष्ठी । 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति कृतसङ्कल्पः परमेश्वर एव भूतत्रयं त्रिवृत् कुरुते 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' ( छा० ६।३।४ ) इति-श्रुतेः, न तु प्राणः । यस्त्रिवृत् कुरुते तत्कर्त्तृकं नामरूपव्या-करणम् कुतः ? 'उपदेशात्' सदेव सोम्येदमग्र आसीदित्युप-क्रान्तश्रुतेः । तत्-पदस्य चिदचिदात्मकब्रह्मपरत्वस्योपपादि-तपूर्वत्वात् । अतो प्राणात् खादिक्रमेण नामरूपोत्पत्तेर्वे-चनन्तु प्रथमसृष्टप्राणस्य समष्टिबुद्धिरूपतया तदुपादान-

कत्वाभिप्रायेण, तथापि सा परमेश्वरकर्तृकैव; न हि मृदो घटो जायते इत्युक्तिर्घटस्य कुलालकर्तृकत्वं विरुणद्धि। तस्मात् परमेश्वर एव नामरूपव्याकर्त्ता न तु प्राण इति सिद्धम् ।२।४।२०।

ननु त्रिवृत्करणेन कथं मनुष्यादिस्थूलशरीरात्मकरूपरचना परमेश्वरस्य घटते? पितृभ्यामेव शुक्रशोणितद्वारा पाट्कौशिक-स्थूलशरीरनिर्माणात् पितरौ च प्राणभ्रातिरिच्येते 'प्राणः पिता प्राणो माता' इति ( छा० ७।१५।१ ) श्रुतेः। अतो नाम-रूपक्लृप्तिः प्राणक र्तृकेत्याशङ्कायामाह—

## मांसादि भौमं यथाशब्दमितरयोश्च ।२।४।२१॥

त्रिवृत्कृता भूमिर्मीहियवाद्यन्नरूपेण परिणमते, तस्माद् भुज्यमानान्मांसादिकं भवति, एतदाह, 'मांसादि भौमम्' इति, 'यथाशब्दम्' शब्दः श्रुतिः, तमनतिक्रम्य 'इतरयोः' अप्तेजसोश्च कार्यं ज्ञेयम्। शब्दश्च— अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषं यो मध्यमस्तन्मांसं योऽणिष्ठ-स्तन्मनः, आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातु-स्तत् मूत्रं यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः, तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि यो मध्यमः स मज्जा योऽणिष्ठः सा वाक्' ( छा० ६।५।१–३ ) इति, प्रश्नो-पनिषदि च 'अन्नाद्वीर्यम्' इति। पितृभ्यामागतमपि पाट्कौ-शिकशरीरं परमेश्वरेण त्रिवृत् कृतानामेव भूतानां परिणाम-स्तस्मात् संज्ञामूर्त्ति क्लृप्तिः परमेश्वरकर्तृकैव ।२।४।२१।

ननु यदि सर्वाण्येव भूतानि त्रिवृत्कृतानि, तत्तेज इत्याप इति भूमिरिति च पृथक् सञ्ज्ञा कथं घटते सङ्कीर्णत्वादित्यत आह—

वैशेष्यात्तु तद्वादस्तद्वादः ।२।४।२२।।

तुकारः सूचिताक्षेपपक्षव्यावर्तकः। विशेषस्य भावो वैशेष्यम्। विशिष्यते भूतान्तराद् व्यवच्छिद्यतेऽनेनेत्यधिको विशेषः, तद्भावः आधिक्यं भूयस्त्वं तस्माद् हेतो., तद्वादः तत्तद्-भूततया वाद. कथनं, तेजोभूते त्रिवृत्कृतेऽपि, तेजोंऽशस्याधिक्यात् तेजस्त्वेन वादः एवमपां भूमेश्च। चरम-पदस्य द्विरावृत्तिरध्यायसमाप्तिद्योतिका। स्वसिद्धान्तविरुद्धत्वेन प्रतीयमानानां श्रुतीनां विरोधपरिहारेण परक्षिप्तः स्वाभ्युपगमविरोधदोषश्चरमपादद्वयेन परिहृतो वेदितव्य. ।२।४।२२।

इति ब्रह्मसूत्रशक्तिभाष्ये विरोधपरिहाराख्ये द्वितीयाध्याये प्राणादिश्रुतिसमाधानं नाम चतुर्थः पादः।

समाप्तश्चायं द्वितीयोऽध्यायः।

ब्रह्मसूत्रस्य

( उत्तरमीमांसायाः )

# शक्तिभाष्ये

---

## तृतीयाध्यायः ।

### ( प्रथमः पादः )

द्वितीयाध्याये चिदचिदुभयात्मकब्रह्मवादविरोधिमतनिरसनेन तद्वादस्य सर्ववेदान्ततात्पर्य्यविषयत्वं व्यवस्थापितम् । तस्य च ब्रह्मणो विचारितपूर्वाया उभाकारताया विरोधपरिहारेण दृढीकरणं तस्य कारुणिकतासंस्थापनं चेत्येवमादिकमाधिकरणिकमवसितम् । अनन्तरातीतपादस्य विरोधिमतनिरासप्रसङ्गोत्थापितसृष्टिप्रक्रियाया चरमाधिकरणे त्रिवृत्करणं ततश्च जीवदेहोत्पत्तिमुक्त्वा प्रतिज्ञातब्रह्मनिरूपणप्रकारभूतफलावच्छेदविशेषप्रतिपादको जीवानां पुरुषार्थसाधनोपदेशा-

र्थोऽयं तृतीयाध्यायः प्रारभ्यते, तदस्य संसाराख्ये प्रथमपादे च्छान्दोग्यश्रुत्युपदिष्टनिगूढसाधनपञ्चाग्निविद्यायां प्रवेशार्थं द्वारभूततदीयसूत्रार्थविवरणेनानन्तरातीताध्यायचरमपादचरमाधिकरणविचारितजीवदेहसंघटनप्रसङ्गप्राप्तं तदुत्क्रान्तिप्रकारमुपपादयितुं तदन्तरप्रतिपत्त्यधिकरणं प्रथममभिधीयते।

( तदन्तरप्रतिपत्त्यधिकरणम्—१ । )

## तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ।३।१।१॥

अत्र तत्पदमनन्तरातीतपादचरमाधिकरणस्थसंज्ञामूर्त्तिसूत्रोपक्रान्ताया मूर्त्तेः परामर्शकम् । मूर्त्तिः शरीरम्, तदन्तरप्रतिपत्तौ शरीरान्तरप्राप्तौ, जीवः पूर्वशरीरारम्भकत्रिवृत्कृतभूतसूक्ष्मैः परिष्वक्तो रंहति न वेति संशये, न परिष्वक्तो रंहति शरीरारम्भकभूतानां सर्वत्र सौलभ्यात्, बुद्ध्यादिवदुपयोगविरहाच्च । इति पूर्वपक्षे उत्तरम्—'रंहति संपरिष्वक्तः' जीवः खलु—देहान्तरप्राप्तिकाले भूतैः संपरिष्वक्तः सम्यगावेष्टितः रंहति चलति पूर्वदेहमपहाय गच्छति, अलब्धचलनशक्तिकः शिशुर्मात्रा वक्षसि निवेशितो बाहुना समावेष्टितो यथा गृहान्तरं प्राप्नोति तद्वत् । तत्र हेतुः 'प्रश्ननिरूपणाभ्याम्' प्रश्नप्रतिवचनाभ्याम्, प्रश्नस्तावदारुणेयं श्वेतकेतुं प्रति पाञ्चालानां राज्ञः प्रवाहणस्य,'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा० ५।३।३ ) इति, अस्य प्रश्नस्योत्तरं स एव पाञ्चालराज-

स्तत् पितरमाचचाणो द्युलोकमग्नित्वेन रूपयित्वा तस्मिन्नेतस्मि-न्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति' इत्यादिना हि तथाविधभूतसूक्ष्मपरिष्वक्तिमाह। उत्क्रान्तस्या-ग्निहोत्रयाजिनः पर्जन्यस्थानमतिक्रम्य द्युलोकं गतस्य जीवस्योत्-क्रमणकाल एवावेष्टयितारोऽग्निहोत्राहुतिद्रव्यांशभूतसूक्ष्मभागा-स्तत्र सोममभिनिर्वर्तयन्ति, सोमसदृशदेहसम्पादने प्रकृतयो भवन्ति घटादेरिव मृदादयः, अपूर्वहेत्वाहुतिसम्बन्धिन्याः श्रद्धाया अपादानत्वोक्तेः, द्युलोकभोगफलिकासु पूर्वकृताग्नि-होत्राहुतिजन्यापूर्वव्यक्तिषु काचिज्जीवस्य तद्देहनिर्वर्तने सहकारिणी। देवा इत्युक्ता यजमानप्राणाधिदेवतारूपा अग्न्यादयश्च तत्कर्तारः। द्युलोकभोगायतनशरीरस्य सम्बन्धारम्भोऽग्नित्वेन रूपिते द्युलोके जुह्वतीतिधात्वोर्लब्धः। तत्र जीवो यावत्सम्पातमुषित्वावरोहणकाले पर्जन्यलोक-मासाद्य विलुप्तसोमदेहस्तत्प्रकृतिभूताभिरद्भिर्जनितं द्रवमयश-रीरं वर्षाख्यं लभते। तत्राग्निहोत्राहुतिजन्या परापूर्वव्यक्ति-स्तद्देहप्राप्तौ सहकारिणी। देहभेदाल्लोकभेदाच तत्संबन्ध-स्यापि भेदात् हुतात्परस्यापितस्य तदारम्भस्य भेदेन संख्यान्तरनिर्वाहः। तस्मादवरोहतो जीवस्य पृथिवीमासाद्य व्रीहियवाद्यन्नात्मकदेहो वर्षदेहानन्तरं वर्षप्रकृतिभ्योऽद्भ्यो जायते तदन्नरूपेण पुरुषमाश्रयतस्तत्परिणामभूतरेतःस्वरूपदेह-योषायां निषिक्तो भ्रूण इत्यतः परं पञ्चम्यामाहुतावापः पुरुष-शब्देनोच्यन्ते। पृथिव्यादीनामग्नितया यद् रूपणं तदपत्यपि

तत्तदपूर्वव्यक्तिसहकारेणाग्न्यादिदेहसम्बन्धारम्भा हुधातूपस्थाप्या वेदितव्याः। अग्न्यधिकरणकप्रक्षेपविशेषपरतयात्र हुधातोः प्रयोगात् देहसम्बन्धारम्भेण विशेषत्वाच्च। एवं पूर्वशरीराद्दुत्क्रान्तिकाले ये हि भूतसूक्ष्मभागाः अप्संज्ञकाः आहुतिद्रव्यांशलक्षणाः स्वयं गमनासमर्थं शिशुमिव जीवमालिङ्ग्य द्युलोकं नियुक्त एव क्रमपरिणतिमासाद्य भ्रूणशरीरभूता प्रसूताश्च पुरुषसंज्ञां लभन्ते। उपपादयिष्यते चेदं सूत्रकृद्भिः। इदमत्रावधेयम्, द्युलोके श्रद्धाशब्दो यद्वाचकः पञ्चम्यामाहुतावपूर्वकेऽपि तद्वाचकः, तत् परिचयश्च सप्तशत्यामस्ति 'श्रद्धा सताम्' इति, 'या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता' इति, 'अपां स्वरूपस्थितया त्वयैतदाप्यायते कृत्स्नमलङ्घ्यवीर्ये' इति चैवं मंत्रवर्णजातेन। श्रुतिरपि 'श्रद्धा वा आपः' इति। चिदचिदुभयात्मकब्रह्मस्वरूपाभिरद्भिराहुतिस्वाभिरेव परिष्वक्तो जीवो लोकान्तरं नीयते इत्येवं विदुषां देवयानः पन्थाः- यथाऽरण्ये श्रद्धा तप इत्युपासकानां भवति। आम्नायते हि, पञ्चाग्निविद्याभिधानानन्तरं छान्दोग्योपनिषदि 'य इत्थं विदुः, ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इत्यादिना 'एष देवयानः पन्थाः' (छा० ५।१०।२) इत्यन्तेन। तथा चाहुतितत्साधनद्रव्येषु, मातृभावेन दृष्टिराधेयेत्यनेन सूचितम्। तथादृष्टौ देवयानः पन्थाः, तदृदृष्टौ चाग्निहोत्रयाजिनामपि गतागतौ भवतः पितृयानमाश्रितानामिति तात्पर्यम्। पञ्चाग्निविद्याया निगूढाऽर्थस्तु—सहस्रारकमलम् अनाहतचक्रं मूलाधारः स्वयम्भूलिङ्गं

कुलकुण्डलिनी चेति पञ्च यथाक्रमं द्युलोकः पर्जन्यः पृथिवी पुरुषो योषा चेति नामभिरूचिरे। तेष्वग्नित्वारोपोऽधिकारिभेदेन त्रिविधः, केषाञ्चिदधिकारिणामग्नितेजोरूपेण तद्देवतारूपेण वा, एकेषामधिकारिणामग्नौ दुर्गादृष्ट्या तदग्निस्वरूपत्वेन, अन्येषामधिकारिणां च निर्विशेषब्रह्मस्वरूपत्वेनेति। अग्नितेजसि तद्देवतायां प्रसिद्धोऽग्निशब्द इति पञ्चाग्निविद्यायामग्निशब्दस्य तदर्थकत्वं सहजतो लभ्यते। अग्नौ दुर्गादृष्टिश्च 'तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्। दुर्गां देवीं शरणमहं प्रपद्ये' इति ( ऋ० ८ अष्टक, ७ अध्याये १४ वर्गानन्तरं २५ सूक्तात्मकपरिशिष्टस्य १२ ऋचः ) बह्वृचपरिशिष्टमन्त्रवर्णात्, अग्निना वर्णः अग्निरिति वा वर्णो वर्णनं यस्या इत्यग्निवर्णाशब्दव्युत्पत्तेः, अग्निरूपेण वर्णनं च 'जातवेदसे सुनवाम सोमम्' इति रहस्यार्थयुक्ते दुर्गानामविशिष्टमन्त्रे 'काली कराली' इतिमुण्डकमन्त्रवर्णे साकारपक्षे, 'ब्रह्मण्ये जातवेदसि' इति महाभारतभीष्मपर्वणि दुर्गास्तोत्रे च दृश्यते। निर्विशेषब्रह्मपरत्वं च गायत्र्यधिकरणे प्रतिपादितपूर्वम्। सहस्रारप्रभृतिकुलकुण्डलिन्यन्तानामग्नित्वेन यदभिधानं तदुपपादकं तु तत्र तत्र रश्मिधूमादिकथनं ततश्च सहस्रारेऽग्निखण्डसूर्यखण्डचन्द्रखण्डमेलनं यत्र च श्रद्धापदोपस्थापितमहाशक्तेः सादाख्यकलारूपायाः समाधानमित्ययं समयिमार्गः। तत्फलं वक्ष्यते। तदभिव्यक्तश्च सोमो राजा, यस्याज्ञाचक्रे चन्द्रमण्डलरूपेण स्थितिः, तस्याधिकारो विशुद्धचक्रपर्यन्तः, तस्य चन्द्र-

खण्डान्तर्गतत्वात् । तदधोऽनाहतं चक्रं वायवीयं चन्द्रमण्डलनि.सृतामृतवृष्टिप्रथमस्थानतया पर्जन्य इत्युच्यते । तत्र प्राणापानगतिरोधेन साधनसमुद्भूता ध्वनयो 'ह्लादनय.' इति श्रुत्याभुक्ता । 'पश्यन्ती'नामिकायाः शब्दप्रवृत्तेः कारणं वायुविशेषोऽशनिरिति, तदन्तर्गत. सौरमण्डलतेज. प्रकाशो विद्युदिति च व्यपदिष्टः । अग्नियोनित्वाद् वायोः, वायवीयतच्चक्रस्याग्नित्वं श्रुतिरूपितत्वाच्च । तत्रामृतवृष्टिरातन्यते, इयमेव वर्षाहुतिरुच्यते । तेन तदधस्थाग्निज्वालया न देहो दह्यते, एतत्साधकस्तृप्त्यतिशयवान् शब्दतत्त्वज्ञश्च भवति । पृथिवीस्थानमाश्रित्य साधकः कामचारी भवति प्रजापतिनानुगृहीतश्च । पृथिवीस्थानं मूलाधारचक्रम् । तत्र च कुलकुण्डलिनी स्वयम्भूलिङ्गवेष्टनी सार्धत्रिवलयावृत्तिभुजङ्गाकाराधोमुखी स्वपिति । स्वयम्भूलिङ्गमेवाग्नित्वेनाग्निश्च महाशक्तित्वेन मन्यमानः साधको मन एवान्नमर्पयति, अयं हि साधकः सिद्धवाग् भवति कुलकुण्डलिनीमग्निधिया तच्चाग्निं महाशक्तिधिया मन्यमानः साधकः तन्मुखे चन्द्रमण्डलनि.सृतं वर्षं मनोद्वारागतमाजुहोति साधनफलमानन्दः । अयं तावदवरोहक्रमोपन्यासः श्रेयसामारोहक्रमेण साधनोपदेशार्थः ।

अत्र कृताभ्यासो योगी कुलकुण्डलिनी स्वयम्भूलिङ्गमूलाधारानाहतक्रमेण सहस्रारे सादाख्यकलाया एकीभावे समाधिमान् श्रीत्रिपुरसुन्दरीरूपमात्राकारमाप्नोति, समाध्यवस्थस्योत्क्रान्तौ देवयानः पन्थाः, कुलकुण्डलिनीसाधनावस्थायामुत्-

क्रान्तस्य पितृयानः पन्थाः, परस्मिन् जन्मनि चाग्निभिरेव तस्य हरणं नाम देवयानपथप्रस्थापनं यतस्तत्र कुलकुण्डलिनीक्रमेण सहस्रारकमलान्तसाधनं सम्पद्यते। स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादिति गीतोक्तेः। पञ्चाग्निविद्याया रहस्यार्थोऽयं छान्दोग्यपञ्चमाध्यायस्य चतुर्थखण्डादिनवमखण्डान्ताम्नानजातस्य। श्रुत्यन्तरे आहुति द्वयाभिधानं दर्शपूर्णमासयागद्वयाभिप्रायेण अन्त्याहुतिद्वयाभिप्रायेण वा। अग्निहोत्रं कर्म्मिणाम्, पञ्चाग्निविद्यानुशिष्टरहस्यसाधनं योगिनाम् कर्म्मिष्वधिकारिभेदप्रयुक्ताः साधनफलभेदाश्चेति रहस्यम्। अग्निखण्डसूर्य्यखण्डचन्द्रखण्डादिविवरणं च प्रथमाध्यायप्रथमपादश्रीचक्रपक्षभाष्यादवगन्तव्यम् ।३।१।१।

ननूपदर्शिताभ्यां प्रश्नप्रतिवचनाभ्याम् अद्भिः सपरिष्वक्तो रंहतीति लभ्यते, भूतेष्वपामेव नाम्ना निर्देशात्, तत् कथं साध्यते भूतसूक्ष्मैः सपरिष्वक्तो रंहतीत्याशङ्कायामुत्तरमाह—

त्र्यात्मकत्वात् तु भूयस्त्वात् ।३।१।२॥

आशङ्काव्यवच्छेदार्थस्तुकारः। अपां 'त्र्यात्मकत्वात्'—भूतत्रयरूपत्वात्, अप्शब्देन त्रिवृत्कृतानामपां ग्रहणेन पृथिवीजलतेजोलक्षणभूतत्रयसूक्ष्मभागलाभात्, दधिपयआदिसाधनकाहुतेश्च त्रिवृत्कृतापस्साधनकत्वध्रौव्यात्। ननु यदि त्र्यात्मकत्वं कथं तावदप्छब्दमात्रप्रयोग इत्यत आह 'भूयस्त्वात्' इति—बाहुल्यादित्यर्थः त्रिवृत् कृते पयआदावाहुतिसाधनद्रव्येऽब्भागस्याधिक्येन, तच्छ्रुतावप्-छब्दप्रयोगादिति भावः ।३।१।२।

नन्वेवम् अग्निहोत्रयाजिनामुत्क्रान्तौ प्रश्नप्रतिवचनाभ्यां भूतपरिष्वक्तिरभ्युपगम्यताम्, तदन्येषां परलोकगतौ भूतपरिष्वक्तिस्त्वप्रमाणेत्याशङ्क्याह—

प्राणगतेश्च ।३।१।३॥

प्राणानां शरीरान्तरप्राप्तौ गतिः श्रूयते 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' ( बृह० ४।४।२ ) इत्यादौ। न खलु निराश्रयाणां प्राणानां गतिः सम्भवति, पूर्वदेशसंयोगध्वंसपूर्वकोत्तरदेशसंयोगानुकूलव्यापाररूपगतेर्जीवतो देहाददर्शनादुपलभ्यते न निराश्रयाः प्राणा गच्छन्तीति, मरणदशायां तदाश्रयभूतस्याप्-सहकभूतसूक्ष्मभागस्य गत्या तेषामपि गतिः, श्रुतिरपि भवति 'आपोमयः प्राण' इति। यदि केवलं स्थूलदेहस्तैराश्रयिष्यत, मरणमेव न समभविष्यत् स्थूलदेहसत्त्वे। यदि चाश्रयमन्तरेणापि तद्गतिः कल्प्येत, क्षणमपि जीवनं न स्यात्, धारकस्याभावात्, भूतसूक्ष्मरूपाश्रयस्वीकारे तु तस्यैव धारकत्वादिति विभावनीयम् ।३।१।३।

अत्राशङ्कातत्समाधानगर्भं सूत्रमाह—

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ।३।१।४॥

यदि प्राणानां जीवसङ्गेनोत्क्रमणं स्यात्, स्यादप्यद्भिः परिष्वङ्गो जीवस्य, न त्वेवम्, 'अग्न्यादिगतिश्रुतेः'='यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्' इति

( सू० ३।२।१३ ) गौणप्राणस्य वाचोऽग्नौ चक्षुषश्चादित्ये मुख्यप्राणस्य तत्प्राणनवृत्तेर्वा वायौ चेति प्राणानामग्न्यादिषु गतिश्रवणात्, स्वकर्मफलानुसारेण लोकान्तरं गच्छन्तं जीवं प्राणा नानुसरन्ति कुतस्तदाश्रयभूता आपः ? जीवमनूत्क्रामतीति श्रुतिश्च जीवोत्क्रमणेन सहोत्क्रम्य मुख्यः प्राणस्तद्वीयप्राणनवृत्तिर्वा वातमप्येति गौणाश्च प्राणा अग्न्यादीनित्याशङ्कायाम् इति चेदित्यन्तेन प्राप्तायामुत्तरं 'न' न युक्तमिदं वचनमित्यर्थः। 'भाक्तत्वात्' अस्यां श्रुतावप्येतीत्यस्य न गमनार्थत्वं किन्तु उपकार्योपकारकत्वसम्बन्धनिवृत्तिपरत्वं तत्र लाक्षणिकत्वात्। वागुपकारिणी देवता अग्निः मुख्यप्राणोपकारिणी देवता वायुश्चक्षुरुपकारिणी देवता सूर्यः तथा च म्रियमाणस्य वागादीन् प्राणान्, अग्न्यादयो देवता न यथापूर्वं तद्देहे स्थापयन्त उपकुर्वन्तीत्यस्य तदर्थत्वात्। अस्यां श्रुतौ अप्येतीत्यस्य भाक्तत्वमुत्तरप्रतीकात् स्पष्टमवगम्यते, स च प्रतीकः 'ओषधीर्लोमानि वनस्पतीन् केशाः' इति। अत्राप्येतीत्यस्य वचनविपरिणामेनान्वयः, नहि लोम्नामोषधिषु केशानाञ्च वनस्पतिषु गमनं, म्रियमाणस्य केनचिद् दृश्यते, न वा सम्भवति जीवापेतानां लोमादीनामन्यत्र गमनम्। ओषधीनां रसादिद्वारा यल्लोमोपकारकत्वं वनस्पतीनां च केशोपकारकत्वं म्रियमाणस्य तन्निवृत्तिर्भवतीत्यर्थकत्वाभ्युपगमं विना गत्यन्तराभावात्, प्राणोत्क्रमणश्रुतेस्तु यथाश्रुतार्थपरित्यागस्यान्याय्यत्वात् ।३।१।४।

आशङ्कान्तरमुत्थाप्योत्तरयति—

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ।३।१।५।।**

पञ्चाग्निषु 'प्रथमे' अग्नित्वेन रूपिते द्युलोके, श्रद्धां जुह्वतीति श्रूयते,—नत्वपः, तस्माद् अपाम् 'अश्रवणात्' अश्रुतेः, 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति श्रुतिर्यथाव्याख्यं नोपपद्यते, श्रद्धायाः प्रथमाहुतित्वेन अपां पञ्चमाहुतित्वाभावात्, न च 'यजमानपञ्चमा इडां भक्षयन्ति' इत्यत्र श्रुतावनुक्तिर्जापि यजमानेन पञ्चत्वसंख्यापूरणदर्शनादत्रापि श्रद्धाभिन्नाभिरद्भिः पञ्चत्वसंख्यापूरणं भविष्यतीतिवाच्यम् तावता प्रकृतदोषानुद्धारात्, यतः प्रथमेऽपां परिष्वङ्गाभावेऽवरोहदशायामाकस्मिकतत्परिष्वङ्गाभ्युपगमे तत्क्रान्तिदशायां तत्परिष्वङ्ग, प्रतिपिपादयिषिता नोपपद्यते । 'इति चेत्,' इयं शङ्का चेत् 'न' न सा युक्ता, 'हि' यतः 'ता एव' आप एव श्रद्धाशब्दस्यार्थः न तु शास्त्रार्थविश्वासरूपः, मुख्योऽप्ययं नोपपद्यते, उपपद्यते च गौणोऽपि आप इत्ययं प्रागुक्तोऽर्थः, विश्वासस्य होम्यद्रव्यत्वाभावात्, अपां च तद्भावात् । श्रद्धापूर्वककर्मसाधनीभूतानामपां श्रद्धाशब्देनोपादानं च नासम्बद्धम् । श्रुतिरपि भवति—'आपः प्रणयति श्रद्धा वा आपः' इति । सोमवर्षान्नरेतसां चाब्बाहुल्येनाप्त्वं युज्यते, तस्मात् पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति युक्तम् । अतएवाप्परिष्वङ्गो देहान्तरप्राप्तौ भवत्येव । उपासनाप्रकारे श्रद्धाया अपां च यथैक्यं तदुक्तं प्रथमसूत्रभाष्ये ।३।१।५।

ननु भवतु श्रद्धाशब्देनापां परिग्रहस्तथापि तत्परिष्वक्तस्य जीवस्य रंहणं न प्रश्नप्रतिवचनशब्दयोः श्रुतमस्तीत्याशङ्कां तत्-समाधानञ्चाह—

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ।३।१।६॥

'अश्रुतत्वात्' अप्परिष्वक्तजीवरंहणस्येत्यादिः । अद्भिः परि-ष्वक्तो रंहतीति नोपपन्नं श्रुतिप्रमाणाभावादित्यर्थ. । 'इति चेत्' शंक्यते, 'न' इत्यादिना तत् समाधीयते–'इष्टादिकारिणां प्रतीतेः' इति हेतून्यासेन; तथा हि, प्रश्नप्रतिवचनशब्दयोराहुतावित्ति पदेन इष्टादिकारिणां जीवानां रंहणस्य निर्णयो भवति–"तद् य इत्थं विदु" इत्यनेन प्रकृतमारभ्याम्नातेऽनन्तरखण्डे "इष्टापूर्ते दत्तमित्युपासते" इत्युपक्रमेण "आकाशाच्चन्द्रमसम्" इत्यन्तेन इष्टादिकारिणां रंहणमुपलभ्यते, प्रश्नप्रतिवचनयोरप्याहुतिशब्दे-नेष्टिजापूर्वस्यापि लाभादग्निहोत्रयाजिनामपूर्वव्यक्तिषु काश्चिद् द्युलोकभोगं साधयन्ति, तत्र यावत्सम्पातमुषित्वा ते हि यजन्-जीवा निवर्त्तन्ते । द्युलोकपर्यन्तोद्गमनसमये यदि भोगाः स्यु-स्तज्जनिकाः खल्वपूर्वव्यक्तयो द्युलोकभोगसाधनापूर्वव्यक्तिभ्यो भिन्ना एवेत्यभ्युपेयम् भिन्नभोगजननात् यदि द्युलोक एव भोग-स्तदाभेदानभ्युपगमेऽपि न क्षतिरित्यन्यदेतत् । ननु पञ्चाग्नि-विद्यायामन्त्यं भोगस्थानं यो द्युलोको यश्चावरोहदशायामभि-मतो मार्गः, न तावदनन्तरखण्डोपदर्शितावरोहक्रमवर्त्मि ताभ्यां तयोरैक्यमस्ति, यतस्तत्र श्रूयते 'आदित्याच्चन्द्रमसम्' 'तस्मिन्

१४

यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्त्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति, अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इति ( छा० ५।१०।५,६ ) एतेन ज्ञायते इष्टापूर्त्तयाजिनः क्रमादुद्गच्छन्तश्चन्द्रभूतास्तत्र च समाप्तभोगाः क्षीणकर्माणः पुनरधोगच्छन्तस्तस्मादाकाशमाकाशाद्वायुर्वायोर्धूमो धूमादभ्रमभ्रात् सेचनसमर्थो मेघो भूत्वा वर्षन्ति, वर्षणाच्च व्रीहियवादिरूपेण जायन्त इति चेन्न तु लोकशब्देन चन्द्रलोकादाकाशपर्य्यन्तग्रहणात् पर्ज्जन्यशब्देन वाय्वादिमेघान्तग्रहणाच्चैक्योपपत्तेः, तद्ग्रहणं च तया श्रुत्यैव प्रत्याय्यते। 'चन्द्रमा अङ्गाराः' इति 'सोमो राजा संभवति' इति 'असौ लोकः' इत्यनेन चोक्तस्य द्युलोकस्य अग्नित्वेन रूपणदशायां विशेषविवरणात्, पर्ज्जन्यस्याग्नित्वेन रूपणदशायां 'वायुरेव समिदभ्रं धूमः' इति विशेषविवरणाच्च। वाय्वभ्रयोः प्रवेशेन तदादितदन्तन्यायाद्धूमस्य प्राप्त्या चाविवक्षितावान्तरभेदयोरभ्रमेघयोरेकत्वाच्च न्यूनत्वमिति बोध्यम्। न च 'अथैतमेवाध्वानं पुनर्निवर्त्तन्ते' इत्यनुपपन्नम्, 'ते धूममभिसम्भवन्ति' इत्युपक्रम्य 'मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम्' इत्यारोहणाध्वनिर्देशादिति शङ्कनीयम् एतमेवाध्वानमित्यत्रैतच्छब्दस्याव्यवहितोत्तरोच्यमानपरत्वात् पूर्वनिर्दिष्टाध्वनोऽलाभात्। तथापि पुनरित्यसङ्गतम् इति माशङ्कि, चन्द्रलोकभोग-

दशायां कादाचित्काकाशलोकागमनस्य ततः प्रतिनिवृत्तेश्च सूचनार्थत्वात्। तस्मात् देवयानपितृयाननिर्देशकखण्डे जीवस्यारोहावरोहाम्नानेन अवरोहाध्वनश्च पञ्चाग्निखण्डेऽस्त खण्डयोरैक्यप्रतिपादनादद्भिः परिष्वक्तो जीवो रंहतीति प्रश्नप्रतिवचनतात्पर्यम् ।३।१।६।

ननु देवयानपितृयानाभ्यामन्यत् तृतीयस्थानमुच्यते जायस्व म्रियस्वेति, तस्य च 'तस्माज्जुगुप्सेत' ( छा० ५।१०।२ ) इत्यनेन तत्रैव निन्दाश्रावि, न च सा निन्दा पितृयानगतानामपि 'तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि' ( छा० ५।१०।८ ) इत्यनेन तत्र निन्दाहेतोरुपदर्शितत्वात्। अत्रेदमयुक्तं किं न भवति ? यावता पितृयानगतानामेव दुःखाधिक्यं प्रतीयते, चन्द्रप्राप्तानामिष्टादिकारिणां देवभक्षितत्वश्रवणात् तथाहि 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' (छा० ५।१०।४) इति, 'ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येव तांस्तत्र भक्षयन्ति' इति ( बृ० ६।८।१६ ) एवं च व्याघ्रादिभक्षितानामिवेष्टादिकारिणां देवभक्षिततया दुःखातिरेक एव इत्याशङ्कायामाह—

**भाक्तं वानात्मवित्त्वात् तथा हि दर्शयति ।३।१।७।**

वाकारः स्वसूचितपूर्वपक्षव्यावर्त्तकपक्षान्तरद्योतकः। 'तद्देवानाम् अन्नम्' इत्यादि तत्तच्छ्रुतिस्थमन्नपदं 'भाक्तम्' औपचारिकम्, नतु मुख्यार्थकं येन चर्वणं निगरणं वा प्रतीयेत।

कृत्रार्थे औपचारिकं तदाह 'अनात्मवित्त्वात्' आत्मनः स्वरूपज्ञानाभावात्, आत्मस्वरूपज्ञानाभावे देवयजीनाममुष्मिन् लोके यद्भाव. श्रुत्यन्तरोक्तत्वत्त्रैवोपचारिकम्, 'तथाहि दर्शयति' इति तादृशार्थस्यान्तरं प्रमाणमुपस्थाप्यते तद् यथा—'अथ योऽन्या देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' ( बृ० १।४।१० ) इति। तथाचान्नवद् गवादि पशुवत् स्वामिन उपकरणपरम्, सुखसाधनत्वात्, यथा अन्नं भोक्तु सुखसाधनम्, तथा इष्टादिकारिणः स्वर्गं भुञ्जानास्तत्तत्स्थलाधिपतीनां देवानामुपकरणीभूतास्तेषामपि सुख जनयन्ति, न तु ते खाद्यन्ते। यत्त श्रूयते 'न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति' इति ( छा० ३।६।१ )। तस्मात् पञ्चाग्निविद्यामजानता स्वर्गकामनया तत् फलदातृदेवतात्वेन ब्रह्मोपासीनानां पितृयान पन्थाः, ततो यथाकालं पुनरावृत्तावपि तृतीयस्थानवन्नायं जुगुप्सित., सुखरूपतया स्वर्गार्थिनामिष्टत्वात् स्वर्गकामो यजेतेति वेदविहितत्वाच्च, पुनरावृत्तिभीतस्य तु पञ्चाग्निविद्यया परिज्ञातवदीयजगन्मातृभावस्य तत्कृपामात्रशरणस्येष्टादिकारिणोऽपि देवयान. पन्था इति तत्त्वम् ।३।१।७।

तदनन्तरप्रतिपत्त्यधिकरणे योऽवरोहप्रकार उक्तस्तद्भेदं सशय्यते, जीवोऽनुशयवानवरोहति न वेत्यवरतन्निर्णायकमधिकरणान्तरमाह—

( कृतात्ययाधिकरणम्—२ । )

कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ।३।१।८॥

अत्राह निरनुशयो जीवोऽवरोहति, 'यावत् सम्पातमुषित्वा' इति श्रवणात्, सम्पतनहेतुश्च पुण्यक्षयः। 'नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरञ्चाविशन्ति' इति श्रुतेः (मुण्डक० १।१०) क्षीणे पुण्ये मर्त्यलोकं विशन्तीति स्मृतेश्च। इति प्राप्तेऽभिधीयते 'कृतात्यय' इति। 'कृतस्य' स्वर्गभोगजनकेष्टापूर्त्तादिपुण्यस्य 'अत्यये' क्षये 'अनुशयवान्', 'यथेतं' यथागतं गमनारम्भलोकं मनुष्यदेहम् अनतिक्रम्येत्यर्थः यद्वा यथा एतमिति वाक्ये पररूपभावादागमनलोकं मनुष्यदेहमनतिक्रम्येत्यर्थः। 'अनेवम्' न एवम् अनेवम् अनीदृशम्, गमनारम्भलोकविसदृशं तल्लोकात् हीनतरं पश्वादियोनिमित्यर्थः चकारो व्यक्तिभेदेन व्यवस्थितविकल्पार्थः। आविशन्नवरोहतीति शेषः, 'दृष्टस्मृतिभ्याम्' दृष्टं श्रुतिः, इमं लोकं हीनतरञ्चाविशन्तीति श्रुतेः। श्रुत्यन्तरं स्मृतिश्चाग्रे उदाहरिष्येते। एवेनैतदुक्तं भवति, यद्यपि इष्टादिकारिणां स्वर्गादवरोहस्तज्जनकापूर्वनाशादेव भवति, तथापि मृगमदापनयनेऽपि तद्भाजने तदीयवासनावत् स्वर्गभोगजनकापूर्वनाशेऽपि तस्यापूर्वस्य वासनास्थलीयोऽनुशयस्तिष्ठति, स च तस्य शक्तिविशेषः, येनोत्तरं रमणीययोनिः सम्पाद्यते ननु कथमपूर्वनाशे तच्छक्तिरिति चेन्नैष दोषः सत्कार्य्यवादे निरन्वयध्वंसाभावात् शुभाशुभकर्म-

जनितापूर्वस्य धर्म्मस्याधर्म्मस्य च बुद्धौ तिरोभावेऽपि तदाश्रयेण शक्त्यधिष्ठानसम्भवात्। अतएव महापापस्य प्रायश्चित्तेन क्षयेऽपि व्यवहारविरोधिकायास्तच्छक्तेः सत्ता शूलपाणिमहामहोपाध्यायस्मार्त्तभट्टाचार्य्यादिनिबन्धृभिरभ्युपगता। अथवा स्वर्गादिभोगहेतुधर्म्मादिक्षयेऽप्यनन्तरजन्मादिहेतुस्तच्छेष इत्येकोऽनुशयः। अपरश्चानुशयः, कर्म्मान्तरापूर्वम् इष्टादिना धर्म्ममाचरितवतो निषिद्धाचरणादिना पापभागिनोऽकृतप्रायश्चित्तस्य पुरुषस्य स्वर्गभोगेन फलेन प्रक्षीणे धर्म्मे तत्तरं रमणीययोनिहेतुभूतां तिरोभूताश्रयतया न्यूनतया वा दुर्बलामनुशयाख्यां शक्तिं शेषं वा बाधित्वा बलीयसी दुरितापूर्वशक्तिरुज्जृम्भते। तस्या अप्यनुशय संज्ञा, स्वर्गभोगदशायां दुर्बलभावेनावस्थानात् उत्तरकालीनफलस्य तत्रावस्थानाच्च। अनुशेते = शक्त्यन्तरसम्पादितभोगदशायां फलजननासामर्थ्येन निद्रितवच्चिष्ठतीति, अनु पश्चाद्भावि फलं शेतेऽस्मिन्निति वानुशयपदव्युत्पत्तिरनुशयद्वयसाधारणी। ननु प्रथमानुशयोऽप्रामाणिकः, द्वितीयेनैव गतार्थत्वादिति चेन्न 'पुण्यः पुण्येन कर्म्मणा पापः पापेन कर्म्मणा' इति श्रुतेः, 'वर्णा आश्रमाश्च स्वकर्म्मनिष्ठाः प्रेत्य कर्म्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते' इति शारीरकभाष्यादिधृतस्मृतेः, 'अथ पापात्मनां नरकेष्वनुभूतदुःखानां तिर्य्यग्योनयो भवन्ति। अतिपातकिनां पर्य्यायेण सर्वाः स्थावरयोनयः' इत्यादि विष्णुस्मृतेश्च। एतेन 'प्राप्यान्तं कर्म्मणस्तस्य

यत् किञ्चेह करोत्ययम् । तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्म्मणे' इति ( बृ० ४।४।६ ) श्रुतौ शुभाशुभविशेषायनपेक्षया कर्म्मसामान्यग्रहणात् । तस्माल्लोकादित्यस्य स्वर्गनरकान्यतरभोगपरताया ध्रौव्येण, नरकभोगादेव पापक्षयात् तिर्य्यग्योन्यादिप्राप्तिः कथं स्यादित्याक्षेपोऽपि निरस्तः । उक्तं तिर्य्यग्योन्यादिप्राप्तिहेतुभूतातिपातकपापशक्तिविशेषस्यानुशयाख्यस्य नरकभोगेनातिपातकनाशेऽपि सत्त्वात्, तस्यैव शक्तिविशेषस्य पापशेषत्वाभिधानाच, अथवा—कल्पे तु यथाश्रुतस्य सम्भवात् । 'आयुः पुत्रान् धनं विद्यां स्वर्गं मोक्षं सुखानि च राज्यञ्चैव प्रयच्छन्ति प्रीताः पितृगणा नृणाम् । श्रूयते च । परं मोक्षं प्राप्ताः कौशिकसूनवः । पञ्चभिर्जन्मसम्बन्धैर्गत्वा विष्णोः परं पदम्' । ( मात्स्ये २० अध्याये ) इति स्मरणं तद् बहुजन्मभोग्यपापफलादिपरम् तद्बाधितपुण्यफलप्रदर्शनार्थञ्च । द्वितीयानुशयस्य प्रमाणं तु 'तद् य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रयोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणाः अभ्याशो ह यत्ते कपूयां योनिमापद्येरन्, सूकरयोनिं वा चण्डालयोनिं वा' इति श्रुतिः । 'श्रूयते च परं मोक्षं प्राप्ताः' इति स्मृतिरुपदर्शिता । पितृश्राद्धप्रभावेण जातिस्मरत्वं प्राप्ताः पापकर्म्मणा व्याधमृगचक्रवाकहंसरूपजन्मान्तराणि प्राप्य ब्राह्मण्यादिलाभेन मुक्ता इति श्राद्धजनितापूर्वमनुशयरूपं पापभोगदशायामप्यवतिष्ठमानं भोगेन पापक्षये मोक्षफलकब्राह्मणादिजन्महेतु-

रभूदिति तदुपाख्यानार्थः। द्वितीयानुशयाभावे इष्टादिफलेन स्वर्गसुखमनुभूयावरोहतः, कथं कपूयाचरणं सम्भवेत्, कपूयचरणानां कौशिकसूनुना तिर्य्यग्भावात् कथं वा रमणीययोनिप्राप्तिः सम्भवेदित्याशयः। यथेममनेवक्ष्येत्यस्य गमनानुरूपं गमनविरूपञ्चावरोहणं व्याचक्षाणैः श्रीमद्रामानुजाचार्य्यपादैरुक्तम्, आरोहणं हि धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रकमेण, अवरोहणं तु चन्द्रमसः स्थानादाकाशवायुधूमाभ्रमेघक्रमेण। तत्राकाशावरोहणाद् यथेतम्, वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्चानेवमिति, अयं शारीरकभाष्यानुगामी पन्थाः सर्वैरुपसेव्यते, स चात्राप्यनर्गल एवेति दिक् ।३।१।८।

ननु 'रमणीयचरणाः' 'कपूयचरणाः' इति श्रुतौ—चरधातूत्पन्नश्चरणशब्दो न कर्म्मपरः श्रुतो कर्म्मभिन्नार्थे चरधातोः प्रयोगदर्शनात्, 'यथाकारी यथाचारी तथा भवति' इति ( बृ० ४।४।५ ) 'अनवद्यानि कर्म्माणि' 'सुचरितानि' ( तै० १।११।२ ) इति च। कर्म्मभिन्नार्थस्य शीलम्, कर्म्मणः, स्वत्वपूर्वपर्य्यवसायितया तच्छक्तिभूतत्वेन तदात्मकस्य तच्छेषत्वेन वाऽनुशयत्वेऽपि शीलस्य तथात्वाभावादनुशयवानवरोहतीति न युक्तमित्याक्षेपगर्भवत्समाधानसूत्रमाह—

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ।३।१।९।।

'चरणात्' 'रमणीयचरणाः' इत्यादिचरणश्रुतेः, अनुशयवानवरोहतीति न युक्तम्, 'इति चेत्' इत्युच्यते यदि,—तत्

परिह्रियते नेत्यादिना 'न' नाय' दोषः। चरणश्रुतिः 'उपलक्षणार्था' अनुशयस्योपलक्षिका 'इति कार्ष्णाजिनिः' तन्नामाचार्य्य इति मन्यते ।३।१।९।

अत्राशंक्य समाधत्ते—

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ।३।१।१०॥

उपलक्षणं नाम अजहत्स्वार्था लक्षणा, शीलरूपमुख्यार्थपरत्वसम्भवे लक्षणा स्वीकारस्य 'आनर्थक्यम्' निष्प्रयोजनकत्वम् । तात्पर्य्यानुपपत्तिरूपप्रयोजनाभावाल्लक्षणा न युक्तेत्यर्थः। 'इति चेन्न' इत्याशङ्कां निरस्यति, चरणशब्दमुख्यार्थस्य शीलस्य 'तदपेक्षत्वात्' कर्म्मापेक्षत्वात्, 'पुण्यः पुण्येन कर्म्मणा भवति पापः पापेन' इति श्रुतेः, तथा च श्रुत्यन्तरैकवाक्यत्वानुरोधेनात्र मुख्यार्थपरित्याग इति कार्ष्णाजिनिमतनिष्कर्षः ।३।१।१०।

मतान्तरे चरणादित्याक्षेपस्य समाधानमाह—

सुकृतदुष्कृते एवेति तु बादरिः ।३।१।११॥

'बादरिः' तन्नामाचार्य्यः 'तु' मन्यते। 'सुकृतदुष्कृते' धर्म्माधर्म्मौ,—'एव' "रमणीयचरणाः" इत्याद्युक्तचरणशब्दयोरर्थः, न तु शीलम् 'इति' इतिशब्दो मतस्वरूपबोधनार्थः। न हि शीलमाचारः, तयोर्भेदेन निर्देशात्। 'वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनाम्' इति मनुना शीलमुक्त्वाचारपक्षे कर्म्मविशेषयोरुक्तेः, 'आचारः परमो धर्मः' इति स्मृतेः। चरधातोः कृत्यर्थे प्रयोगस्य 'धर्म्मं चर' ( तै०

१।११।१ ) इति श्रुतिप्राप्तत्वाच्च। कर्म्माचारयोर्भेदनिर्देशस्तु प्रत्यक्षश्रुतिविहितस्य कर्म्मणः कर्म्मपदेन शिष्टपरम्पराप्राप्तकर्म्मणश्चाचारपदेन ग्रहणात्। ईदृशमेव कर्म्म होलाकाधिकरणेन निरूपितम्। तत्र तत्र कर्म्मणि श्रुतत्वविनाशितया तज्जन्यापूर्वे निरूढलक्षणा तु सर्वसम्मतत्वादविवादेति, श्रचारस्यैवमन्तताया: सिद्धत्वेनान्वे निवेश इति च ध्येयम् ।३।१।११।

ननु इष्टादिकारिणां चन्द्रमोगमनमुक्तमितरे तु संसरन्तो जीवाश्चन्द्रमसं गच्छन्ति न वेति संशये पूर्वपक्षमाह—

( अनिष्टादिकार्य्यधिकरणम्—३ । )

## अनिष्टादिकारिणामपि च श्रुतम् ।३।१।१२॥

न इष्टादिकारिणः अनिष्टादिकारिणस्तेषामपि चन्द्रमोगमनं श्रुतम्, चकारो हेतुवचनः, 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति कौषीतकिब्राह्मणश्रुतेरित्यर्थः ।३।१।१२।

एवं प्राप्तेऽभिधीयते—

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ।३।१।१३॥

तुकारः पक्षं व्यावर्त्तयति। 'संयमने' यमपुरे 'अनुभूय' सपिण्डनान्तश्राद्धसम्पत्त्या प्रेतत्वपरिहारानन्तरं नरकं भुक्त्वा, 'इतरेषाम्' अनिष्टादिकारिणाम्, आरोहावरोहौ' भवतः, 'तद्गतिदर्शनात्,' तद्गतिः=तदवस्था यमपुरगमनलिङ्गयमवश्य-

ताविशेषः श्राद्धोद्देश्यत्वञ्च, तद्दर्शनात् = तत् श्रुतेः, 'न साम्पराय: प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' ( क० २।६ ) यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः। तास्ते सन्तूद्भ्वीः प्रभ्वीस्तास्ते यमो राजानुमन्यताम्' ( अथर्व० १८।४।४३ मन्त्रः ) इति 'वैवस्वतं संयमनं जनानाम्' इति चैवं जातीयमन्त्रवर्णात्। यथा च अनिष्टादिकारिणां न चन्द्रमोगमनमित्यर्थः।३।१।१३।

विशेषप्रतिपत्त्यर्थमाह—

## स्मरन्ति च ।३।१।१४।।

मनुव्यासादयः स्मरन्ति यमाधीनमर्थजातम्, येनानिष्टादिकारिणां साक्षाच्चन्द्रमोगमनमपोद्यते। तथाहि, गारुडोत्तरखण्डे षष्ठाध्याये, 'कृष्यते यमदूतैश्च शिवावत्राददभीषणैः। प्रयाति दारुणे मार्गे पापकर्म्मा यमालये।' इत्याद्युपन्यस्य 'पुराणि षोडशामुष्मिन् मार्गे यानि च मे शृणु। सौम्यं सौरिपुरं नगेन्द्रभवनं गन्धर्वशैलागमौ क्रौञ्चं क्रूरपुरं विचित्रभवनं बह्वापदं दुःखदम्। नानाक्रन्दपुरं सुतप्तभवनं रौद्रं पयोवर्षणं शीताढ्यं बहुभीति धर्म्मभवनं याम्यं पुरं चाग्रतः।' इत्युक्तम्, तत्र प्रथमपुरप्रकरणे 'तत्र नाम्ना तु राजासौ जङ्गमः कामरूपधृक्।' इति च। एषु यमालयमार्गस्थेषु तत्पुराधिपत्यनुमत्या षोडशसु पुरेषु षोडशश्राद्धमात्रभोजनशरणः परेतो यमपुरे नीयत इति तत्-

प्रकरणार्थः। 'कृते सपिण्डीकरणे नरः संवत्सरात् परम्। प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते इति विष्णुधर्मोत्तरस्मरणात्, 'तन्निर्दिष्टां ततो जन्तुर्गतिं याति शुभाशुभाम्।' तन्निर्दिष्टा = यमनिर्दिष्टाम्। तत = प्रेतत्वमुक्तेः परम्। इत्येकैकस्मिन् पुरे एकैकश्राद्धदत्तपिण्डभोगप्रकारस्य सप्रपञ्चस्य 'द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा। सपिण्डीकरणञ्चैव तृतीया षोडशी मता। यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश। पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि' इत्यस्य च गारुडोक्तत्वात्। अध्यायान्तरे च 'सुखं सुकृतिनस्तत्र नीयन्ते नाकनायकैः। दुरात्मानश्च वाड्यन्ते किङ्करैः पाशबन्धनैः' ( गरुड० उ० १६ अ० १०)। दुरात्मना यमनिर्दिष्टा गतिर्नरकपातः 'परत्र चासिद्धिस्तामेके नरकम्' इति गौतमस्मरणात्,—मुख्यतरतस्यैकविंशतिविधत्वमाह मनु 'तामिस्त्रमन्धतामिस्त्रं महारौरवरौरवौ। नरकं कालसूत्रञ्च महानरकमेव च। संजीवनं महावीचिं तपनं सम्प्रतापनम्। सङ्घातं च सकाकोलं कुड्मलं पूतिमृत्तिकम्। लोहशङ्कुमृजीषं च पन्थानं शाल्मलीं नदीम्। असिपत्रवनञ्चैव लोहदारकमेव च' (अ० ४।८८।९०) इति। प्रपञ्चस्तु 'नरकाणां सहस्राणि वर्त्तन्ते शरुणानुज। शक्यं विस्तरतो नैव वक्तुम्' इति गारुडादसंख्येयाः खलु नरका इति। तत्र चानिष्टादिकारिणः पापिनो यथापापं पात्यन्ते,—यमनिर्दिष्टैवमशुभा गतिः स्मृतिषु वर्णिता। तस्मादेषां चन्द्रमोगमनं नास्तीति ज्ञेयम्।३।१।१४।

अनिष्टादिकारिणामिति सूत्रे आदिपदग्रहणात् पूर्त्त-कर्म्मणो दानस्य च प्राप्त्या तदन्येषामशुभगतिसिद्धावपि कृतप्रायश्चित्तानामनग्नीनां दानादिपुण्यमाचरतां पितृव्रताना च का गतिरिति जिज्ञासायामाह—

अपि च सप्त ।३।१।१५।।

अपिः समुच्चये, चकारस्त्वर्थः अक्रान्तनरकादिव्यावर्त्त-नाय । श्रुतौ चन्द्रमसः प्राप्तिमार्गे—'पितृलोकाच्चन्द्रमसम्' ( छा० ५।१० ) इत्युक्तं यच्च स्मृतौ 'पितॄन् यान्ति पितृव्रताः' (गी०) इत्युक्त तत् प्रतिपाद्यान् पितॄन्, 'सप्त' सप्तधा विभक्तान् स्मरन्तीत्यनुपपद्यते । 'विराट् सुताः सोमसदः साध्यानां पितरः स्मृताः । अग्निष्वात्ताश्च देवानां मारीचा लोकविश्रुताः । दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम् । सुपर्णकिन्नराणां च स्मृता बर्हिषदोऽत्रिजाः । सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः । वैश्यानामाज्यपा नाम शूद्राणान्तु सुकालिनः' इति ( ३।१९५—९७ ) मनु', एतानेव च व्यासादयः 'अग्निष्वात्ता-स्तथा सौम्या हविष्मन्तस्तथोष्मपान् । सुकालिनो बर्हिषदश्चा-ज्यपांस्तर्पयेत् पितॄन्' इति नामभि, पुराणेषु । तथा च तेषां सप्तैव स्थानानि पितृलोकशब्दितानि तत्रैव गच्छन्ति निरग्नयः कृतदानादिपुण्याः पितृव्रताश्चेत्यर्थः श्राद्धस्य दानविशेषत्वा-दित्याशयः ।३।१।१५।

नन्वेवमपि कौषीतकिब्राह्मणोक्तं सर्वेषां जीवानां प्रेत्य

चन्द्रमोगमनं कठोक्ता यमवश्यता च विरुध्येते, सौम्यादिपुरस्वाम्यस्वामिकत्वादित्याशङ्कायां समाधिमाह—

## तत्रापि च तद्व्यापारादविरोधः ।३।१।१६।।

'तत्रापि' सौम्यादिपुरषोडशकपितृलोकतदुत्तरलभ्यस्थानेषु, 'तद्व्यापारात्' तयोश्चन्द्रमोयमयोः 'व्यापारात्' संरक्षणशासनाभ्यां व्याप्रियमाणत्वात्, 'अविरोधः' विरोधाभावः । अयमाशयः, यो हि चन्द्रमाः 'आकाशाच्चन्द्रमसम्' इत्यत्रोक्तः स एव सोमः 'एष सोमो राजा' इति श्रुतेः । उमाधिष्ठानात् सोमः, 'यस्मादुमापतिः सार्द्धमुमया तमधिष्ठितः । तं दृष्ट्वा चाष्टमांशोनस्ततः सोमोऽभवच्छिशुः ।' इति (मत्स्य पु० २३।५) स्मरणात् । स चात्रिनेत्रोद्भवतेजोमयः, दिग्भिः पुत्रकाम्याभिः स्वस्वगर्भे धृतो धारणासामर्थ्येन वर्षशतत्रयानन्तरं प्रत्येकम् परित्यक्तो गर्भच्युतांश्चादाय तानवयवान् संधाय ब्रह्मणा शरीरितां नीतः । इत्युपन्यस्य 'युवानमकरोद्ब्रह्मा सर्वायुधधरं नरम् । स्यन्दनेऽथ सहस्राश्वे वेदशक्तिमये प्रभुः । आरोप्य लोकमनयदात्मीयं स पितामहः । तत्र ब्रह्मर्षिभिः प्रोक्तमस्मत्स्वामी भवत्वयम् । पितृभिर्देवगन्धर्वैरोषधीभिस्तथैव च' । इति मात्स्ये त्रयोविंशाध्याये 'सोमः पितृणामधिपः कथम्' इति प्रश्नस्य प्रतिवचनरूपेण स्मरणात् , तत्रैवैकादशाध्याये वैवस्वतं यमं प्रकृत्य 'एवं स लोकपालत्वमगमच्छूलपाणिनः । पितृणामाधिपत्यं च धर्माधर्मस्य चानघः ।'

इति स्मरणात्, तत्रैव त्रयोविंशाध्याये सोमं प्रकृत्य 'तथेत्युक्तः स आजह्रे राजसूयं तु विष्णुना' इति च स्मरणात्, लौकिक सम्राड् देशाधिपतितुल्यत्वं सोमयमयोः, सौम्यपुरादिषु जङ्गम इति विविक्त इति च नामद्वयेन सूचितानां स्वाम्यन्तराणां पितृलोके चाग्निष्वात्तादीनां पुराधिपतितुल्यत्वं बोध्यम्। 'धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद् यान् षड् दक्षिणैति मासान्' इति 'मासेभ्यः पितृलोकं पितृलोकाच्चन्द्र-मसम्' ( छा० ५।१०।४ ) इति च श्रुतौ धूमो रात्रिश्चेति देव-स्थानद्वयं सौम्यादिषोडशपुरी, अपरपक्षदक्षिणायनमासष-ट्कश्चेतिद्वयं संयमनम्, दक्षिणायनवर्षामासदेवाधीनकर्द-मात्मकभूमिस्थलीयं नरकस्थानम्, अपरा च तत्र सुखभोगभूमिः, यमपुरेऽपि धर्म्मात्मनां राज्ञामपीक्षाभ्यावस्थितेर्महाभारतसभा-पर्व्वणि यमसभावर्णनप्रसङ्गे नोक्तत्वात्। ततः पितृलोकस्तत-श्चन्द्रमाः। कौषीतकिब्राह्मणे यत्चन्द्रमो गमनमुक्तं तच्चन्द्रमसोऽधि-पतिकस्थानगमनपरं, राजाधिकृतभूमौ सम्राज इव यमाधिकारे-ऽपि चन्द्रमसोऽधिपतित्वेन यमवश्यानां चन्द्रलोऽधिपतिकस्था-नप्राप्तिर्न विरुध्यते। किञ्चौषध्यादीनामपि चन्द्रमःस्वामिकतया श्रीहियवादिभावेनावस्थितिर्नरकोत्तीर्णानां मानुष्यकजन्मनः प्राग्भवतीत्यत्रापि नास्ति विरोधः। नच चन्द्रमःपदस्य लक्षणा प्रसज्यत इति शङ्कनीयम्, इष्टादिकारिणां गतिप्रतिपादनपरे 'आकाशाच्चन्द्रमसम्' इत्यत्र वाक्येऽपि चन्द्रमःपदस्य तल्लोके लक्षणायाः सर्वैरभ्युपगमात्। इह लोके पुराध्यक्षाणां देश-

पतेरिव सौम्यादिपोडशपुरीपतीनां यमस्याधीनतया तद्गृहयाना-मपि यमवश्यत्वमेवेति शङ्काद्वयपरिहारो वेदितव्यः ।३।१।१६।

ननु, अनिष्टादिकारिणामपि नरकोचितानां चन्द्रमोगमनं ततोऽवरोहणञ्च श्रुतिप्रामाण्यादभ्युपगन्तव्यमन्यथा लक्षणा प्रसज्येत। चन्द्रमःसोमशब्दयोस्तल्लोके निरूढलक्षणा, चन्द्राधि-पतिकसामान्ये लक्षणा त्वनिरूढेति वैषम्यमित्याशङ्कायामाह—

## विद्याकर्म्मणोरिति तु प्रकृतत्वात् ।३।१।१७।

'तद् य इत्थं विदुः' इत्यनेन प्रागुक्तरूपपञ्चाग्निविद्या-निष्णाता उच्यन्ते। 'श्रद्धा तप इत्युपासते' इत्यनेन श्रद्धा 'या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता' इति सप्तशतीव्याख्यातस्वरूपा, तप इति 'तामग्निवर्णां तपसा ज्वलन्तीम्' इति मन्त्रवर्णोपदिष्टा दुर्गा त्येवमुपलक्ष्योपासीना उच्यन्ते—एतेन विद्या व्याख्याता। पञ्चाग्निविद्यारहस्य श्रीदुर्गोपासनानुकूला विद्या चेति द्वयं विद्यापदार्थे, इष्टापूर्त्ते दत्तमित्युपासत इत्यनेन कर्म्मोक्तं तच्च निरुक्तविद्याविरहितत्वे सति इष्टापूर्त्तदानकारित्वम्। दानशब्देन श्राद्धस्यापि ग्रहणः, 'सस्कृतव्यञ्जनाढ्यं च पयोदधिघृतान्वितम्। श्रद्धया दीयते यस्मात् तेन श्राद्धं प्रकीर्त्तितम्' इति पुलस्त्य-वचनात् श्राद्धस्य दानविशेषतया प्राप्तेः। तच्च दानं पितृद्दे-श्यकम्, 'असावेतत्ते यजमानस्य पित्रे' इत्यादि श्रुतेः। देव-ब्राह्मणसर्वभूतपितृणां सकामाभ्यर्च्चनरूपमिति कर्म्मपदार्थः। तथाविधयोः 'विद्याकर्म्मणोः' 'इति' इतिशब्दः प्रकारवचनः

पञ्चम्यन्तश्च । प्रकारश्च तस्यानेन च्छान्दोग्यश्रुत्युपदर्शितः देवयानगत्या पितृयानगत्या च चन्द्रमोगमनरूपः, नत्वन्यथा, नहि विद्यावर्जितानां कर्म्मवर्जितानां च चन्द्रलोकार्थकचन्द्रमोगमनं नरकोत्तीर्णानां सम्भवति, विद्याकर्म्मणोरभावात् । कुतोऽयं प्रकार इत्यत आह 'प्रकरणात्' छान्दोग्यश्रुतौ तथैव प्रकरणात्, तद्यथा—'तद् य इत्थं विदुः ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद् यान् षडुदङ्हेति मासाँस्तान् । मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयत्येष देवयानः पन्था इति । अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद् यान् षड्दक्षिणैति मासांस्तान्न ते संवत्सरमभिप्राप्नुवन्ति । मासेभ्य पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम्' (छा० ५।१०।१–४) इति । अरण्य इति तदुपलक्षिताश्रमभाज इति साधनप्रकरणस्य प्रायिकत्वाभिप्रायेण, ग्राम इति गार्हस्थ्यपरम् । वस्तुतः अरण्य इति साधनैकामतासम्पत्तये, ग्राम इति इष्टापूर्त्ताद्युपयोगिस्थानाभिप्रायेण । विशेषस्त्वयं देवयाने चन्द्रमोगमनं मार्गरूपेण, अपुनरावृत्तये ततोऽप्यारोहणाय । पितृयाने तु तदेव चरमफलमिति स्पष्टम् । तस्मात् कौषितकिब्राह्मणे प्रदर्शितस्य चन्द्रमःपदस्य चन्द्राधिपतिकविषये लक्षणा सप्रयोजना, नातस्तत्रत्यसर्वपदार्थस्य सङ्कोचोऽभ्युपगन्तव्य इति तत्त्वम् ॥३।१।१७॥

नन्वेवमनिष्टादिकारिणां पञ्चम्यामाहुतावपां पुरुषवचस्त्व-प्राप्तिस्तदन्तरप्रतिपत्त्यधिकरणविचारिता व्याहन्येत इत्याशङ्क्याह—

न तृतीये तथोपलब्धेः ॥३।१।१८॥

'तृतीये' देवयानं प्रथमं पितृयानं द्वितीयं तद्व्यतिरिक्तं तृतीयं 'जायस्व म्रियस्व' इत्याख्यं तस्मिन्, 'न' पञ्चम्या आहुतेरपेक्षा नास्ति, सा हि पापकर्म्मणां कष्टायोगति', तथैव 'उपलब्धेः' 'अथैतयो पथोर्नकतरेणाचन तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीय स्थानम्' इति तत्प्राप्तिश्च स्तेनो हिरण्यस्य सुरा पिबंश्च इत्यादिना पापकर्म्मणामेवेति छान्दोग्ये श्रवणात् ॥३।१।१८॥

पञ्चम्या आहुतेरनपेक्षाया स्थानान्तरमाह—

स्मर्य्यतेऽपि च लोके ॥३।१।१९॥

पुण्यकर्म्मणामपि केषाञ्चित् पञ्चमाहुतेरनपेक्षया लोके शरीरारम्भ 'स्मर्य्यते' द्रौपदीधृष्टद्युम्नादीनां महाभारतादौ व्यासादिभिः स्मरणात्, चो हेतौ। अपि समुच्चये, तेन स्तेनो हिरण्यस्येत्यादिश्रुत्यनुक्तानां स्मृत्युक्तपापानां संग्रहो वेदितव्यः ॥३।१।१९॥

श्रौतमपि प्रमाणमाह—

दर्शनाच्च ॥३।१।२०॥

च समुच्चये, 'दर्शनात्' प्रत्यक्षप्रमाणात्—श्रुतेरित्यर्थः।

पञ्चमाहुतिमन्तरेणापि केषाञ्चित् शरीरारम्भो भवति, श्रूयते हि 'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति—आण्डजं जीवज-मुद्भिज्जञ्च' (छा०६।३।१) इति। अत्राण्डजानां पुरुषवचस्त्वं नास्ति, मानवशरीरे तस्य दृष्टेः, नाप्युद्भिज्जानां; नात स्तयोः पञ्चमाहुत्यपेक्षा। पापिनामेवंविधहीनयोनिप्राप्त्या तत्र नास्त्येव पञ्चमाहुत्यपेक्षेति श्रुतिस्मृतिसिद्धोऽर्थः ॥३।१।२०॥

आसङ्गिकशङ्कां निरस्यति—

## तृतीयशब्दावरोधः संशोकजस्य ॥३।१।२१॥

ऐतरेयके पठ्यते 'अण्डजानि च जारुजानिच स्वेदजानि चोद्भिज्जानिच' ( ऐत० ३।३ ) इति चातुर्विध्यम्, छान्दोग्यश्रुतौच दर्शितानि त्रीण्येव बीजानि, तदत्र समाधानम्—तृतीयेत्यादिसूत्रम्, छान्दोग्ये यः तृतीयशब्दः=उद्भिज्जमिति, तेन 'अवरोधः' संग्रहः 'संशोकस्य' स्वेदजस्य, स्वेदमुद्भिद्य स्वेदजो जायत इति योगबलात्। तस्मात् पञ्चमाहुत्यपेक्षा न सर्वजीवसाधारणीति पर्यवसन्नम् ॥ ३।१।२१ ॥

छान्दोग्यश्रुतेः पितृयानपथघटितविचारप्रकरणे तद्गत्यापितृजिज्ञासान्तरनिवृत्त्येऽधिकरणान्तरमाह—

( साभाव्यापत्त्यधिकरणम्—४ )

## साभाव्यापत्तिरुपपत्तेः ॥३।१।२२॥

पितृयानेऽवरोहदशायां 'वायुर्भूत्वा धूमो भवति, धूमो भूत्वाभ्रं-

भवति, अभ्रं भूत्वा मेघो भवति' (छा० ५।१०।६) इति श्रूयते, तत्रावरोहतो जीवस्य किं धूमादिभावापत्तिरुत तत्समानभावापत्तिरिति संशये तद्भावापत्तिरिति प्राप्नोति, मुख्यार्थपरित्यागे हेत्वभावात्, इत्येवं स्थितेऽभिधीयते 'साभाव्यापत्तिः' समानभावापत्तिः सादृश्यलाभ इत्यर्थः, कुतः ?, 'उपपत्तेः' 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद् वायुं वायुर्भूत्वा' इत्यध्वत्वेनोक्तक्रमे तद्भावो नोपपद्यते, गन्तुरध्वनश्च मिथो भेदस्य सर्वसिद्धत्वात्, चन्द्रलोकादाकाशं ततश्च वाय्वादवरोहेऽपादानकर्मणोर्विभक्तिभेदात् तयोरवरोढुरन्यत्वस्य मुख्यवृत्त्यैव प्रतीतेः । एतमेवेत्यनेन तथैवाध्वतया परिपठितेषु वाय्वादिष्वपि तत्सादृश्यस्यैवोपपत्तेः । अन्यथा प्राप्तक्रमभङ्गो वाय्वादेरध्वत्वभङ्गश्चेति तत्साभाव्यापत्तिपरत्वमेव वाय्वादिश्रुतेरिति युक्तम् ॥३।१।२२॥

तत्रैव जिज्ञासान्तरं निरस्यति—

( नातिचिराधिकरणम्—५ )

## नातिचिरेण विशेषात् ॥३।१।२३॥

यदेतदवरोहणमुक्तं तत्र व्रीह्यादिप्रतिपत्तेः प्रागेकैकस्मिन् चिरेऽतिचिरमवस्थितिरनतिचिरं वेति संशये विशेषनिर्देशाभावादनियम इति प्राप्तम्, तत्रोच्यते 'नातिचिरेण' नातिचिरमवस्थितिः, कुतः ? 'विशेषात्' विशेषाभिधानात्, व्रीह्यादिप्रतिपत्तेरनन्तरम् 'अतो वै दुर्निष्प्रपतरम्' ( छा० ५।१०।६ ) दुर्निष्प्रपततरमित्यत्र च्छान्दसात् तकारलोपाद् दुर्निष्प्रपतरमिति विशिष्योक्तत्वात् ।

दुर्निष्प्रततरम् अन्यापेक्षया चिरेण निष्क्रमणं यत इत्यर्थकं हि भवति, तस्मादन्यस्मादतिचिरेण नावरोहः किन्त्वनतिचिरेणेति सिद्धम् ।॥ ३।१।२३ ॥

तदुत्तरजिज्ञासां निवर्त्तयति—

( अन्याधिष्ठिताधिकरणम्—६ )

अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥३।१।२४॥

'मेघो भूत्वा प्रवर्षति' इत्यनन्तरम् 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' ( छा० ५।१०।६ ) अत्र संशय्यते किमवरोहन्तोऽनुशयिनो व्रीह्यादियोनिं प्राप्नुवन्ति, उत जीवान्तराधिष्ठितेषु व्रीह्यादिलक्षणशरीरेषु संश्लेषमात्रेण तिष्ठन्तीति । जायन्ते इत्याम्नानात्, मनुष्यो जायते पशुर्जायत इतिवत् व्रीह्यादियोनिं प्राप्नुवन्तीति प्राप्तम्, तत्रोच्यते—'अन्याधिष्ठितेषु'=जीवान्तरभोगायतनेषु व्रीह्यादिषु, संश्लेषमात्रेण तिष्ठन्त्यवरोहन्तोऽनुशयिन इति शेषः, कुत एतत् ? 'पूर्ववदभिलापात्' आकाशादिमेघपर्य्यन्तं पूर्वं यथा भवतीत्यादिना अतद्भावेऽपि तत्साभाव्याभिलाप, तथात्रापि जायन्ते इत्यनेन लक्षणया तत्साभाव्यमेवाभिलपितम्, क्रमप्राप्तस्यानुक्तत्वात् । रमणीयचरणानां कपूयचरणानां च योनिविशेषप्राप्तेरभिलापेन व्रीह्यादिभावप्राप्तेरविषयीकरणात्, संश्लेषमात्रेणैव तत्र स्थितिरिति सिद्धम् ॥३।१।२४॥

ननु पशुहिंसादियुक्तं यज्ञकर्म्म अशुद्धमिति तदनुशयिनामनिष्टफलं व्रीह्यादिजन्म भवितुमर्हति, कथं मुख्यार्थबाध इत्याशङ्क्य समाधत्ते—

## अथ तृतीयाध्याये द्वितीयः पादः ।

परिच्छिन्नत्वज्ञानरूपाज्ञानगृहीतस्य जीवस्य कर्म्मफलकथनमुखेन जागरावस्थायां संसारसुपवर्ण्यावस्थान्तरवर्णनमुपक्रमते ।

तत्रादौ भवति चिन्ता, योनेः शरीरमिति यद्यपि जागरे, स्वाप्नसृष्टौ तु नैवं, विनापि योनिं तत्र शरीरान्तरोत्पत्तिदर्शनात्, तत्र का गतिरित्यत आह—

( सन्ध्याधिकरणम्—१ )

### सन्ध्ये सृष्टिराह हि ॥३।२।१॥

सन्ध्यमिति स्वप्नाम, 'सन्ध्यं तृतीयं स्वप्नस्थानम्' ( बृ० ४।३।६ ) इति श्रुतेः, जागरसुषुप्त्योः सन्धौ भवतीति योगाद्वा । तस्मिन् सृष्टिर्यदि पारमार्थिकी स्यात्, शरीरोत्पत्तिप्रकारोऽपि तत्रोपपादनीयः, परन्त्वियं पारमार्थिकी न वेति संशयः, किं तावत् प्राप्तम् ? पारमार्थिकीति; कुतः? 'हि' यतः, 'आह' ब्रवीति, प्रकाशयति श्रुतिरिति शेषः, तथाहि 'स यत्र प्रस्वपिति' इति प्रकृत्य 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते' ( बृ० ४।३।९–१० ) तत्रापारमार्थिकसृष्टौ सृजतिप्रयोगो भवतीति श्रुतिप्रामाण्यात् सृष्टिः पारमार्थिकीति गम्यते ॥३।२।१ ॥

सन्ध्यसृष्टेः पारमार्थिकत्वं द्रढयितुं प्रमाणान्तरं दर्शयति—

### निर्म्मातारं चैके पुत्रादयश्च ॥३।२।२॥

न केवलं सृजति प्रयोगः, किं तर्हि निर्म्मातिप्रयोगः, परमेश्वरकर्तृकत्वञ्च तत्र श्रूयते, नहि निर्म्माणमसत्यस्य वस्तुनो भवति नापि

पारमेश्वरी सृष्टिरसत्या भवति, तदेतद्दर्शयति 'निर्मातारं चैके' इति, एके=शाखिन आमनन्ति, 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति (कठ०५।८) मन्त्रेण। ननु कामं काममिति वीप्सया बहूनां कामानामेव निर्माणमत्र श्रुतं न तु रथादिविषयाणाम्, नातः समानतात्पर्यकत्वं श्रुत्योरित्यत आह 'पुत्रादयश्च' इति, तत्रैव कामपदेन पुत्रपौत्रादयः परिगृहीताः, तत्प्रकरणाद्यत्रापि काम्यविषय एव कामशब्दार्थः, तथाहि तत्रैव 'सर्वान् कामांश्छन्दतः प्रार्थयस्व' इति 'शतायुषः पुत्रपौत्रान् वृणीष्व (क०१।२३) इति च प्रकृत्य कामानां त्वा कामभाजं करोमीति यमवचनस्वरूपमाम्नातम् (क० १।२४) परमेश्वरप्रकरणाच्च निर्माता परमेश्वर इति विज्ञायते, 'अन्यत्र धर्मादन्यत्राधर्मादन्यस्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत् तत् पश्यसि तद्वद' इत्युपक्रमात्—'तस्मिन् लोकाः श्रिताः सर्वे तदुनात्येति कश्चन' इति वाक्यशेषाच्च। तस्मात् सन्ध्ये सृष्टिः पारमार्थिकीति प्राप्तम् ॥ ३।२।२ ॥

अत्रोच्यते—

**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३।२।३॥**

तुः पक्षव्यवच्छेदकः। सन्ध्ये सृष्टिः 'मायामात्रम्' विशिष्टाकारभ्रममात्रं, मात्रपदेन लौकिकसन्निकृष्टविषयकत्वव्यवच्छेदः। कुतः ? 'कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' कार्त्स्न्येन=सामग्र्येण देशकालसम्बन्धादिभिः सर्वैः प्रकारैः, अनभिव्यक्तस्वरूपत्वात्, 'अनभिव्यक्तम्' जागरे यद् अबाधितप्रत्ययविषयभूतं तदभिव्यक्तं

## अशुद्धमिति चेन्न शब्दात् ॥३।१।२५॥

'अशुद्धं' पशुवधादियोगात् पापसम्मिश्रम्, यज्ञकर्मेति शेषः। 'इति चेत्' इति यदुच्यते, तत् 'न' अशुद्धं न भवति, 'शब्दात्' श्रुतेः स्मृतेश्च, श्रुतिर्हि यज्ञे हिंसां विदधाति, स्मृतिरपि तामनुमन्यते 'या वेदविहिता हिंसा नियतास्मिंश्चराचरे। अहिंसामेव तां विद्याद् वेदाद् धर्मो हि निर्बभौ ॥, (मनु० ४।४४) श्रुतिरपि द्वेधा वैदिकी तान्त्रिकी च, तेन तन्त्रशास्त्रविहितबलिदानाङ्कशाकरयुपासनमपि नाशुद्धम्। नच न हिंस्यात् सर्वाभूतानीति श्रुतिरेव हिंसाया अधर्म्मत्वम् बोधयतीति वाच्यम्, अग्नीषोमीयं पशुमालभेतेत्यादिश्रुत्यापोदितत्वेन, वैधहिंसातिरिक्तहिंसाया एवाधर्मरूपतया पर्य्यवसितत्वात्। ॥३।१।२५॥

व्रीह्यादिसंश्लेषे हेत्वन्तरमाह—

## रेतःसिग्योगोऽथ ॥३।१।२६॥

'अथ' अनन्तरं 'रेतःसिग्योग' रेतःसिचा पुरुषेण तस्य योगः संश्लेष श्रुत्या प्रतिपाद्यते, 'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद् भूय एव भवति। (छा० ५।१०।६) इति। व्रीहियवसंश्लिष्टोऽनुशयी यैः क्रमेण निगीर्णस्तेषु रेतःसिचो रेतःसंश्लिष्टस्ततः पृथगविभाव्यमानस्तिष्ठति, न [illegible] रेतःसिग् भवति, प्राणिरूपेणानुत्पन्नस्य कथं नाम यौवनोचितरेतःसिक्त्वं सम्भवेत्? तस्मात् यथानुशयिणामन्नरेतोरेतःसिक्षु संश्लेषस्तथा तदव्यवहित-

पूर्वं व्रीहियवेष्वपीति युक्तम्। तत्र भवतेरिवात्र जनेस्तत्संश्लेषेणावस्थाने लक्षणाभ्युपगमस्य युक्तत्वात् ॥३।१।२६॥

नन्वेवमनुशयिनां सर्वत्रैव संश्लेषमात्रं प्राप्तं, क्रमप्राप्तिरूपयुक्तेः सत्वादित्यत आह—

## योनेः शरीरम् ॥३।१।२७॥

रेतःसिक्संश्लिष्टस्य जीवस्य रेतसि निषिक्ते योनेः शरीरमुत्पद्यते तदेव तस्य भोगायतनं, रमणीयचरणानां ब्राह्मणादिजन्मनः कपूयचरणानाञ्च श्वादिजन्मनः श्रवणात्। योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिन इति श्रुत्यन्तराच्च। लब्धशरीरस्य जागरावस्थायां पुनः कर्म, महाशक्तिज्ञानरहितस्य ततः पुनः पितृयानपथेन गमनं वा, अनुशयविशेषात् श्वादिजन्म वा, तृतीयस्थानं वेति दुर्निरोधं जन्मपारम्पर्य्यम्, तदेवं संसारविमुक्तिकामैः महाशक्तिस्वरूपब्रह्मतत्वज्ञानाय यतितव्यं तदुपासनार्थं। सकामानामपि तत एव तत्कृपालाभात् सत्त्वशुद्धिर्निष्कामता ज्ञानलाभश्च। नत्वन्यथेति प्रबोधनार्थोऽयं संसारविचार ॥३।१।२७॥

इति ब्रह्मसूत्रशक्तिभाष्ये पुरुषार्थसाधनोपदेशाख्ये
तृतीयाध्याये संसारोनाम प्रथमः पादः ॥

तत्र भवति यत् तदनभिव्यक्तं जागरे बाधितं स्वरूपं विशिष्टाकारो यस्य तत्त्वात्। यदेव जाग्रत् पश्यति तस्यापि स्वप्नदशायां न तद्देशत्वम्, जाग्रतो बहिर्देशेनं स्वप्ने त्वन्तरिति भेदात्। कालादिभेदस्तु स्पष्टः। जलादपि सृजति कुहकी, गगने प्रासादं निर्मिमीते वितथाभिनिवेशीत्यादिप्रयोगस्य लोके साधुतया, वेदेऽपि तथा प्रयोगे दोषाभावात्, 'न तत्र रथा न तत्र रथयोगाः' इत्यादिना स्वयं श्रुत्यैव बाधस्य दर्शितत्वेन बाधितविषयकत्वप्रतिपादनात्। बाष्पे धूमभ्रमेण धूमायमानो ह्रद इति विशिष्टप्रत्ययविषयस्य ह्रदस्य सन्निकर्षे सत्यपि, सत्यपि च धूमस्य सत्यत्वे यथा धूमायमानह्रदप्रत्ययो धूमह्रदयोः सम्बन्धमात्रस्य बाधेन कार्त्स्न्येनानभिव्यक्तस्वरूपतया भ्रममात्रं, तथैव स्वप्नोऽपि।

औपाधिकोऽयं जीवस्य स्वप्नः, तत्त्वं तु जीवो ब्रह्मणो नातिरिच्यते इति काठकश्रुत्योपदिष्टम्। जन्यमात्रं प्रति ब्रह्मणः कारणतया स्वप्नस्य तत्कर्तृकत्वेऽपि न कश्चिद्दोषः, तत्स्वरूपज्ञानस्य सत्यत्वात्, जागरेऽपि तस्याबाधितस्मरणादहमेवं स्वप्नमद्राक्षमिति, नन्वेवं कथमपारमार्थिकत्वं तस्योच्यत इति चेद् विषयबाधादिति ब्रूमः, स्वाप्नविषयस्य पारमार्थिकत्वशङ्कयैवाधिकरणोत्थितिबीजत्वादिति तात्पर्य्यम्। तस्मान्मायामात्रं सन्ध्ये सृष्टिरिति ॥३।२।३॥

स्वेन रूपेण तस्यापारमार्थिकत्वं नास्तीति स्वयमाह—

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥३।२।४॥**

'हि' यतः, चोऽवधारणे, सूचक एव=भविष्यतः शुभस्याशु-

मस्य वा अनुमापक एव भवति, स्वप्न इति शेषः, तस्मात्तस्य सत्यत्वमभ्युपगन्तव्यम्, नहि असतो लिङ्गत्वं सम्भवति, अवधारणेन तद्विषयसत्यत्वव्यवस्थापनव्यवच्छेदः । सूचकत्वे प्रमाणमाह 'श्रुतेः=' 'यदा कर्म्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने।' ( छा० ५।२।९ ) इत्यादिश्रवणात्। प्रथमं प्रमाणमुक्त्वा द्वितीयमाह 'आचक्षते च तद्विदः'=श्रुतिविद आचक्षते चेत्यर्थः, एतेन मत्स्यपुराणादौ स्वप्नाध्यायादिः स्मृतिः प्रमाणमभ्यधायि। तत्र 'नाभिं विनान्यगात्रेषु तृणवृक्षसमुद्भवः' इत्युपक्रम्य 'कापायवस्त्रधारित्वं तद्वन्नारीक्रीडनं तथा। स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम्। एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत्' इत्यादिकं प्रपञ्चितम ॥३।२।४॥

सूचकत्वे विशेषमाह—

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥३।२।५॥**

'तु' शब्दः पूर्वसूत्रार्थं किञ्चिद्व्यवच्छिद्य शिष्टस्यानुकर्षार्थः। दुःस्वप्नसुस्वप्नयोः सूचकत्वाविशेषेऽपि दुःस्वप्ने यो विशेषस्तं श्रुतिविद आचक्षते, इति 'तु' शब्दोपस्थापिताशंकःपूर्वसूत्रानुकर्षतात्पर्य्यम् । सूत्रस्यार्थस्तु पराभिध्यानात् परस्या दुर्गादिस्वरूपायाः शक्तेरभिध्यानं स्तवपठनम्, अभिध्यायत्यस्मिन्, तत्राभिध्यानस्योपदेशात्, 'यां देवतामभिष्टोष्यन् स्यात्, तां देवतामुपधावेत्' इति 'आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्' इति च ( छा० १।३।९।१२ ) श्रुतेः।

तस्मात् दुःस्वप्नसूचितफलं तिरोहितं शुभफलेनान्तर्हितं भवति, मम इवालोकसमृद्धयेति, तथा च देवीमाहात्म्यस्य पाठात्, केवलात्स्तवश्रवणाद्वा, 'दुःस्वप्नश्च नृभिर्दृष्टं सुस्वप्नमुपजायत इति सप्तशत्यां स्मर्यते, दुःस्वप्नं सुस्वप्नमिति च बहुव्रीहिसमासः फलपर्यवसायी। महाशक्तेः ; महत्त्वोपाधिकपौनःपात्रतात्वा सुदेवस्तवार्चनादेरपि दुःस्वप्ननाशकत्वं मात्स्याद्युक्तमत्रान्तर्भाव्यम् । पराभिध्याना-दित्यत्राभिध्येयपदार्थं विवृणोति 'ततो ह्यस्य बन्धविपर्ययौ' = 'हि' अवधारणे—'अस्य' जीवस्य 'ततः' तस्या एव, 'बन्धविपर्ययौ' = संसारबन्धतन्मुक्ती भवतः । स्मर्यते हि सप्तशत्याम्—'सा विद्या परमा मुक्तेर्हेतुभूता सनातनी । संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ।' इति । तस्मात् परस्य ब्रह्मणोऽभिध्यानमित्यर्थाभ्युपगमेऽपि न क्षतिः, उमाया. साकारब्रह्मरूपत्वस्य प्रागुपदर्शितत्वात् । बन्धहेतुता च सर्वधर्मोपपत्त्यधिकरणोक्तदिशोपपादनीया ॥३।२।५॥

ननु किं केवलं पराभिध्यानमेव दुःस्वप्नफलतिरोधायकमिति जिज्ञासायामाह—

## देहयोगाद्वा सोऽपि ॥३।२।६॥

'वा' शब्दः कल्पान्तरद्योतकः । 'देहयोगात्' = देहेन स्थूलदेहमात्रेण देहस्य = स्थूलदेहमात्रस्य वा योगः देहसाध्यः देहसम्बन्धो वोपायः, स च कल्कस्नानरूपः, देहेन सर्वावयवै. योगः कल्कजलस्य सम्बन्धः कल्कस्नानमित्यर्थो वा । तस्मात्, 'सोऽपि'

स एव, दुःस्वप्न एव तिरोहितो भवति। 'वा' शब्दबलेन पूर्वसूत्रात् लिङ्गविपरिणामेन तिरोहितशब्दानुकर्षः। इदमुपलक्षणम्, तेन वाचिकोपायस्य संकथनस्य आन्तरोपायस्य पुनः प्रसुप्ते देवेशेशयफलतिलहोमस्य देहान्तःकरणसाध्यस्य ब्राह्मणपूजनस्यापि संग्रहः। स्मर्यते हि मात्स्ये दुःस्वप्नस्वरूपनिर्देशानन्तरम्,—'एषां सङ्कथनं धन्यं पुनः प्रस्वापनं तथा। कल्कस्नानं तिलैर्होमो ब्राह्मणानाञ्च पूजनम्' इति, धन्यं = धनायहितम्। पूर्वसूत्रे स्त्रीलिङ्गनिर्देशः, सामान्यस्वप्नपुंसकमिति नियमात् दुःस्वप्नफलवत् अशुभान्तरस्यापि तिरोधानसूचनाय, अतएव सप्तशत्याम्, 'दुःस्वप्नश्च नृभिर्दृष्टं सुस्वप्नमुपजायते—इत्यनन्तरं बालग्रहाभिभूतानां बालानां शान्तिकारकम्, सङ्घातभेदे च नृणां मैत्रीकरणमुत्तमम्' इत्यादिकम्, 'न तेषां दुष्कृतं किञ्चिद्दुष्कृतोत्था न चापदः' इत्यादिकञ्चाभिहितम्। अत्र पुंलिङ्गनिर्देशोऽपिशब्दप्रयोगश्च केवलस्य दुःस्वप्नस्याशुभसूचकस्य तिरोधानप्रतिपादनाय। प्रादिसमासनिष्पन्नो दुःस्वप्नशब्दः पुंलिङ्गः। सर्वाशुभनिवारकतयेष्टान्तरसिद्धिहेतुतया च दुःस्वप्नदोषमात्रनिवारककल्कस्नानाद्यपेक्षया पराभिध्यानं श्रेय इत्येतत्सूत्रस्याशयः। तस्मात् स्वप्नस्य सत्यत्वेऽपि तद्दृष्टविशिष्टाकारविषयस्यापारमार्थिकतया तत्सृष्टिरपारमार्थिकीति सिद्धम्॥३।२।६॥

इदानीं सुषुप्त्यवस्थामाह—

( तदभावाधिकरणम्—२ )

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥३।२।७॥**

'तदभाव' स्वप्नाभाव, सुषुप्तिरिति यावत्, 'नाडीषु' हिता

इति ख्याता या नाड्यः पुरीतदिति ख्याता च या नाडी तासु, आत्मनि च प्रासादखट्वाखाट्वान्यायेन भवतीति शेषः। अत्र प्रमाणमाह—'तच्छ्रुतेः'=तस्याः सुषुप्तेः, तत्र हितासु नाडीषु पुरीतति नाड्या आत्मनि च श्रुतेः=श्रवणात्, तथा हि हिता नाडीः प्रकृत्य 'तद् यत्रैतत् सुप्तः समस्तः संप्रसन्नः। स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति' इति ( छा० ८।६।३ ) दार्जलनेये च नाड्युपक्रमे 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इति ( वृ० २।१।१९ ) आत्मनि च 'य एषोऽन्तर्हृदय आकाशस्तस्मिं-ञ्छेते' इति ( बृ० २।१।१७ ) 'सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति' इति च श्रूयते ( छा० ६।८।१ ) एवं विकल्प-समुच्चयसंशये मिथो निरपेक्षश्रुतिबलाद् विकल्पप्राप्तौ वस्तुन स्वरूपे विकल्पस्यानौचित्याद् गौरवाच्च क्रमिकस्थानतया समुच्चयपक्षो युक्त इति तत्रापि क्रमस्यादरणीयतया सुषुप्त्यारम्भो हितासु नाडीषु जीवस्य प्रवेशेन, ततः पुरीतति नाड्या स्थितिः, तत सुषुप्तेः परमं चरमं स्थानञ्च आत्मैवेति फलितार्थः ॥३।२।७॥

आत्मैव परमं चरमञ्च सुषुप्तिस्थानमिति सिद्धान्तं द्रढयन्नाह—

अतः प्रबोधोऽस्मात् ॥३।२।८॥

यतः आत्मैव सुषुप्तेः परमं चरमञ्च स्थानम् 'अत' अस्मात् कारणात्, 'अस्मात्' आत्मनः 'प्रबोधः' जागरणं जीवस्य श्रूयत इति शेषः। तथा हि—'कुत एतदागात्' इति प्रश्ने (बृ० २।१।१६) प्रतिवचनम्—'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मा-

दात्मनः सर्वे प्राणाः' इति ( बृ० २।१।२० ) 'सत आगत्य न विदुः सत आगच्छामहे' इत्यादौ ( छां० ६।१०।२ ) सुषुप्तिस्थानविकल्पे प्रबोधस्थानस्यापि विकल्पोऽभविष्यत्, तस्मात् सुषुप्तिपरमचरमस्थानत्वमात्मन एवेति सिद्धान्तः ॥३।२।८॥

सुषुप्तः सत्सम्पन्नस्ततः प्रबुध्यत इत्ययं सर्वेषामनुभवः। किन्त्वसौ प्रमा न वा ?" न प्रमा, सुषुप्तावुपाधेर्विलयात्, नवोत्थितोपाध्यवच्छिन्नस्य पूर्वतो भेदात्, दर्पणभेदेन प्रतिबिम्बभेदस्य सर्वतः प्रसिद्धेः। इत्येवं प्राप्ते उच्यते—

( कर्मानुस्मृतिशब्दविध्यधिकरणम्—३ )

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥३।२।९॥

'तु' शब्दः पूर्वपक्षव्यावर्त्तकः। यः सुषुप्तः स एव प्रतिबुध्यते न त्वन्यः, तस्मात् सर्वेषामनुभवः प्रमैव। कुतः 'कर्मानुस्मृतिशब्दविधिभ्यः' कर्म च अनुस्मृतिश्च शब्दश्च विधयश्च तेभ्यः। स्वापात्पूर्वमर्द्धकृतस्यान्येनापरिज्ञातस्यापि कर्मणः सुप्तोत्थितेन समापनदर्शनात्, न ह्यन्यकृतस्य कर्मणः परप्रेरणामन्तरेणान्यकर्तृकं समापनं दृश्यते। अनुस्मृतिः=स्वापात्पूर्वमनुभूतस्य 'अनु' पश्चात् स्वापोत्तरं स्मृतिः, न ह्यन्यानुभूतमर्थमन्यः स्मरति। शब्दः=विधिवाक्यातिरिक्ता श्रुतिः 'पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव' ( बृ० ४।३।१६ ) इत्यादिः। नियमेन गतिर्न्यायः, प्रतियोनि यस्य या योनिर्व्याघ्रादिरूपा तत्र सुषुप्तो जीवो बुद्धान्ताय बोधस्वरूपाय जागरणाय स्वानुरूपगतिनियमेन स्वस्वयोनिमाद्रवति आगच्छति, न तु जात्यन्तरमिति

तदर्थं, उपाधिविलयप्रयुक्तो यदि जीवभेदः स्यात्, सुषुप्तो व्याघ्र प्रबुद्धो जात्यन्तरमप्यापद्येत, नचापद्यते इति, श्रुतिश्चाह तत्रोपाधि सौषुप्तिको विलयो न तद्भेदमापादयति, स हि मज्जनोन्मज्जनरीत्यावस्थितः, कुतो नाम जीवभेदः सम्भवेत्? किञ्च कर्मविद्याविधयोऽपि निरर्थकाः स्युः। कर्मणोऽनुष्ठातुः स्वापोत्तरमसत्त्वेन अन्यकृतकर्मफलभोगस्यातिप्रसङ्गादन्यकर्तृकत्वस्यानभ्युपगमेन अग्निहोत्रं जुहोतीत्यादिकर्मविधयो निष्फलत्वमापद्येरन्। एवम् 'आत्मा वा अरे द्रष्टव्य' इत्यादिविद्याविधयोऽपि, विद्यावतः स्वापोत्तरमविद्यापुरुषस्योत्थानात्तस्य मुक्तत्वे विद्याया नैष्फल्यम्, 'तमेव विदित्वातिमृत्युमेति' इति श्रुतिरपि व्याहन्येत। तस्मादुपाधेरत्यन्तलयाभावात्तस्य पुनः प्रत्यापत्त्या तत्प्रतिबिम्बितचैतन्यस्य जीवत्वेनाऽदृष्टेर्यावद्विमोक्षमेक एव जीव इति स्थितम् ॥३।२।९॥

नन्वस्मिन्नवस्थात्रये मूर्छा नान्तर्भावयितुं शक्यते ज्ञानाभावान्निश्वाससञ्चाराभावाच्च, तत्केयमवस्थेति विचार्यते—

( मुग्धाधिकरणम्—४ )

## मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥३।२।१०॥

सुषुप्तेः कश्चिद्स्थानत्रययुक्त तत्र हितासु नाडीषु प्राणसञ्चारनिरोधेन सत्सम्पत्त्यभावेन च—'परिशेषात्' स्थानत्रयस्य द्वयो प्राप्त्यसम्भवेन शिष्यया पुरीतति स्थिते, 'मुग्धे' मूर्च्छाप्राप्ते जीवे, अर्द्धसम्पत्तिः, अर्द्धं सुषुप्तिस्थानानामेकस्मिन् भागे, सम्पत्तिर्भवति, सैव मूर्च्छेति फलितमतस्तस्याः सुषुप्तावेवान्तर्भावः। अयमाशयः,— सुषुप्तौ जीवः प्राणवहा हिता नाडीराश्रित्य पुरीततं प्राप्य तामतिक्र-

म्यात्मना सङ्गच्छते। मूर्च्छायान्तु मुद्गराघातादिना व्याधिविशेषेण वा हिताख्यानां प्राणवहनाडीनां मार्गनिरोधादपथेन पुरीतच्छाखानाडीलक्षणेन पुरीततमाश्रयते, पुरीतदाश्रयणाज् ज्ञानलोपः सुषुप्त्या समानः, नाडीपथनिरोधाच्च श्वासप्रश्वाससञ्चाराभाव इत्येवंरूपायां मूर्च्छायां जीवस्य कृत्स्नसुषुप्तिस्थानप्राप्तिविरहेऽप्यंशतस्तत्स्थानस्थित्या युक्त एव तस्याः सुषुप्तावन्तर्भाव इति यद्वा 'परिशेषात्' एकस्यात्मनः परिशिष्यमाणत्वात्, मूर्च्छायां जीवस्य तत्सम्पत्त्यभावान्न तस्याः पूर्णं सुषुप्तित्वं, ज्ञानाभावाच्च न स्वप्नत्वं जागरत्वं वा, किन्तु सुषुप्तेः 'अर्द्धसम्पत्तिः' स्थानांशस्थितिः, 'मुग्धे' मूर्च्छिते मूर्च्छायां वा भवतीत्यर्थः। 'आशुसञ्चारिणा' वायुना मूर्च्छोपक्रमे हितानाडीरतिक्रम्य पुरीततं नीयमानो जीवो विलुप्तज्ञानो भवति, तत्रत्यवायुमार्गनिरोधान्नावरोहो नचोपाधिमज्जनाय ब्रह्मणि समर्पणमेवमर्द्धसम्पत्तिः। अत एव मूर्च्छायां पूर्णसुषुप्तिवन्न सुखप्रसादादिकं दृश्यत इति भावः ॥३।२।१०॥

जीवस्य स्थानभेदेनावस्थाभेद इव परस्यापि स भवति न वेति विचारार्थमाह—

( उभयलिङ्गाधिकरणम्—५ )

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥३।२।११॥

'स्थानतोऽपि' स्थानभेदेऽपि, 'परस्य' ब्रह्मणः 'न' अवस्थाभेदो न भवति, 'हि' यतः 'सर्वत्र' स्थानभेदबोधिकासु तद्बोधिकासु च श्रुतिषु 'उभयलिङ्गं' परिणाम्यपरिणामिलिङ्गं परमाम्नायते

इति सूत्रार्थः। 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः। योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' इत्युपक्रमाः 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' (बृ०३।७।३,४,२२) इत्यादिगर्भाः स्थानभेदश्रुतयः, तत्र तदन्तर्यामित्वं परिणामित्वलिङ्गमात्मत्वममृतत्वञ्चापरिणामित्वलिङ्गम्, न हि स्थानभेदेऽपि कश्चिदवस्थाभेदोऽन्तर्यामिणः श्रूयते। 'यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्' इत्यादिषु स्थानभेदाबोधिकासु श्रुतिष्वप्युभयलिङ्गमेव तत्; न तु तस्यावस्थाभेदः, तस्माच्चिदचिदुभयात्मकस्य परस्य स्थानभेदकृतोऽवस्थाभेदो नास्तीति पर्य्यवसितार्थः ॥३।२।११॥

अत्राशङ्कागर्भतत्समाधानसूत्रमाह—

## न भेदादितिचेन्न प्रत्येकमतद्वचनात् ॥३।२।१२॥

स्थानभेदेन 'भेदात्' अवस्थाभेदात् स्थानभेदश्रुतिपूभयलिङ्गत्वत्रमुत्तमेवमस्थूलादि (बृ० ३।८।८) श्रुतिषु स्थानभेदकल्पनात्, अवस्थाभेदाभावे, 'न' नायं हेतुर्युक्त इत्याशङ्कार्थः, इति चेत्;— उच्यते तत् 'न' नेयमुक्तिः समीचीना, तत्र हेतुः 'प्रत्येकमतद्वचनात्' स्थानभेदश्रुतिषु श्रुत्यन्तरेषु च 'तस्य' अवस्थाभेदस्य वचनं तद्वचनं अतद्वचनात् तद्वचनस्याभावात्, प्रत्युत स्थानभेदेऽप्य-

भेदस्य वचनात्, 'सः' भेदः, न सः=अभेदः, तस्य वचनादित्यर्थो वा, स्थानभेदश्रुतिषु अवस्थाभेदावचनात्, 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव योऽयमात्मा' (बृ० २।५।१) इत्यादिषु। अस्थूलादि श्रुतिरनूपपादयिष्यते। तस्मान्नास्ति परस्य स्थानभेदादप्यवस्थाभेदः ॥३।२।१२॥

ननु यथा जीवः शरीरितया जागराद्यवस्थात्रयवांस्तथा परस्यापि शरीरं श्रूयते 'यस्य पृथिवी शरीरम्' 'यस्यापः शरीरम्' इत्यादौ, तत् कथं तस्य तदवस्थाराहित्यमित्याशङ्क्याह—

अपि चैवमेके ॥३।२।१३॥

चः हेतौ, अपिः समुच्चये, एके शाखिनः पठन्ति, 'यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः' इत्युपक्रम्य 'एकैकं जालं बहुधा विकुर्वन्नस्मिन् क्षेत्रे संहरत्येष भूयः। भूयः सृष्ट्वा यतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा। यच्च स्वभावं पचति विश्वयोनिः पाच्यांश्च सर्वान् परिणामयेद्यः। सर्वमेतद्विश्वमधितिष्ठत्येको गुणांश्च सर्वान् विनियोजयेद् यः ॥' (श्वेता० ५।३–५) यतः, एकेषां शाखिनामिति मन्त्रवर्णात् सर्वेषामवस्थान्तरदातृत्वमेकस्य परस्योपलभ्यते तस्मात्, तस्यावस्थाभेदो नास्ति, नहि सर्वदाहकोऽभिदह्यत इति भावः ॥३।२।१३॥

ननु मा भूत् परस्य जागराद्यवस्था, जीवस्य जन्ममरणवर्त्तस्यापि देहसम्बन्धतदभावकृतोऽवस्थाभेदस्तु भवतां दुष्परिहर इत्यत आह—

अरूपवदेव हि तत्प्रधानत्वात् ॥३।२।१४॥

भक्तानुग्रहेण स्वेच्छागृहीतरूपं ब्रह्म 'अरूपवत्' नीरूपतुल्यं भवति, कुतः 'तत्प्रधानत्वात्' अरूपप्रधानत्वात्, रूपवत्त्वस्य अनभिव्यक्तरूपचिदचिदुभयात्मकस्य ब्रह्मण इच्छाधीनत्वात्। एतेनैतदुक्तं भवति,—जीवस्य शरीरसम्बन्धतदभावयोस्तस्य प्राधान्यं नास्ति, अदृष्टपारतन्त्र्यात् प्रकृतिपारतन्त्र्याच्च। तथाच जीवस्य वस्त्रादिपरिवर्त्तनमिव परस्योमादिरूपग्रहणं नावस्थान्तरम्॥३।२।१४॥

ननु माभूदवस्थाभेदः, भवतु च भक्तानुग्रहेण उमादिरूपग्रहणं परस्य, यस्य पृथिवी शरीरमित्यादिश्रुतिवाक्यस्य का गतिरित्यत आह—

प्रकाशवच्चावैयर्थ्यात् ॥३।२।१५॥

यथा प्रकाशः सूर्य्याचन्द्रमसोर्वियद्व्याप्यावतिष्ठमानोऽपि गवाक्षमार्गेण पर्य्यङ्कनिपतितः पर्यङ्कशयेन पुरुषेण परिच्छिन्न एवोपलभ्यते सेव्यते च, तथा सर्वव्यापि ब्रह्म पृथिव्यादिषूपासनविशेषाय शरीरत्वेनोपदिश्यते, श्रूयते हि 'द्वे वाव ब्रह्मणो रूपे मूर्त्तं चामूर्त्तञ्च' (बृ०२।३।१) इति स्मर्य्यते च 'आधारभूता जगतस्त्वमेका महीस्वरूपेण यतः स्थितासि। अपां स्वरूपस्थितया त्वयैतदाप्याय्यते कृत्स्नम्' इति। ननु 'यो रेतसि तिष्ठन्' इत्यादौ 'रेतो यस्य शरीरम्' इत्याम्नाने तावतापि नोपपद्यते, रेतोऽवलम्ब्य उपासनाया असम्भवादितिचेन्न पञ्चमाहुत्युपयोगितया तदवच्छेदेन जीवब्रह्मणोरभेदप्रतिपत्त्यर्थत्वेन वैयर्थ्यविरहात्॥३।२।१५॥

प्रकृतं यत् परं तच्चिदचिदात्मकमितिसिद्धान्तमिदानीमाक्षिपति—

आह च तन्मात्रम् ॥३।२।१६॥

चस्त्वर्थः प्राप्तपक्षव्यवच्छेदाय। 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृ० ४।५।१३) इति श्रुतिः परं 'तन्मात्रम्' चिन्मात्रमाह न तु चिदचिदुभयात्मकमिति ॥३।२।१६॥

उत्तरयति—

दर्शयति चाथो अपि स्मर्य्यते ॥३।२।१७॥

'अथो' इति पक्ष व्यावर्त्तयति। परस्य चिदचिदुभयात्मकत्वं 'दर्शयति' श्रुतिरिति शेषः। 'अथात आदेशो नेति नेति' इति (बृ० २।३।६) 'अन्यदेव तद्विदितादथो अविदितादधि' (के० १।३) इति, 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह'(तै०२।४।१) इत्येवमाद्या श्रुतिः। नेतिनेतिद्वयेन न चिन्मात्रं नाप्यचिन्मात्रमिति प्रतिषेधादुभयात्मकत्वम्, 'विदितात्' स्थूलादन्यत् 'अविदितात्' सूक्ष्मात् 'अधि' अधिकम् अतिरिक्तम्—चिदचिदुभयपर्य्याप्तसत्तावति सामानाधिकरण्येन चिन्मात्रांशे विदितादन्यत्वस्य अचिदंशे अविदितादधिकत्वस्य च सत्त्वात्, केवलाचिति स्थूलसूक्ष्मरूपेण स्थितायां कार्य्यकारणयोरनन्यत्वेन विदितान्यत्वस्यासत्त्वादन्यदेव तद्विदितादित्यनेन तद्ग्रहणासम्भवात् चिन्मात्रस्य परमसूक्ष्मस्याविदितादधिकत्वस्यासम्भवाच्च। यतो वाच इति तूभयात्मकत्वे युज्यतेतराम्। स्मर्य्यते च गीतायां—'ज्ञेयं यत्तत् प्रवक्ष्यामि

यज्ज्ञात्वामृतमश्नुते । अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥' ( १३।१२ ) चिन्मात्रस्य ब्रह्मत्वे न सदुच्यत इति विरुध्येत, तस्य परमार्थसत्त्वेनोक्तत्वात् । चिदचिदुभयात्मकत्वे तु अचिदंशे परिणामित्वेनापरिणामिसत्ताविरहात् तदुपपत्ते, विचारितपूर्वमेतत् । न यथा सैन्धवघन इति श्रुतिस्तु चित सर्वगतत्वं प्रतिपादयति, तच्च चिदचिद्ब्रह्मवादेऽप्यविरुद्धम् । तस्माच्चिदचिदात्मकं ब्रह्म न चिन्मात्रमित्युत्तरम् ॥३।२।१७॥

अत्रार्थे श्रौतीं युक्तिमाह—

अत एव चोपमा सूर्यकादिवत् ॥३।२।१८॥

'अत एव' ब्रह्मणश्चिदचिदुभयात्मकत्वादेव, एवकारेण चिन्मात्रत्वं व्यवच्छिन्नम् । सूर्यकादिवत्=जलप्रतिबिम्बितसूर्यादिवदित्येव मोक्षशास्त्रेपूपात्ता जीवस्योपमा सङ्गच्छते, ब्रह्मणश्चिन्मात्रत्वे तूपाधेर्भ्रमकल्पितत्वस्य तन्मतसिद्धतया तत्र प्रतिबिम्बासम्भवात्, नहि भवति तैरभ्युपगते मरीचितोये सूर्यादिप्रतिबिम्बपात । उपमाप्रमाणन्त्वाचार्य्यपादैरुक्तम्—"यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देव क्षेत्रेष्वेवमजोऽयमात्मा' इत्यादिपदाच्चन्द्रमहणाम् । 'एक एव हि भूतात्मा भूते भूते व्यवस्थित । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इति" ॥३।२।१८॥

अत्राक्षिपति—

अम्बुवदग्रहणात्तु न तथात्वम् ॥३।२।१९॥

तुशब्द. प्रागपक्षव्यवच्छेदार्थ । यथा बिम्बात्=सूर्यात्

पृथग्भूतेनाम्बुना विप्रकृष्टस्य रूपवतः सूर्य्यस्य प्रतिबिम्बं गृह्यते, बुद्धिरूपेणोपाधिना परस्य प्रतिबिम्बं तथा ग्रहीतुं न शक्यते, ब्रह्मणश्चिद्‌चिदात्मकत्वेनोपाधेस्तत्र पृथग्भावाभावात् सर्वगतस्य ब्रह्मणो विप्रकृष्टत्वाभावाद्रूपवत्त्वाभावाच्चेति भावः ॥३।२।१९॥

परिहरति—

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ३।२।२०।

यथा 'अन्तर्भावात्' जलान्तर्भावात् प्रतिबिम्बरूपेण जलमध्यस्थितत्वात् सूर्यादेः 'वृद्धिह्रासभाक्त्वम्' न त्वेकस्य बिम्बभूतसूर्य्यस्य तत्सम्बन्धः, तथैकस्य ब्रह्मणोऽपि बुद्धिरूपोपाध्यन्तर्भावाद् वृद्धिह्रासभाक्त्वम्, 'एवम्' इत्यंशे 'उभयसामञ्जस्यात्'—उपमानोपमेययोः सामञ्जस्यात्, तद् युक्तं भवति। न तु पृथग्भावाद्यंशे। उपमाया भेदगर्भतया सर्वधर्म्मैक्ये उपमानोपमेयभाव एव न स्यात्। वृद्धिह्रासौ सूर्योपक्षे, जलवृद्धौ प्रतिबिम्बे, वृद्धिः=संख्याधिक्यम्, जलह्रासे सख्याह्रासः, आकारस्य वृद्धिस्तद्ध्रासश्च। वृद्धिह्रासशब्दस्खलनमालिन्याद्युपलक्षकः। ब्रह्मपक्षे प्रतिबिम्बे जीवे वृद्धिह्रासपदार्थभूता संख्याधिक्यं पुण्यपापे सुखदुःखादयश्च भवन्ति। बिम्बस्थानीये ब्रह्मणि तु नास्ति वृद्धिह्रासयोः सम्बन्ध इति तात्पर्य्यम् ॥३।२।२०॥

ब्रह्मणः प्रतिबिम्बमुपाधौ न घटत इति यदुक्तं तत्समाधीयते—

दर्शनाच्च ।३।२।२१।

अविप्रकृष्टस्यारूपस्यापि शब्दस्य यत् प्रतिध्वनिरूपं प्रतिबिम्बं

तस्य कारणरूपत्वेनापृथग्भूते गगने दर्शनात् श्रावणप्रत्ययात्, अविप्रकृष्टस्यारूपस्य ब्रह्मणोऽपृथग्भूतेऽप्युपाधौ प्रतिबिम्बं न विरुध्यते। इममर्थं देहाद्युपाधेरूपेण श्रुतिरपि दर्शयति, 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' (बृ० २।५।१८) इत्यादौ। तस्मादिदविदात्मकं ब्रह्म जीवश्च तत्प्रतिबिम्बभूत इति सिद्धम्। समुच्चयाय प्रयुक्तश्चकारोऽधिकरणसमाप्तिद्योतकः ॥३।२।२१॥

नेति नेतीत्यनेन चिन्मात्रस्यस्याचिन्मात्रस्य च प्रतिषेधः कथं नाम निश्चीयत इति जिज्ञासयाधिकरणान्तरमाह—

( प्रकृतैतावत्त्वाधिकरणम्—६ )

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ।३।२।२२।

प्रकृतयोः मूर्तत्वामूर्तत्वाविना प्रकान्तयोः यदेतावत्त्वम् = संख्याविशेषः, तद् 'हि' एव 'प्रतिषेधति' निराकरोति, नेतिद्वयेन श्रुतिरिति शेषः। न तु प्रक्रान्तम् एतावत्त्वं प्रतिषेधति, तथात्वे ब्रह्मणः प्रतिषेधः स्यात्। नन्वनयोः को विशेष इतिचेच्छ्रूयताम्, इतिशब्दस्य प्रकान्तप्रकारवचनतया प्रथमेन इति शब्देन मूर्तत्वादिप्रकारेणाचितः संग्रहात्तस्य च प्रथमेन नञा प्रतिषेधः, द्वितीयेनेतिशब्देन प्रथमपरिशेषाद्विपुरुषो गृहीतः, तच्च चिन्मात्रं, 'तस्य रूपम्' (बृ० २।३।६) इत्यनेन च षष्ठ्या भेदनिर्देशाद् द्वितीयेन नञा तस्य प्रतिषेधः, एवमेकत्वद्वयं प्रकृतयोः संख्याविशेषः, ब्रह्मणि

तस्य प्रतिषेधात्, न चिदचिदुभयात्मकब्रह्मणः प्रतिषेधः, उभयात्मकं हि ब्रह्म न चिन्मात्रं नाप्यचिन्मात्रमिति भावः, ननु भूतपञ्चकमात्रस्य मूर्त्तत्वामूर्त्तत्वादिना ग्रहणात् कथं मूलभूताचितस्तेन प्रकारेण ग्रहणमितिचेदकिञ्चित्करमेतत्, पुरुषमिश्रत्वेन भूतसाधारणजडत्वेन च तत्सङ्ग्रहात्। प्रकृतमेतावत्त्वन्तु द्विरूपसंख्या द्वैराश्यपर्यवसिता, तन्निषेधे ब्रह्मणः प्रतिषेधः प्रसज्येत। इत्येवं स्थिते 'ततः' तदनन्तरं 'न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' ( बृ० २।३।६ ) इति श्रुतिः 'भूयः' पुनरपि ब्रह्म ब्रवीति=प्रतिपादयति, द्वैराश्यप्रतिषेधे तन्नोपपद्येत, तदतिरिक्तस्य ब्रह्मणः प्रकारान्तराभावात्। अथोच्येत ब्रह्मणो द्वैरूप्यमिदं मायिकं नेति नेतीति वीप्सया तद्व्यावृत्तत्वेन निर्विशेषब्रह्मणस्तत्र प्रतिपादनमिति तर्हि—प्राणा वै सत्यमित्येतन्नोपपद्येत, मायिकस्य सत्यत्वाभावात्, उभयात्मकब्रह्मणः 'सत्यस्य सत्यम्' इति नामधेयञ्च प्राणानां परिणामिसत्तायोभयात्मकब्रह्मणश्चापरिणामिसत्तयेति प्रकर्षादिति भावः ॥३।२।२२॥

अथ यदि सत्यस्य सत्यं तत्कथं न गृह्यत इत्यत्राह—

तदव्यक्तमाह हि ।३।२।२३।

'तत्' सत्यस्य सत्यं ब्रह्म 'अव्यक्तं' परमसूक्ष्मम्, अत एव इन्द्रियाद्यग्राह्यम्, इममर्थम् 'आह हि' श्रुतिरिति शेषः, 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्म्मणा वा' ( मु० ३।१।८ ) इति, 'स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यते' ( बृ० ३।९।२६ )

इत्यादिका, स्मृतिरपि 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' ( गी० २।२५ ) इत्याद्या ॥८।२।२३॥

वस्तुतो न गृह्यत इति सामान्येन, विशेषे तु गृह्यत इत्याह—

**अपि च संराधने प्रत्यक्षानुमानाभ्याम् ।३।२।२४।**

'अपि च' किन्तु 'संराधने' राधनस्य=उपासनायाः सम्यक्त्वे सिद्धौ, पश्यन्ति साधका इति शेषः । तत्र प्रमाणमाह—'प्रत्यक्षानुमानाभ्याम्' प्रत्यक्षं=श्रुतिः 'पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ।' ( क० ४।१ ) इति, 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ।' इति च,' स्मृतिश्च 'यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ।' इति, 'एवं समाराधयतोस्त्रिभिर्वर्षैर्धृतात्मनोः । परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चण्डिका' इत्याद्या ( ३।२।८४ ) ।

ननु दर्शनादर्शनाभ्यां द्रष्टृदृश्यभावादिना च जीवब्रह्मणोर्भेदे जीवस्य ब्रह्माभेदसिद्धान्तक्षतिरित्याशङ्क्याह—

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥३।२।२५॥**

प्रकाशः=सूर्यस्योदयः, आदिपदादस्तमयप्रतिबिम्बपरिग्रहः । यद्वा प्रकाशः=आतपः, आदिपदान्मेघावरणप्रतिबिम्बादिपरिग्रहः । उदयास्तमयसातपत्वमेघावृतत्वप्रतिबिम्बपातैः सूर्यस्य यथा 'अवैशेष्यम्' वैशेष्यस्य=विशिष्टत्वस्य वैलक्षण्यस्याभावस्तथा ब्रह्म-

णोऽपि प्रकाशाप्रकाशप्रतिबिम्बैरपि वैशेष्याभावः। अयं भावः—ये तावद् भ्रान्ता दृश्यत्वमदृश्यत्वञ्च वस्तूनां स्वाभाविको धर्म्म इत्याचक्षते,प्रतिबिम्बश्चबिम्बवस्तुनः पृथग्भूतं,तेषामयमाक्षेपोऽपरिहार्य्यो भवतु न पुनरस्माकम्, वयन्तु दृश्यत्वादिकं न वस्तुधर्म्मं वदामः, अतएव वस्तुधर्म्मत्वेऽपि नासौ दृश्यत्वस्वरूपः, सूर्य्यासम्बद्धस्य मेघावरणादेर्न च तद्धर्म्मत्वमाचक्ष्महे, न वा प्रतिबिम्बस्य बिम्बादन्यत्वम्, तत्कथमाशङ्कासौ युज्यते ?

ननु माभूद् दृश्यत्वं वस्तुनः स्वाभाविको धर्म्मः, किन्तु कारणाधीनम्, तथा च सूर्योदये यथा सर्वे एव तं पश्यन्ति ब्रह्मणः केनचिद्दर्शने सर्वे एव तत् पश्येयुरित्याशङ्कायामाह—'प्रकाशश्च कर्म्मण्यभ्यासात्' कर्म्मणि=दर्शनसाधने कर्म्मणि, अभ्यासात्=पौनःपुन्येन निरन्तराचरणात्, ब्रह्मणः प्रकाशो नाम दर्शनं तेषाजायते, न तु कर्म्माभ्यासरहितानाम्। सूर्य्यप्रकाशं यथान्धा न पश्यन्ति, न वा विपरीतदिक्प्रहितदृष्टयो व्यासक्तमनसो वा, तथा ब्रह्माकृतकर्म्माभ्यासा न पश्यन्ति। बिम्बप्रतिबिम्बयोः स्थानादिभेदेन यद्भेदग्रहणं तदपि स्वाभाविकत्वौपाधिकत्वतत्त्वबोधरहितानाम्, तत्त्वपरिज्ञाने तु द्रष्टृदृश्यभावोऽपि विलयमाप्नोत्येव। कर्म्मण्यभ्यासादित्यत्र कर्म्मपदं दुर्गादिसाकारब्रह्मसाधनपरं निराकारे श्रवणादिसाधनपरञ्चाधिकारिभेदाद् गुरूपदेशेन कर्मविशेषोऽभ्यसनीय इति निगूढम् ॥ ३।२।२५ ॥

ननु सूत्र एव भेददर्शनादिना जीवब्रह्मणोः पार्थक्यमुपदर्शितं, तेन तद्भेदसिद्धान्तो न शोभ इत्याशङ्कायामाह—

## अतोऽनन्तेन तथा हि लिङ्गम् ३।२।२६

'अतः' जीवब्रह्मणोर्भेदस्यौपाधिकत्वात्, 'अनन्तेन' अनन्तं परं ब्रह्म तेनाभिन्नो जीव इति स्वाभाविकम्। 'तथा हि लिङ्गम्' तत्प्रकारेण प्रसिद्धम् अवधारितं वा ज्ञापकमस्ति। श्रूयते हि— 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' इति, क्लृप्तिः=सामर्थ्यं, आनन्त्यं =ब्रह्मभावः, तस्मै सामर्थ्यं, तत्स्वाभाव्यम्। औपाधिकधर्मोऽणुत्वं, तत्सामर्थ्यं न जीवस्य, अपि तूपाधेः। अत एव विज्ञेयत्वोक्तिः, विपरीतज्ञानेन विषयीकरणात्। 'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव स भवति।' (मु० ३।८।९) 'ब्रह्मैव सन् ब्रह्माप्येति' (मु० ४।४।६) इति च। जीवस्य भेद औपाधिकतया व्यावहारिकः, पारमार्थिकस्त्वभेद एव। उक्तमपीदं पुनरुक्तं प्रसङ्गोत्थापितजिज्ञासानिवृत्तये शिष्यसंस्कारदार्ढ्यार्थञ्चेति ध्येयम्॥३।२।२६॥

अत्र मतान्तरमाह—

## उभयव्यपदेशात्त्वहिकुण्डलवत् ३।२।२७

'तु' शब्दः पक्षान्तरद्योतकः। अहिः तत्कुण्डलञ्च यथा भिन्नम् अवस्थावतिष्ठमानभावात्, अभिन्नञ्च तयोराश्रयाश्रयित्वेन, अहेः कुण्डलीभावस्याहिवर्जमन्यत्रासत्त्वात्। तथा ब्रह्मजीवयोरपि जीवत्वं ब्रह्मणोऽवस्थाभेदः, कुत एतत्परिज्ञायते ? 'उभयव्यपदेशात्' क्रियाविशेषकर्तृकर्म्मतया कचिद् भेदेन कचिद्-

भेदेन व्यपदिश्यते यतः, श्रुतिषु भेदव्यपदेशो यथा—'ततस्तु तं पश्यते ध्यायमानः' ( मु० ३।१।८ ) इति, 'परात्परं पुरुषमुपैति दिव्यम्' ( मु० ३।२।८ ) इति, 'यः सर्वाणि भूतान्यन्तरो यमयति' इति च। अभेदव्यपदेशो यथा—'तत्त्वमसि' इति, ( छा० ६।८।७ ) 'अहं ब्रह्मास्मि' ( बृ० १।४।१० ) इति, 'आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनु संज्वरेत्' ( बृ० ४।४।१२ ) इति च। स्वतः प्रमाणे श्रुतावेकतरपक्षपातेन समाधानमयुक्तम्, पारमार्थिकव्यावहारिककल्पनैकतरपक्षपात एव, तस्मादवस्थाविशेषपक्षो ग्राह्यः ॥३।२।२७॥

भेदाभेदयोः समाधानान्तरमाह—

## प्रकाशाश्रयवद् वा तेजस्त्वात् ३।२।२८

'वा' यद्वा प्रकाशाश्रयवदेतद् बोध्यम्। यथा प्रकाशः सौरस्तदाश्रयश्च सूर्य्यः, उभयोरपि तेजस्त्वादत्यन्तभेदविरहेऽपि भेदप्रत्ययस्तास्त्विको भवति, तथा जीवब्रह्मणोरपीति मन्तव्यम् ॥३।२।२८॥

## पूर्ववद्वा ॥३।२।२९॥

मतद्वये स्वीयासम्मतिसूचनाय तत्पक्षद्वयव्यावर्त्तको वाकारः। तदा च 'पूर्ववत्' प्रथमोक्तवत्=प्रकाशादिवत्, अवैशेष्यमिति। भ्रमकृतो भेदप्रत्ययो विद्यया भ्रमनिरासे भेदप्रत्ययापगमान्मोक्ष इत्युपपद्यते। अवस्थाधर्मयोर्वास्तवतया विद्यया

तन्नाशासम्भवेनानिर्मोक्षः प्रसज्येत । 'तमेव विदित्वा' इति श्रुतिश्च व्याकुप्येत । चिदचिदुभयात्मकब्रह्मवादे जीवोपाधे-रनवरतेऽप्युपाहितस्य प्रतिबिम्बतयालीकत्वेन, बिम्बसाक्षात्कारे तस्यापरिच्छिन्नत्वनिश्चयेन प्रतिबिम्बपरिच्छिन्नत्वबोधप्रयुक्तसंसा-रस्यापगमादुपपद्यत एव मोक्षः । इति स्वमतपरिशुद्धये मतान्त-रदोषोपन्यास इति ध्येयम् ॥३।२।२९॥

सिद्धान्तोऽयं प्रकारान्तरेण समर्थ्यते—

## प्रतिषेधाच्च ३।२।३०

सिद्धान्तः त्वेष एव, यतः परस्मादात्मनोऽन्यं चेतनं प्रतिषेधति श्रुतिः, 'नान्योऽतोऽस्ति द्रष्टा' इत्येवमादिना जीवे ब्रह्मणः कथञ्चिद्भेदाभ्युपगमे तु 'नान्योऽतोऽस्ति द्रष्टा' इति प्रतिषेधो नोपपद्यते । तस्मात् प्रकाशादिवदिति' प्रथमोक्तरीतिरेव श्रुति-विरोधपरीहारायादरणीया ॥३।२।३०॥

प्रसङ्गेन ब्रह्मापेक्षयान्यस्य परत्वमाशङ्क्यते—

( पराधिकरणम्—७ )

## परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ३।२।३१

'अतः' अस्मात् परत्वेन प्रकृताया देवात्मशक्तेः=चिदचिदा-त्मकब्रह्मणः 'परम्' अतिरिक्तं किञ्चिद् वर्त्तते, कुतः 'सेतून्मान-सम्बन्धभेदव्यपदेशेभ्यः' सेतुश्च उन्मानञ्च तयोः सम्बन्धाः सेतू-न्मानसम्बन्धास्ते च भेदौ च व्यपदेशाश्च तेभ्यः, सेतुसम्बन्धः,

सेतुशब्दप्रतिपाद्यत्वम् 'अथ य आत्मा स सेतुर्विधृतिः' (छा० ८।४।१) इति, सेतुना तरणक्रियासम्बन्धश्च 'सेतुं तीर्त्वा' (छा० ८।४।२) इति श्रुत्या प्रतीयते, यो हि सेतुस्तेन नद्यादिकं तीर्त्वा अन्यं कञ्चिद्देशं प्राप्नोतीति प्रसिद्धं लोके, ब्रह्मणि सेतुशब्दप्रयोगेण तत्तरणप्रतिपादनात् ततः परं किञ्चिदस्तीत्युपलभ्यते। उन्मानम्=चतुष्पात्त्वं षोडशकलत्वञ्च उत्कृष्टे मानं ब्रह्मणि सम्बध्यते,—तथाहि, 'प्राची दिक् कला, प्रतीची दिक् कला, दक्षिणा दिक् कलोदीची दिक् कलैष वै सोऽयं चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम' (छा० ४।५।२) इत्यादिना 'षोडशकलं चतुष्पाद् ब्रह्म भावितम्।' ब्रह्मणोऽयमुन्मानसम्बन्धस्तस्य परिच्छिन्नतामवगमयति, तस्य परिच्छिन्नत्वेऽन्यत्परिच्छिन्नमपरिच्छिन्नं वाऽतिरिक्तं किञ्चिद्भवितुमर्हति, घटावच्छिन्नत्वे पटादेराकाशस्य च प्रतीतेः, भेदौ=भेदद्वयं तत्रैको भेदसम्बन्धः, सम्बन्धद्वाभ्यां भेद इति फलितम्, 'सता सोम्य तदा सम्पन्नो भवति' (छा० ६।८।१) इति 'प्राज्ञेनात्मना सम्परिष्वक्तः' (बृ० ४।३।२१) इति च श्रुतौ परेण जीवस्य भेदसम्बन्धो दृश्यते स च तयोर्मिथो नरतल्पयोरिव दम्पत्योरिव वा प्रसिद्धः, भवति च ताभ्यामन्यन्निमित्तममितं वा किञ्चित्। द्वितीयः साक्षादेव, चिद्चिदुभयपर्याप्तसत्तावत्तया प्रतिपादितस्य ब्रह्मणो घटे घटपटोभयभेदस्येव 'चिन्मात्रे भेदसत्त्वात् महतः परं ध्रुवमिति श्रुत्या, अज आत्मा महान् ध्रुव इति श्रुत्युक्तमहच्छब्दप्रतिपाद्याद् ब्रह्मणः परमन्यत्प्रतिपाद्यते, तस्माद् ब्रह्मणः परं किञ्चित्तत्त्वमस्ति,

नचेष्टापत्तिः, तदनन्यत्वमित्यभ्युपगमविरोधात् प्रतिज्ञादृष्टान्तो-परोधाच्च ॥३।२।३१॥

एवं प्राप्तेऽभिधीयते—

## सामान्यात्तु ३।२।३२

'तु' शब्दः पक्षव्यावर्तकः। 'सामान्यात्'—साम्यात्। चिदचिदुभयपर्याप्तसत्तया सर्वेषां साम्यात्परं किमपि नास्ती-त्यर्थः। अयमाशयः—निरुक्तोभयपर्याप्तसत्ताया यदधिकरणं तत्प्रत्येकघटितभेदकूटस्य क्वचिदप्यसत्त्वेन न परत्वं कस्यापि सम्भवति। तादृशसत्तानिष्ठपर्याप्तिसम्बन्धावच्छिन्नावच्छेदकताक-प्रतियोगिताकभेदः, तदनन्यत्वसिद्धान्तविषये न गृह्यते, किन्तु सत्सत्तावद् यद् द्वितयं चिच्च अचिच्च तत्प्रत्येकभेदकूटः, चिद्भेदस्या-चिति सत्त्वेऽपि अचिद्भेदस्य तत्रासत्त्वान्न प्रत्येकभेदकूटवत्त्वमेवं चिति सत्यप्यचिद्भेदे, स्वस्मात्रास्त्येव भद इति निरुक्तसत्तया सामान्यात्परस्यासिद्ध्या साध्यासिद्धिरिति सर्वहेतुसाधारणो दोषः ॥३।२।३२॥

साध्याद्धेतुदोषं क्रमेण दर्शयति—

## बुद्ध्यर्थः पादवत् ३।२।३३

'बुद्ध्यर्थः' तटस्थलक्षणरीत्या ब्रह्मज्ञानार्थः सेतून्मानसम्बन्धः, सम्बन्धानां व्यक्तिभेदेऽप्यनुगतं सम्बन्धत्वमादायात्रैकवचन-प्रयोगः। पूर्वपक्षसूत्रभाष्ये बहुवचनप्रयोगः सम्बन्धानां मिथो-भेदव्युत्पादनाय। तत्र दृष्टान्तमाह—'पादवत्' यथा 'पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि' इत्यस्यामृचि पादशब्दो-

वच्छिन्नपरिमाणतया बोधितस्यापि ब्रह्मणोऽवबोधाय, किमपि भूतादिक्रमवलम्ब्य तदुपासनार्थः, तथा सेतुसम्बन्धस्तदर्थ एव. अत्युत्तमाधिकारिणमन्तरेण निर्विशेषब्रह्मप्रतिपत्तिहेतुयोगा-नुष्ठानासम्भवात् गुणविशेषं वा स्थूलसूक्ष्मरूपविशेषं वा-वलम्ब्योपासनार्थोऽयं सेतुशब्दप्रयोगः, तरणकर्मतया तन्निर्देशः पादादिनिर्देशश्च । संसारसागरसेतुरियं परमा विद्येति सविशेषरूपां तामुपास्ते, ततस्तामुत्तीर्य निर्विशेषं ब्रह्म प्रतिपद्यते । न पुनरन्यत्किञ्चित् । तस्मात् सेतून्मानसम्बन्धात्मका हेतवो न ब्रह्मणः परं साधयितुं प्रभवन्ति, मृद्दार्वादिमयवास्तवसेतुवस्य परिच्छिन्नांशरूपवास्तवपादस्य च ब्रह्मण्यसत्वादित्यर्थः ॥३।२।३३॥

द्विविधभेदरूपहेतुं निरस्यति—

## स्थानविशेषात् प्रकाशादिवत् ॥३।२।३४॥

बुद्ध्यादिस्थानविशेषयोगादवभासमानस्य प्रतिबिम्बचैतन्यस्य तत्स्थानतिरोधाने य उपशमः स एव सत्सम्पत्तिरूपः सम्बन्धः, न तु संयोगविशेषः, येन परिच्छिन्नयोरेव सोऽभ्युपेयः स्यात् । अत्र दृष्टान्तमाह-'प्रकाशादिवत्'प्रकाश' आतपः, आतपो यथा सरन्ध्रकाष्ठफलकादितिरोधाने रन्ध्रमार्गेण भूमौ पतितो रन्ध्रवद् वृत्ताद्याकारतां प्रतिपद्यते, काष्ठफलकाद्यपगमे चानावृतातप एवोपशाम्यति, तथा सुषुप्तौ जीवस्य ब्रह्मसम्बन्धो वेदितव्यः । आदिपदादाकाशस्य परिग्रहः । घटाकाशस्य घटापनयने महाकाश-सम्पत्तिश्चासौ सम्बन्धः । स्थानमुपाधिः ॥३।२।३४॥

द्वितीयभेदव्यपदेशयोरुत्तरमाह—

## उपपत्तेश्च ॥३।२।३५॥

चः समुच्चये, पराक्षेपदूषणहेतुसमाप्तिद्योतकश्च। 'उपपत्तेः' युक्तेः, निरासयुक्तेरित्यर्थः। तत्र 'सामान्यात्तु' (३।२।३२) इतिसूत्रे द्वितीयभेदनिरासाय योपपत्तिर्दर्शिता सैवात्रानुसर्तव्या। व्यपदेशो नाम परत्वबोधिका साक्षाच्छ्रुतिः 'महतः परम्' इति, तत्रोपपत्तिश्च महतः 'परमव्यक्तमव्यक्तात्पुरुषः परः' इति श्रुत्यनुसारिणी ग्राह्या। तथाहि महतः परमिति महच्छब्दो नात्मपरः, किन्तु बुद्धिपरः। तत्र बुद्धेः परत्वमव्यक्ते यथाश्रुतं, महतः परं ब्रह्मेत्यत्रापि तथैव युक्तं, नत्वात्मनः परत्वम्। तस्मादेतेन लिङ्गेन ब्रह्मापेक्षया परत्व न साधयितुं शक्यते। विचारितपूर्वश्चायमर्थः।

यदि च परमत इति सूत्रे परशब्दः श्रेष्ठवचनः, तस्य तु प्रागेव निरासः, अन्यत्वविरहे तत्सापेक्षश्रेष्ठत्वस्यासम्भवात् ॥३।२।३५॥

एवं सेत्वादिव्यपदेशान्तान् परपक्षहेतूनाभासीकृत्य स्वपक्षं प्रसाधयति—

## तथान्यप्रतिषेधात् ॥३।२।३६॥

'अन्यप्रतिषेधात्' ब्रह्मव्यतिरिक्तप्रतिषेधात्, तत्प्रतिषेधश्रुतेः, 'तथा' ब्रह्मणः परं नास्तीति सिद्धान्तः, तथाहि 'महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित्' इति (क० ३ वल्ली १०–११) 'सर्वं तं परादाद् योऽन्यत्रात्मनः सर्वं वेद' (बृ० २।४।६)

'ब्रह्मैवेदं सर्वम्' 'आत्मैवेदं सर्वम्' ( छा० ७।२५।२ ) 'नेह नानास्ति किञ्चन' (बृ० ४।४।१९) इत्येवं प्रकाराणि मन्त्रवर्णश्रुतिवाक्यानि पवाना मुख्यया वृत्त्या ब्रह्मव्यतिरिक्त वस्त्वन्तरं प्रतिषेधन्ति । सर्वान्तरश्रुतेश्च न परमात्मनोऽन्योऽन्तरात्मास्तीत्यवधार्य्यत इत्याचार्य्यो. ॥३।२।३६॥

उपसंहरति—

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥३।२।३७॥

'आयामशब्दादिभ्य.' आयामशब्दो व्यापकत्वबोधकश्रुति', आदिशब्दात् स्मृतिन्यायपरिग्रह., तेभ्यः तल्लिङ्गक 'सर्वगतत्वम्' 'अनेन' सामान्यात्विरत्यादिना प्रतिषेधादित्यन्तेन सूत्रजातेन व्याख्यातमिति शेष. । न तु वैशेषिकसम्मतं सर्वमूर्त्तसंयोगित्व-लक्षणं सर्वगतत्वम्, न चैवम् 'आकाशवत् सर्वगतश्च नित्य.' इति श्रौतमुपमानं विरुध्येत। सर्वगतत्वस्य सर्वमूर्तसंयोगित्व-लक्षणत्वे तु तदुपमानं सङ्गच्छत इति वाच्यम् । एतत्सिद्धान्ते आकाशस्य वाय्वादिभूतान्तरोपादानकारणतया तद्द्वारासर्व-वस्तुगतत्वेनापेक्षिकनित्यत्वेन च तात्कालिकप्रतीत्यनुगत्याकाशस्योपमान-त्वात्। आयामशब्दः = 'आकाशवत्सर्वगतश्च नित्य.' इति 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' ( छा० ८।१।३ ) इतिचैवजातीया श्रुतिः, 'नित्यः सर्वगतः स्थाणुः' इत्यादिका स्मृति, यत् सर्वोपादानं, तत् सर्वगतं, यन्नैवं तन्नैवं यथा घटादीति च न्याय. । एव हि सर्वगतत्वपरान्यत्वाभावप्रतिपादकेन सूत्रजातेन

यथा नैयायिकैरभ्युपगम्यते तथा जैमिनीयैरपि यागरूपधर्मस्य तदपूर्वद्वारैव निष्पादकत्वं कल्प्यत इतीयमुपपत्तिर्जागर्त्ति। तथा च स्वर्गकामो यजेतेत्यादिश्रुतिः, अपूर्वकल्पनारूपोपपत्तिश्च धर्मस्य फलनिष्पादकत्वे हेतुर्न तु परमेश्वरः फलनिष्पादक इति जैमिनिमतम्, अत्र च मते देवात्मशक्तिरूपपरमेश्वरानभ्युपगमेन धर्म्मजन्यापूर्वस्य न तत्कृपारूपत्वं कथमपि सम्भवतीति बोध्यम्॥३।२।४०॥

एवं मतद्वैधे स्वसिद्धान्तं स्वनाम्नैवाह श्रद्धासम्पन्नाये बुभुत्सूनाम्—

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥३।२।४१॥

ब्रह्मसूत्रोपदेशकः स्वयमाचार्य्यो बादरायणस्तु, तुशब्दः पक्षव्यावर्तकः,'पूर्वं' परमेश्वरस्य फलदातृत्वपक्षं मन्यत इति शेषः। अत्र हेतुः—'हेतुव्यपदेशात्' यो धर्म्मो हेतुत्वेन जैमिनिनोच्यते तस्यापि हेतुत्वं परमेश्वरस्य, 'व्यपदेशात्'—'एष ह्येव साधुकर्म्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष ह्येवासाधुकर्म्म कारयति तं यमधो निनीषते' इति श्रुतेः। स्मर्यते च—'धर्म्याणि देवि सकलानि सदैव कर्म्माण्यत्यादृत प्रतिदिनं सुकृती करोति। स्वर्गं प्रयाति च ततो भवतीप्रसादाल्लोकत्रयेऽपि फलदा ननु देवि तेन।" इति ( देवी मा० ४।१२ ) 'यो यो यां यां तनुं भक्त श्रद्धयार्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्। स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान् मयैव विहितान् हितान्' ( गी० ७।२१ ) इति च।

अत्रेदमवधेयम्—चिदचिद्ब्रह्मवादे उन्नीयाधोनिनीषा चेच्छाविशेषौ, कारयितृत्वञ्च प्रयत्नविशेषः, ते चाचिदंशस्य परिणामविशेषाः—प्रतिबिम्बोपाधिप्रकर्षापकर्षनियताश्चामी, तत्तदवच्छेदेन परमेश्वरस्येच्छाप्रयत्नभेदेऽपि सादिसृष्टिवादे यथा न वैषम्यनैर्घृण्ये तथोपपादितं प्राक् तदधिकरणे सर्वधर्म्मोपपत्त्यधिकरणे च। अनादिसृष्टिवादिनां प्राचां मते तु—प्राक्तनकर्म्मसापेक्षस्यैव परमेश्वरस्य फलदातृत्वं न तु कदाचिदपि तन्निरपेक्षस्य, अत एवोक्तमाचार्य्यपादैरेतत्सूत्रभाष्ये "सर्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते। तदेव चेश्वरस्य फलहेतुत्वं यत् स्वकर्म्मानुरूपाः प्रजाः सृजति, विचित्रकार्य्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते" इति। एतेनैव फलदातृत्वमीश्वरस्यबोध्यम् ॥३।२।४१॥

इति ब्रह्मसूत्रशक्तिभाष्ये पुरुषार्थसाधनोपदेशाख्ये तृतीयेऽध्याये जीवेश्वरस्वरूपकथनं नाम द्वितीयः पादः।

अत्राशङ्क्य समाधत्ते—

## भेदादितिचेन्नैकस्यामपि ॥३।३।२॥

'न' पञ्चाग्निविद्याया सर्ववेदान्तप्रत्ययत्वमुक्तम् तन्नोपपद्यते, कुतः ? भेदात्, चोदनाया फलसम्बन्धस्य रूपस्य आख्यायाश्च भेदात्, ननु कथमेवम् ? इतिचेदुच्यते—चोदना हि न पुरुषप्रयत्न, किं तर्हि ? विधिवाक्य तदाक्षेपिका श्रुतिर्वा, पञ्चाग्निविद्याया छन्दोगे 'तद् य इत्थं विदु' इत्युपक्रमोऽर्थवाद, काण्वैश्च 'ते य एवमेतद् विदु' इत्युपक्रमश्चाम्नायते, आनुपूर्वीभेदात् प्राप्त एव चोदनाभेद, फलसम्बन्धभेदश्च, छन्दोगै देवयानगतिवत् स्तेनो हिरण्यस्येत्युपक्रम्य 'अथ ह य एतान् पञ्चाग्नीन् वेद न स ह तैरप्याचरन् पाप्मना लिप्यते' इत्यधिक फलमुच्यते, न पुन काण्वै, रूपभेदश्च—कर्मणि यथा द्रव्यदेवते रूप, विद्याया तथा वेद्य रूप, छन्दोगैर्द्युलोकादियोषान्ता पञ्चैवाग्नयो वेद्यत्वेन, काण्वैश्च 'तस्याग्निरेवाग्निर्भवति' (बृ० ६।२।१४) इत्यादिना षष्ठोऽप्यग्निस्तथाख्यायते। आख्याभेदश्च कौथुमत्वादिना काण्वत्वादिना च शाखा-नामभेदप्रयुक्त। पुनर्वचनादयो भेदहेतवोऽप्युन्नेया। एकस्या शाखाया यदुक्त शाखान्तरे तस्यैव कथना पुनर्वचनम्, प्रामाण्यविघातकमिद न श्रुतौ युज्यते। विद्याभेदे तु न्याय दोष, उक्तस्य पुन कथनाभावात्। इत्येव भेदाच्छन्दोगकाण्वपञ्चाग्निविद्ययोर्नैकत्वमपि तु भेद एव, आशङ्कितमिदमिति चेदित्यनेनानूद्य परिहरति 'न' एकत्वप्रतिषेधो न युक्त। यत 'एकस्याम्' एकत्वेन सिद्धान्तितायामग्निहोत्रादिक्रियायामप्येव रीत्या वर्त्तते

चोदनासंयोगरूपनामभेदः,तथाहिअग्निहोत्रं जुहोतीति विभिन्नशाखीय-विधिः, न चैकशाखानुपूर्वीव्यक्तीनामन्यत्र सत्तासम्भवः, तस्मा-च्चोदनाभेदः ; अनुष्ठानान्तरे धर्म्मव्यक्तिभेदः सिद्ध एवेतिफल-सम्बन्धभेदः, एवस्यामग्नीषोमीयमेकादश कपालमन्यस्यां शाखायां द्वादशकपालमिति द्रव्यभेदेन रूपभेदः ; नामभेदः काठककाण्वादि-रूपो वर्त्तते ; एवं च यथा तत्र परिहारस्तथात्रापि । अतः, चोदना पुरुषप्रयत्नपर्य्यवसायिनी, प्रयत्नो विभिन्नशाखीयविधिवाक्या-द्यन्यतमापेक्षः, फलञ्च यत् प्रधानं, तदुभयत्रैवैकम्, आनुषङ्गिक-फलयोस्त्वनुक्तयोरविशेषात् । पञ्चाग्नीनामुभयत्र वेद्यतया तद्व्यतिरिक्तस्यैकस्य वेद्यत्वेऽपि न रूपभेदः, पञ्चाग्निविद्यायोग-निर्वाहकस्य वेद्यस्य सत्वात् । नह्यतिरात्रे षोडशिग्रहणाग्रहणाभ्यां भवति रूपभेदः । कौथुममाध्यन्दिनादिकं हि ग्रन्थनाम न कर्म्मणो, नापि विद्यायाः, विशेषव्यावर्त्तकत्वाभावात् । पञ्चाग्निविद्येत्येवा-चार्य्यपरम्पराप्राप्तं नाम, अन्यतो व्यावर्त्तकत्वात् । नचेद् नाम न श्रौतमिति वाच्यम्, दर्शहोमशब्दवच्छिष्टपरम्पराप्राप्ततया नामत्वेन प्रसिद्धत्वात् । तस्मात् पञ्चाग्निविद्यायाः सर्ववेदान्तप्रत्ययत्वं सिद्धम् ॥३।३।२॥

ननूपासनरूपा वान्यादृश्यो वा याः खलु ब्रह्मविद्यास्तासां सर्ववेदान्तप्रत्ययत्वं न सम्भवत्येव चीर्णशिरोव्रतायैवाथर्वणिकाय तदुपदेशनियमात् 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्-यैस्तु चीर्णमा' इत्येतेन मन्त्रेण । शिरोव्रतं=शिरस्यग्निधारणव्रतम्। तथाच—धर्म्मभेददर्शनाद् विद्याभेदः । इममाक्षेपमपाकरोति—

## अथ तृतीयाध्याये तृतीयः पादः ।

अनन्तरातीतपादे दर्शितमुपासकस्य संक्षेपेण चोपास्यस्य स्वरूपम्, इदानीमुपासनपर्यवसायिविद्यास्वरूपविचारः प्रस्तूयते, येनोपास्यस्वरूपस्यापि प्रपञ्चः स्यादिति प्रतिवेदान्तं या विद्या दृश्यते सा भिद्यते न वेति संशयनिराकरणार्थोऽयमुपक्रमः । ननु कुतः संशय. ?–श्रूयते हि 'द्वे विद्ये वेदितव्ये परा चैवापरा च, तत्रापरा ऋग्वेदो यजुर्वेदः' इत्याद्यनन्तरम् 'अथ परा यया तदक्षरमधिगम्यते' (मु० १।१।४–५) 'अमृतं तु विद्या' (श्वेता० ५।१) इति मन्त्रवर्णाः, स्मर्यते च, 'विद्याः समस्तास्तव देवि भेदाः' इति, 'शब्दात्मिका सुविमलर्ग्यजुषां निधानमुद्गीथरम्यपदपाठवताञ्च साम्नाम् । देवि त्रयी भगवती भवभावनाय वार्त्ता च सर्वजगतां परमार्तिहन्त्री ।' इति 'सा विद्या परमा मुक्तेर्हेतुभूता सनातनी' इति चैवमादि । एवं विद्यानां स्वरूपतो भेदान्महाशक्तिरूपब्रह्मणोऽनतिरेकाच्चाभेदात् किं प्रतिपत्तव्यम् ? भेदोऽभेदो वेति संशयसम्भवात्,अथ नायं संशयः,विषयभेदेन कोव्योरविरुद्धत्वात्, इति चेत्, तथापि चिदचिदात्मकब्रह्मसिद्धान्ते सर्वेषु वेदेषु वेदान्तेषु च विद्याविधयो वर्तन्ते, सर्वैरेव तैर्ब्रह्मविषया विद्या विधीयते इति तत्शाखानां सर्वासां ब्रह्मविद्यात्वेनैक्यं वा, कर्मब्रह्मभेदाद्भेदो वा ? ब्रह्ममात्रविषयकाणां वेदान्तमात्रविहितानां विद्यानां शाखाभेदाद्भिन्नानाञ्चैक्यं नवेतिचैवं संशयद्वयोत्थानात्,सर्वासामेव विद्यानामैक्यं सर्वं खल्विदं ब्रह्मेतिश्रुतेः कर्मणोऽपि ब्रह्मतयैक्येन वास्तव-

भेदाभावात्, काण्डभेदात्तत्र भेदाभ्युपगमे द्वितीयसंशये शाखाभेदादपि विद्याभेद इति प्राप्ते उच्यते—

( सर्ववेदान्तप्रत्ययाधिकरणम्—१ )

**सर्ववेदान्तप्रत्ययत्वं चोदनाद्यविशेषात् ॥३।३।१॥**

'चोदनादीनां' चोदना-संयोग-रूपाख्यानाम्, पूर्वमीमांसा-सर्वशाखाप्रत्ययैककर्म्मताधिकरणसिद्धान्तसूत्रोक्तानां संयोगादीनामपि त्रयाणामादिपदेनोपादानात्।

ननु तस्मिन् सूत्रे संयोगरूपचोदनाख्याविशेषादिति क्रमे सत्यप्यत्र चोदनायाः प्रथमोपादानं किमर्थमिति चेत्, चोदनाया धर्म्मलक्षणत्वेन प्राधान्यादिति ब्रूमः, चोदना = विधिवाक्यरूपा, उपरिधारणाधिकरणन्यायाद् विध्याक्षेपकश्रुतिरूपा वा, आक्षेपश्च-अर्थापत्तिप्रमाणजा प्रमितिः, संयोगः = फलसंबन्धः, रूपं = द्रव्यदेवते, आख्या = नाम, तेषामविशेषात् = अभेदात्, सर्ववेदान्तप्रत्ययत्वं सर्वशाखीयोपनिषदुक्तानां विद्यानामेकत्वं बोध्यमित्यर्थः। सर्ववेदान्ताः सर्वशाखीयोपनिषदः प्रत्ययः प्रमाणं यस्य तत्त्वमित्येवंरूपेणैकत्वलाभात्, शाखाभेदेन विद्याभेदे तु सर्ववेदान्तप्रत्ययत्वं कस्याश्चिदपि विद्याया न स्यादिति भावः। तथा च चोदनादीनां यत्राविशेषः सैव विद्या सर्वशाखीयैका, न तु केवलं स्वरूपसद्ब्रह्मविषयकत्वेन, यत्र तु शाखाया ऐक्येऽपि चोदनादीनां भेदस्तत्र विद्याया भेदः, अग्निहोत्रदर्शपूर्णमासकर्म्मवत्। तदेतदुपरिष्टाद्व्यक्तीभविष्यति। विद्यैक्ये प्रसिद्धमुदाहरणं पञ्चाग्निविद्या, तद्भेदनं यथा देवात्मशक्त्यात्मकब्रह्मोपासनं तदुपपादितं तदन्तरप्रतिपत्त्यधिकरणे, वैश्वानरविद्यादिकमप्युदाहर्तव्यम् ॥३।३।१॥

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥३।३।३॥

'स्वाध्यायस्य' आथर्वणिकोपनिषदः 'तथात्वेन' स्वाध्यायत्वेन=अध्ययनविधिविषयत्वेन, 'हि' एव, 'तन्नियमः' तस्य शिरोव्रतस्य नियमः, अचीर्णशिरोव्रतेन नाध्येतव्यमितीतरव्यवच्छेदः; 'समाचारे' श्रौतसूत्रे श्रुतौ च ; तत्र श्रौतसूत्रे 'अधिकारात्'='इदमपि वेदव्रतेन व्याख्यातम्' इत्यतिदेशात्, श्रुतौ च 'नैतदचीर्णव्रतोऽधीते' ( मु० ३।२।११ ) इत्येतच्छब्दप्रतिपाद्यमुण्डकोपनिषदध्ययने कर्म्मण्यधिकृतत्वाच्च, अनेन चकारेण समाचारशब्दस्यार्थद्वयलाभः । तथाचाथर्वणिकोपनिषत्पाठस्य नियतमङ्गं शिरोव्रतं, न तु ब्रह्मविद्याया इत्यर्थः । तत्रोपमानमाह—'सववच्च' सववदेव 'सवेषु' सौर्य्यादिशतौदनपर्यन्तेषु सप्तसु होमेषु न त्वग्निहोत्रादौ यथा 'तन्नियमः' आथर्वणिकैकाग्निनियमः, त्रेताग्नौ तदाचरणव्यवच्छेदः तथाप्यध्ययनान्तरे तद्व्यवच्छेदः । न तु ब्रह्मविद्यायां शिरोव्रतनियमः । तन्नियम=इत्यत्र तच्छब्दो बुद्धिस्थपरामर्शकः, नातः शिरोव्रतैकाग्न्योर्भेदेऽपि नोपमानोपमेयभावासङ्गतिः बुद्धिस्थत्वेन यथायोगमुभयोर्ग्रहणात् । अतो ब्रह्मविद्यायां न शिरोव्रतनियमः । तस्मात्सर्ववेदान्तप्रत्ययत्वं तत्तद्विद्यासु सिद्धम् ॥३।३।३॥

विद्यैक्ये कर्मणो विशेषं दर्शयितुं श्रुतिं प्रमाणयति—

दर्शयति च ॥३।३।४॥

'दर्शयति च' श्रुतिरिति शेषः, वेदैक्योपदेशेन विद्यैक्यं प्रतिपाद्य-

तीत्यर्थः। 'सर्वे वेदा यत्पदमामनन्ति' (क० २।१५) इति 'तथैतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्य्यव एतं महाव्रते छन्दोगाः' इति च। इदमत्रावधेयम्, यदुपास्यं तद् वेद्यं भवति। यदि चोद्गीथादिरूपेणोपास्यभेदस्तथापि तेषामुपास्यानां स्वरूपतो दृष्ट्या च ब्रह्माव्यतिरेकाद् ब्रह्मोपासनेष्वेवान्तर्भावः। ब्रह्मविद्याप्येषं ब्रह्मविद्या इन्द्रं मित्रं वरुणमग्निमाहुरित्युपक्रम्य 'एकं सद्विप्रा बहुधा वदन्ति' (ऋ० १।१६४।४६) इति, 'एकं सन्तं बहुधा कल्पयन्ति' (ऋ० १०।११४।५) इत्यादि कर्म्मकाण्डमन्त्रवर्णात्। तासां भेदस्तु चोदनादिकृतोऽधिकारिसाधनादिवैलक्षण्येन। फलभेदश्च तत्प्रयुक्तः। उक्तमिदमन्यत्रापि। प्रकृतं खलु ब्रह्मदृष्ट्योपासनं न तु भेददृष्ट्यापि, ब्रह्मदृष्ट्योपासनञ्च मातृभावादिना सविशेषब्रह्मोपासनं, सर्वात्मभावेन निर्विशेषब्रह्मोपासनञ्च। तत्र प्रथमं स्थूलाद्यालम्बनभेदाद् विविधं, द्वितीयं त्वेकविधम्। भेददृष्ट्योपासने तु न ब्रह्मदृष्टिः किन्तु मिथो भिन्नदेवता दृष्टिरिति तत्त्वम् ॥३।३।४॥

- ( उपसंहाराधिकरणम्—२ )

चोदनाद्यविशेषसिद्धसर्ववेदान्तप्रत्ययत्वे फलमाह—

उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥३।३।५॥

श्रुत्यन्तरप्राप्तानां गुणानां 'समाने' चोदनाद्यविशेषादभिन्ने, तदन्यश्रुतिविहितविद्यारूपेऽर्थे 'उपसंहारः' कार्त्स्न्येन सम्बन्धो भवति। कुतः? 'अर्थाभेदात्' य एव हि तेषां गुणानामेकत्रार्थः,

उपासनोपकारकत्वरूप प्रयोजनं सोऽन्यत्रापीत्यर्थस्याभेदः । अत्र दृष्टान्तमाह-'विधिशेषवत्' अग्निहोत्रादिकर्म्माङ्गवत्, शाखान्तरोक्तानि यान्यग्निहोत्राद्यङ्गानि तानि सर्वाणि तदितरशाखायामकथितान्यपि कथिते ह्यग्निहोत्रादावसति बलवति बाधके योऽन्यत्वे तद्वदित्यर्थः, नहि प्रकृतिविकृतिभावाभावे कर्म्मान्तरेऽन्यस्य कर्मणो यावदङ्गोपसंहारो भवति, तस्मादपि विद्यैक्यमिति भावमाहुरस्याचार्य्यचरणाः ॥३।३।५॥

अत्र विशेषमाह—

( अन्यथात्वाधिकरणम्—३ )

## अन्यथात्वं शब्दादितिचेन्नाविशेषात् ॥३।३।६॥

'वाजसनेयिनः पठन्ति 'ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति ते ह प्राणमूचुस्त्वं न उद्गायेति' (बृ० १।३।१—२) इति प्रक्रम्य वागादीन् प्राणानसुरपाप्मविद्धत्वेनापहाय देवानां मुख्यप्राणपरिग्रहम् 'अथेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एव प्राण उदगायत्' इति, तथा छन्दोगाः 'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम' इति, (छा०१।२।१) इतरान् प्राणानसुरपाप्मविद्धत्वेनापहाय देवानां मुख्यप्राणपरिग्रहम् 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' ( छा० १।२।७ ) इति । उभयत्रापि प्राणप्रशंसया प्राणोपासनविधिः पर्य्यवसीयते । तदत्र भवति संशयः—'किमसौ शाखाद्वयोपदिष्टा प्राणोपासना एका वा भिन्ना वेति, तत्र चोदनाद्यविशेषादेकेति प्राप्ते सूत्र-

मारभ्यते 'अन्यथात्वं शब्दात्' न खलु चोदनाया अविशेषः, यतो याजुषच्छन्दोगश्रुत्योः 'शब्दात्' कर्तृकर्मप्रतिपादकशब्दात् 'अन्यथात्वम्' अन्यथाभावः प्रतीयते, प्राण उद्गायदिति याजुषः शब्दः येन प्राणे उद्गीथस्य कर्तृत्वं प्रतीयते, छन्दोगशब्दश्च 'प्राणमुद्गीथमुपासाञ्चक्रिरे इति' प्राणस्योद्गीथत्वम्, तथा च याजुषश्रुतावुद्गातुरुपासनविधिराक्षिप्यते, छन्दोगश्रुतौ तूद्गीथस्योपासनविधिरिति चोदनाभेदः स्फुट एवेति प्रतिवचनम्, पूर्वपक्षी तद् दूषयति 'इति चेत्' यदुच्यते—'न' तन्न युक्तम्, 'अविशेषात्' अर्थसंयोगादेरभेदात्, छान्दोग्ये 'प्राणमुद्गीथम्' इत्युद्गीथशब्दस्य तत्सम्बन्धिनि कर्तरि लक्षणया चोदनाया अप्यविशेषादुभयत्रैक्यमुपासनायाः। कथमर्थसंयोगादेरविशेषः ? असुरपराभवफलस्योभयत्र तुल्यत्वात्। आदिपदादसुरसङ्ग्रामोपक्रमत्वमसुरपराभवायोद्गीथोपन्यासो वागाद्याश्रयस्तेष्वसुरपाप्मानुवेधस्तदपहानं देवानां, मुख्यप्राणव्यपाश्रयस्तद्वीर्यादसुरविध्वंसोऽश्मलोष्टनिदर्शनञ्चेति बहवोऽर्था गृहीताः। ते चोभयत्रैवाविशिष्टाः। तस्मात् सामान्यात् एकैवोपासना, कर्तृकर्मभेदकशब्दप्रयुक्तदोषस्त्वेक एतेषामर्थानामविशेषात्तदनुरोधेन 'एष उ वा उद्गीथः' (छा० १।३।२३) इति याजुषश्रुतावुद्गीथप्राणयोः सामानाधिकरण्यदर्शनेन च लक्षणया परिहृतः ॥३।३।६॥

एवं प्राप्तेऽभिधीयते—

**न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥३।३।७॥**

'न' इति पूर्वकल्पनिषेधाय, 'वा' इति परकल्पव्यवस्थापनाय।

नोपासनैक्यं, किन्तूपासनाभेद इत्यर्थः, केवलनिषेधे अत्रोपासनविधिरेवाक्षिप्यत इति भ्रमोऽपि स्यात् स माभूदित्येतदर्थं वा शब्दः। केवलवाशब्दप्रयोगे विकल्पाकारोऽयं प्रदर्श्यत इति कोऽपि भ्राम्येदिति तन्निरासाय 'न' इति पृथगुक्तम्। यत्र च केवलेन नञा वाशब्देन वा पक्षव्यावृत्तिस्तत्र तात्पर्यविशेषाभ्युपगमादर्थग्रहः। उपासनभेदे हेतुः 'प्रकरणभेदात्' उपक्रमादिभेदात्, वाजुपे उपक्रमः, 'द्वया ह प्राजापत्या देवाश्चासुराश्च' इत्यारभ्य 'ते ह देवा ऊचुः हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति' ततश्चोद्गातृरूपमावेनोपासनं कामक्रोधादिरिपुपराभवफलकम्, कामनाविशेषगतां वाह्यरिपुपराभवफलकञ्च विहितम्, अत्रैव भाष्ये विचारितप्रायश्चैतत्, छान्दोग्ये उपक्रमश्च 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युद्गीथावयवप्रणवोपासनविधिवाक्येन, प्रकृतस्य च तस्य 'एतस्य वा अक्षरस्योपव्याख्यानं भवति देवासुरा ह वै यत्र संयेतिरे' इत्यादिनिर्देशानन्तरम् 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे' इत्यादिना प्रणवविषयोपासनम्। तदेवमुभयोरुपक्रमभेदः, रूपभेदश्चोपासनयोरुपास्यभेदात्। नहि चोदनादिधर्मसंयोगमात्राभेदे कर्म्माभेदो भवति, स्वर्गफलकक्रतूनां विविधरूपाणामविशेषप्रसङ्गादुपक्रमभेदबलाद्रूपभेदबलाच्च निर्णीतभेदयोरुपासनयोराख्यायिकांशसादृश्येनाभेदकल्पनस्यायुक्तत्वात्। नहि युधिष्ठिरो नैषधश्च द्यूतेन दायादजितसर्वस्वौ वनचारिणौ चाज्ञातस्वरूपौ राजकर्म्मनियुक्तौ चेति वृत्तान्तसाम्येन द्वावभिन्नाविति वक्तुं

शक्यते, स्वरूपभेदात्। तद्वदिहापि। अत्र दृष्टान्तः 'परोवरीयस्त्वादिवत्' यथा अस्यामेव शाखायामुद्गीथोपासनाप्रकरणे परमात्मदृष्टिसाम्येऽपि परोवरीयस्त्वगुणविशिष्टोद्गीथोपासनावदस्यादित्यगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनं भिद्यते तद्वत्। पराच परो वराच वरः परोवरीयानुद्गीथः परमात्मलक्षण इति वाचस्पतिमिश्राः, परश्च वरीयांश्चेति वा। मूलमस्य च्छान्दोग्यप्रथमाध्याये द्रष्टव्यम् ॥३।३।७॥

अत्र पुनराशङ्क्य समाधत्ते—

## संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥३।३।८॥

याजुषी यासौ प्राणश्रुतिः सा उद्गीथोपासनात्वेन संज्ञायते, छान्दोग्यस्थासौ प्राणश्रुतिरप्युद्गीथोपासनैवेति तदेवं 'संज्ञातः' आख्याया अभेदात् शाखाद्वयस्थोपासनैकैवेति 'चेत्' यदि, 'तदुक्तम्' तर्हि 'न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्' (३।३।७) इत्यव्यवहितपूर्वसूत्रेणोक्तमुत्तरं वेदितव्यमित्यर्थः, तत्र परोवरीयस्त्वादिगुणविशिष्टोपासनस्याक्ष्यादित्यगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोपासनस्य चैकस्यामुद्गीथोपासनासंज्ञायां स्थितायामपि फलभेदादेकशाखीयत्वेन पुनः श्रवणनिवृत्तये च मिथो भेदोऽभ्युपगतस्तथात्रापि प्रकरणाद् भेदोऽभ्युपगन्तव्य इति भावः। कर्म्मकाण्डेऽपि 'तदपि' संज्ञैक्येऽपि मिथो भिन्नत्वम्, 'अस्ति' तद् यथा, यावज्जीवमग्निहोत्रं जुहोतीति श्रुतिबोधितस्य मासमग्निहोत्रं जुहोतीति श्रुतिबोधितस्य च कर्म्मणोऽग्निहोत्रसंज्ञाया अभेदेऽपि मिथो भेदोऽस्ति। तु शब्दः शङ्काव्यवच्छेदार्थः समुच्चये वा॥३।३।८॥

नन्वेवमुद्गानुद्गीथादिरूपोपास्यभेदे 'तपांसि सर्वाणि च यद् वदन्ति' इति श्रुतिवचनमसमञ्जसं स्यात्, तपःशब्दगृहीतोपासनानामैक्योचरत्वाभावात्, इत्याशङ्कायामाह—,

( व्याप्त्यधिकरणम्—४ )

## व्याप्तेश्च समञ्जसम् ३।३।९

'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति छान्दोग्यस्थशाण्डिल्यविद्यायां तज्जलानित्यनेनोमापदार्थो यथा विवृतस्तथोपपादितमुमाधिकरणे, तेन च प्रणवावयवार्थ एव प्रतिपादितः, तथा च या उमा स एव प्रणवः, तदेव ब्रह्म, 'एतद्ध्येवाक्षरं ब्रह्म' इति श्रुतेः, 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः, 'चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत्' इति, 'सर्वस्वरूपे' इति, 'एकैवाहं जगत्यत्र द्वितीया का ममापरा' इति सप्तशतीस्मृतेश्च 'व्याप्तेः' सर्वरूपैव तादात्म्येन प्रणवब्रह्मलक्षणेनोमाब्रह्मणा व्याप्तत्वात्, सर्वोपासनाया उमाब्रह्मैव विषय इति, तपासीत्यादिवेदवचनं 'समञ्जसम्' सङ्गतम्। नन्वेवं विद्याभेदानुपपत्तिरिति चेन्न, प्रकारविशेष्यादिभेदेन चोदनादिभेदात् तद्भेदोपपत्तेः। एतच्चाशङ्कासमाधानद्योतको व्याप्तेश्चेति सौत्रश्चकार इति सर्वमनवद्यम्३।३।९॥

अथ साकारब्रह्मोपासने निराकारब्रह्मोपासने च साधनभूतमुख्यप्राणवृत्तौ, तद्वृत्तिवशब्रह्मा या इतरसाधनापेक्षया प्रशस्तार्था साक्षात्प्राणोपासनार्था वा या प्राणविद्या सर्ववेदसाधारणी दृश्यते, प्राणाश्रयोपासनप्रसङ्गोपस्थिततद्विद्याविचारः प्रस्तूयते—

( सर्वाभेदाधिकरणम्–५ )

## सर्वाभेदादन्यत्रेमे ॥३।३।१०॥

'सर्वाभेदात्' याजुषत्वेन परिगणिते बृहदारण्यके, छान्दोग्ये च सामवेदीया या प्राणविद्या या च कौषीतकिब्राह्मणोक्ता ऋग्वेदीया प्रश्नोपनिषदुक्ता चाथर्वणी, तासां सर्वासामभेदात्, बृहदारण्यकादौ वाक्चक्षुरादेर्वैकृत्तयो वसिष्ठत्वप्रतिष्ठात्वादयो ये गुणाः समुदिता मुख्यप्राणस्योक्ताः, ते 'इमे' सर्वे गुणाः 'अन्यत्र' कौषीतकिब्राह्मणादौ प्राणविद्यायां मुख्यप्राणेऽकथिता अप्युपसंहर्तव्याः, प्रागुक्तोपसंहारन्यायादित्यर्थः। इयं हि प्राणविद्या बृहदारण्यके षष्ठाध्याये, छान्दोग्ये पञ्चमाध्याये, कौषीतकिब्राह्मणे द्वितीयाध्याये, प्रश्ने द्वितीयप्रश्ने च प्रपञ्चिता, अंशतो विचारितपूर्वा च ॥३।३।१०॥

उपासनप्रसङ्गेनोपासनार्थतया तत्तच्छाखायामुक्ता ये ब्रह्मणो धर्म्मा आनन्द, विज्ञान-सर्वेशानत्व-कर्तृत्व-सर्वज्ञत्व-केवलत्व-निर्गुणत्वादयस्ते किमुपासनायामालम्बनीभूतप्राणतद्घृष्टिकब्रह्मादीनां चिन्मात्रस्य च यथार्हं योजनीया उत ब्रह्मण एवेति विचार्य्यते—

( आनन्दाद्यधिकरणम्—६ )

## आनन्दादयः प्रधानस्य ॥३।३।११॥

'प्रधानस्य' ब्रह्मणः 'आनन्दादयः' आदिपदात् विज्ञानपदार्थविज्ञातृत्वेशितृत्व-कर्तृत्व-केवलत्व-निर्गुणत्वादीनां परिग्रहः।

अत्र हेतुशब्दः 'सर्वाभेदात्' इति पूर्वसूत्रादनुवर्त्तते, सर्वत्र अभेदात्, अनन्यत्वात्तस्यैव सर्व्वे धर्म्मा इत्यर्थः ॥३।३।११॥

तैत्तिरीयके आनन्दमयप्रकरणे प्रियशिरस्त्वादिकमपि तस्य धर्म्मतयाम्नातं तदुपपादनायाह—

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ३।३।१२

आम्नातं तैत्तिरीयके, 'अन्योऽन्तर आत्मानन्दमयः' इत्युपक्रम्य 'तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः' इत्यादि, 'भेदे' अचितो' ब्रह्मस्वरूपादेकान्तेन पृथग्भावे, 'प्रियशिरस्त्वादेः' प्रियशिरस्त्वमोदप्रमोदपक्षत्वानाम् 'अप्राप्तिः' ब्रह्मण्यसम्बन्धः स्यादिति शेषः, 'हि' यतः प्रियादीनाम् 'उपचयापचयौ' वृद्धिक्षयौ भवतः, अचितस्त्रिगुणात्मकत्वात् परिणामित्वाच्च वृद्धिक्षयवतामपि प्रियादीनां तदवच्छेदेन चिदचिदात्मके ब्रह्मणि प्राप्तिरविरुद्धेति भावः ॥३।३।१२॥

नन्वेवं निर्गुणत्वनिःसङ्गत्वानुच्छित्तिधर्म्मत्वादिश्रुतीनां का गतिरिति जिज्ञासायामाह—

## इतरे त्वर्थसामान्यात् ३।३।१३

आनन्दप्रियशिरस्त्वादिधर्म्मव्यवच्छेदार्थस्तुशब्दः । 'इतरे'= 'साक्षी चेता केवलो निर्गुणश्च' इति, 'असङ्गो ह्ययं पुरुषः' (बृ० ४।३।१६) इति, 'अयमात्मानुच्छित्तिधर्म्मा' ( बृ० ४।५।१४ ) इति चैवं जातीयकश्रुतिप्रतिपाद्या आनन्दादिव्यतिरिक्ता निर्गुणत्वासङ्गत्वापरिणामित्वप्रभृतिधर्म्माः, 'अर्थसामान्यात्' अर्थस्य=

चिदचिदुभयात्मकवस्तुनः, सामान्यात्=साधारणत्वादुपपद्यन्ते। यदि केवलाचितो ब्रह्मत्वमभ्युपागंस्यत, निर्गुणत्वादीनां तद्वृत्तित्वादुदाहृतश्रुतिविरोधः प्रासङ्क्ष्यत, चिदचिदुभयात्मकब्रह्मवादे तत् साधारणत्वं तु तत्तद्धर्माणामस्त्येवेति न काचिदनुपपत्तिः; आत्मघटयोर्नास्मत्वमितिवत् चित्तचितोर्न गुणो न सङ्गो न परिणाम इति प्रतीतेः, अचिदवच्छेदेन गुणसङ्गादिसत्त्वेऽपि चिदवच्छेदेन तदसत्त्वाद् उभयावच्छेदेन न तत्सत्त्वमिति निर्गुणत्वादिश्रुतिर्नानुपपन्नेति भावः। एतत्सूत्रतात्पर्यन्तु भाष्येऽस्मिन्नमङ्कुक्तम् ॥३।३।१३॥

ननु भक्तानुग्रहगृहीतरूपविशेषस्यापि नीरूपस्वभावस्य ब्रह्मणो निवेदनावसरे प्रियशिरस्त्वादिकमित्यादिना शिरआदिकल्पनायां अयुक्तत्वेन पञ्चमकोष एवानेनोच्यते न ब्रह्मेत्याक्षेपं परिहरति—

( आध्यानाधिकरणम्—७ )

आध्यानाय प्रयोजनाभावात् ॥३।३।१४॥

'प्रिय एव शिरः' इत्यादि श्रुतिर्विचारार्हवाक्यम्। अनेनानन्दमयादिवत् कोषविशेषः प्रतिपाद्यते ब्रह्म वेति संशयः, आनन्दमयाधिकरणेन संशयकारणानां बहूनां निरासेऽपि, एकस्यानिरासात्, तद् यथा, नीरूपस्वभावस्य ब्रह्मणोऽत्र प्रतिपादने शिरआदिरूपणं निष्प्रयोजनमित्यस्य पूर्वपक्षस्योत्तरम्, आध्यानायेति। क्षेपपदे 'प्रयोजनाभावात्'—पुरुषार्थाभावात्, ब्रह्मप्रतिपादने शिर आदिरूपणम् आध्यानाय, ध्यानारम्भार्थम्। आनन्दध्याना-

रम्भे आनन्दमयाशतया प्रियस्य ध्येयत्वम् प्रवेशसौकर्यात्, मोक्षद्वारतया च तस्य पुरुषार्थरूपत्वादिति भाव ॥१।१।१४॥

कोप प्रतिपादनाभावे हेत्वन्तरमाह—

## आत्मशब्दाच्च ॥१।१।१५॥

'अन्योऽन्तर आत्मानन्दमय' इत्यात्मशब्दप्रयोगादानन्दमयस्य ब्रह्मत्व गम्यते, तस्य प्रियशिरस्त्वादिकञ्च चिदचिद्वपुष्ट्‌या-त्मकत्वमुखे न सम्भवतीति तथाविधनेव ब्रह्मेत्यानन्दमयाधिकरणस्य प्रपञ्चरूप प्रासङ्गिको विचार क्रियते ॥१।१।१५॥

नतु 'अन्योऽन्तर आत्मा प्राणमय' 'अन्योऽन्तर आत्मा मनोमय' इत्यादावात्मशब्दस्यानात्मनि प्रयुक्तत्वेन 'अन्योऽन्तर आत्मानन्दमय' इत्यत्रात्मशब्दस्याप्यनात्मपरत्वमेवोचित कुतो ब्रह्मपरत्वमित्याशङ्का निरस्यति—

## आत्मगृहीतिरितरवदुत्तरात् ॥१।१।१६॥

'आत्मगृहीति' आत्मन = ब्रह्मण, गृहीति = ग्रहणम्, 'अन्योऽन्तर आत्मा आनन्दमय' इति श्रुतिस्थात्मशब्देनेति शेष। 'इतरवत्' अन्नमयादिविज्ञानमयान्तप्रवाहेतरस्येव = 'तस्माद्वा एतस्मादात्मन आकाश सम्भूत' इत्युपक्रमवाक्यस्यात्मशब्दो यथा ब्रह्मपरस्तथात्रापि, कुत 'उत्तरात्' = सोऽकामयत बहुस्या प्रजायेय इत्युत्तरवाक्यात्। स इत्यनेन कोपोपदेशपरश्रुत्यन्तरेणानन्तरितस्य प्रकृतस्यानन्दमयस्य परामर्शात्। अकामयत इत्यनेन च तस्य चिन्मात्रस्वरूपताव्यवच्छेदात् ॥१।१।१६॥

अत्राशङ्कागर्भं तत्समाधानमाह—

## अन्वयादिति चेत् स्यादवधारणात् ३।३।१७

'अन्वयात्' मयडन्तवाक्यप्रवाहपतितत्वरूपसम्बन्धात्, 'अन्योऽन्तर आत्मानन्दमयः' इत्यत्राप्यात्मशब्दोऽनात्मपरो न ब्रह्मपर 'इति चेत्' एवं यदि, इत्याशङ्क्योत्तरयति 'स्यादवधारणात्' स्यात्=ब्रह्मपर एव भवेत्, कुतः 'अवधारणात्' बाधानवतारेण प्रक्रान्तस्योत्तरवाक्येन दृढतरप्रत्ययात् । अयं भावः—'ब्रह्मविदाप्नोति परम्' ( तै० २।१ ) इत्युपक्रम्य 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इति तत्पदार्थब्रह्मणि आत्मपदार्थाभेदनिर्देशेन, आत्मशब्दस्य ब्रह्मार्थकत्वं प्रक्रान्तं, अन्नमयादिविज्ञानमयान्तेषु आत्मशब्दो ब्रह्मशब्दो वा न प्रकान्तब्रह्मपरः, ब्रह्मोत्पादितेभ्यो भूतेभ्य उत्पत्तिदर्शनात् क्रमशोऽन्तरत्वदर्शनाच्च, अनित्यस्य सर्वान्तरत्वरहितस्य च ब्रह्मत्वबाधनिश्चयात्तच्चदात्मशब्दस्य ब्रह्मपरत्वं व्याहतमत्र तु सर्वान्तरस्यानन्दमयस्य नित्यस्यात्मत्वं बोधयन्ती श्रुतिरनवतारितबाधा कथं प्रकान्तं जह्यात्, अधिकन्तु सोऽकामयतेत्युत्तरवाक्येन प्रक्रान्तगोचरः प्रत्ययो दृढीकृतः, तस्मादवधारणात् मयडन्तप्रवाहपतितत्वरूपसम्बन्धेन नात्रात्मशब्दोऽनात्मानं बोधयितुमीष्टे, आद्यन्तविरोधादिति ॥३।३।१७॥

ननूपासीत विद्यादित्येवं जातीयकेन विधिना प्राप्ताया उपासनपर्य्यवसायिन्या विद्याया भेदाभेदचिन्ता कृता, तत्र यद्युपासनस्य विधिप्राप्तत्वं भवेद् भवतु नाम, वेदनस्य तु वस्तुतन्त्रस्य विधेयत्वमुपपद्यते, न वा ? यद्युपपद्यते, ततोऽपूर्वमुत्पद्यते न वा ?

इत्यस्मिन्नपेक्षितो विचारस्तद्धाधिकायाः प्रसक्तवलवज्जिज्ञासाया निवर्त्तनादिदानीं प्रस्तूयते—

( कार्य्याख्यानाधिकरणम्—८ )

कार्य्याख्यानादपूर्वम् ३।३।१८

वेदनस्य कार्य्यत्वाभावान्न विधेयत्वं नापि ब्रह्मदर्शनस्वरूपासतोऽपूर्वोत्पत्तिः, 'क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे' इति श्रुतेः। इत्येवं प्राप्तेऽभिधीयते, 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यत्र साक्षाद्विधिप्रत्ययेन, 'तद् य इत्थं विदुः' इत्युपक्रान्त देवयानगत्यर्थवादबलादुपरिधारणाधिकरणन्यायेनाक्षिप्तविधिना च 'कार्य्याख्यानात्' आत्मनो दर्शनं श्रवणं मननं निदिध्यासनञ्च कार्य्यमिति पञ्चाग्निवेदनं कार्य्यमिति चाख्यानाद् वाक्येन प्रतिपादनादिति कार्य्याख्यानादित्यस्यार्थः। निरर्थककार्य्यप्रवृत्त्यभावात्, दर्शनादिकर्म्मणा सफलेन भाव्यं तच्च फलं न सद्यः, नापि कारणानन्वितंकार्यं भवतीति कार्य्यानुपपत्त्या पारमेश्वरकृपापर्य्यवसानमपूर्वं कल्प्यते, अपूर्वद्वारा दर्शनादेः फलानुगमात्, तस्मात् कार्य्याख्यानज्ञाप्यमपूर्वं भवति। न च 'तद् य इत्थं विदुः' इत्यादौ भवत्वपूर्वं कालान्तरभाविफलकत्वाद् वेदनस्य, द्रष्टव्य इत्यत्र दर्शनफलस्याज्ञाननिवृत्तेः सद्य एव सम्भवात्, वस्तुतन्त्रे ज्ञाने विधेयत्वाभावेन वेदनविधेरसम्भवस्योक्तत्वाच्चायुक्तमिदं वचनमिति वाच्यम्—'आत्मयमेवेक्षेत' इत्यादौ दर्शनस्य विधेयत्वाद् दर्शनादेर्वेदनत्वेऽपि तद्रूपताया युक्तत्वात्, स्फीतालोकमध्यवर्त्तिनोऽपि घटस्य समनस्कचक्षुःसंयोगाभावदशायां

दर्शनाभावेन दर्शनादिरूपज्ञानस्यापि वस्तुमात्रतन्त्रत्वाभावात्, सिद्धस्य वस्तुनः कृत्यनपेक्षत्वेऽपि, दर्शनसामग्रीशरीरे तस्यैव कृतिसाध्यचक्षुःसंयोगादेः सत्त्वेन तदर्थं विध्यपेक्षणात्, दिङ्मूढस्य सत्यपि सूर्य्यान्यदर्शनेऽपरदिङ्मोहनिवृत्त्यदर्शनात्—दर्शनसामान्य-रजाज्ञाननिवर्तकत्वाभ्युपगमस्यायुक्तत्वेन महाशक्तिकृपारूपापूर्वस्य तत्रापि कल्पनीयत्वात् कृपाहेतुकार्य्यस्योपासनात्वेन जगन्नाथ मुखादिदर्शनवत् श्रवणमनननिदिध्यासनवच्च निराकारस्य साकारस्य वा ब्रह्मणो दर्शनस्योपासनविशेषरूपत्वाच्च। एवञ्च दर्शनादिविधिरुपपन्नो दर्शनादेरपूर्णहेतुत्वञ्चोपपन्नम्। अपूर्वं तु प्रकृतस्थले महाशक्तिरूपब्रह्मणः कृपा। जीवोपाधौ बुद्धौ सात्त्विक-परिणामविशेषो धर्म्मापूर्वादिपदप्रतिपाद्यो बुद्ध्युपादानभूतप्रकृतौ ब्रह्मणोऽचिदशरूपाया कृपा भवति नत्वन्या मृदीव घटारोपिता रेखा। अत्र कार्य्यधर्म्मनिर्णयपूर्वकत्वात् कारणधर्म्मनिर्णयस्य बुद्धि-परिणामभूतापूर्वस्य प्रकृतिकृपात्वेऽपि निर्णयपौर्वापर्य्याज्जन्यजनक-भावव्यवहारः। निषिद्धाचरणाच्च जीवस्य दुरितापूर्वं महाशक्ति-ब्रह्मणो निजिघृक्षारूपमुत्पद्यते, इत्युक्तमधस्तात् ॥३।३।१८॥

नन्वेवं 'तमेव विदित्वातिमृत्युमेति' इति श्रुत्या वेदनमात्रस्य महाशक्तिकृपाद्वारा वा साक्षाद्वा मृत्यूत्तरणहेतुत्वे श्रवणादिनाना विधयो व्यर्था इत्याशङ्क्याधिकरणान्तरमाह—

( समानाधिकरणम्—९ )

**समान एवञ्चाभेदात् ३।३।१९**

'अभेदात्' वेदान्तप्रतिपाद्यफलस्याभेदाद् उपासनरूपत्वेन

तुल्यत्वाच्च 'समाने' तुल्ये उपासने 'च' चोऽवधारणे, तुल्य उपासन एव, 'एवं' समानम् अपूर्वं महाशक्तिकृपा भवति, तथा च यत्र यत्रोपासने मुक्तिरूपफलं श्रूयते तत्र तादृश्येव कृपा, यत्र तन्न श्रूयते, तत्र तदन्वितफलानुकूला कृपा, तथा च विधेयभेद. कृपाभेदज्ञापकः। अपि च एकमेव कर्म्म अधिकारिभेदात् कृपाभेदं जनयति, अधिकारिभेदेन यज्ञादिरूपमुपासनं फलभेदाय कल्पत इति विचारितं प्रथमाध्यायद्वितीयपादे वैश्वानराधिकरणे। अधिकारिभेदाच्चोपासनभेदः, यज्ञोऽश्वमेधादिवत्। एतेन विधिभेदो व्याख्यातः। तस्मात् फलभेदादधिकारिभेदाच्च विधिभेदः। तेन मुक्तिहेतुवेदनमात्रं, मुक्तिहेतुमहाशक्तिकृपाजनकविशिष्टवेदनमेव। तथाविधविशिष्टवेदनार्थं श्रवणादिविधिक्रमः, फलान्तरार्थानि च विध्यन्तराणीत्येवमुपपद्यन्ते नानाविधय इति ध्येयम्, व्यक्तीभविष्यति चेदमुपरिष्टात् ॥३।३।१९॥

छान्दोग्योक्तप्रणवोद्गीथोपासनस्य तज्जलानिति रूपेणोभोपासनस्यमुक्तं समान उपासने तुल्यमपूर्वमिति च—असमानेऽप्येवं फलमुमासम्बन्धादेव श्रूयते, यत् समान इति व्यर्थम्, समान एवेत्यवधारणार्थत्वासम्भवादित्याशङ्कानिरासकमधिकरणान्तरमाह—

( सम्बन्धाधिकरणम्—१० )

**सम्बन्धादेवमन्यत्रापि ॥३।३।२०**

'सम्बन्धात्' सोमे उमायाः सम्बन्धात्, 'यस्मादुमापतिः सार्द्धमुमया तमधिष्ठितः। तं दृष्ट्वा प्राप्तमांशेन ततः सोमोऽभवच्छिशुः।'

( मत्स्य पु० २३।५ ) इति चन्द्रे उमाधिष्ठानात् सोमलतायां चन्द्र-सम्बन्धाच्च 'अन्यत्रापि' आन्तरोपासनाया असदृशे सोमयागेऽपि 'एवम्' अमृतफलं समाने यथा तथैव भवति—श्रूयते हि 'अपाम सोमम् अमृता अभूम' इति। एतदेव फलं सर्वशास्त्रसमाने ब्रह्मविज्ञाने ; कृष्णयजुःशाखायां 'एष देवो विश्वकर्म्मा महात्मा सदा जनानां हृदये सन्निविष्टः। हृदा मनीषी मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति' इति ( श्वेता० ४।१७ ) 'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति' इत्युपक्रान्तौ 'विमुक्तोऽमृतो भवति' इत्याथर्वणमुण्डकोपनिषदि च श्रूयते। तस्मादुमायाः कथञ्चित्सम्बन्धादेवासमाने समाने च तुल्यमपूर्वमिति पूर्वपक्षसूत्रम् ॥३।३।२०॥

अस्योत्तरमाह—

न वा विशेषात् ॥३।३।२१॥

'न वा' इति पूर्वपक्षं व्यवच्छिद्य स्वपक्षव्यवस्थापनद्योतकं निपातद्वयम्। 'विशेषात्' अमृतत्वभेदेनापूर्वस्य यागब्रह्मविद्ययोर्भेदात् यागजन्या या अपूर्वाख्या महाशक्तिरूपा तया देवानामिवामृतत्वं भवति, न तु मोहनिवृत्त्या विमुक्तिलक्षणं पुनर्भववर्जितममृतत्वम् ; तदमृतत्वञ्च दीर्घकालीनो देवानामिव स्वर्गभोगः, ततः पुनरावृत्ति-र्भवति। ब्रह्मविज्ञानेन या अपूर्वाख्या महाशक्तिरूपा जायते, तया मोहनिवृत्त्या ब्रह्मभावः स्फुरति तदेव पुनर्भववर्जितं विमुक्तिलक्षणम-मृतत्वमिति विशेषात् समान इत्यस्यावधारणार्थतया न वैयर्थ्यमिति सुस्थितम् ॥३।३।२१॥

अत्र प्रमाणमाह—

## दर्शयति च ॥३।३।२२॥

'तद् यथेह कर्म्मजितो लोकः क्षीयते, एवमेवामुत्र पुण्यजितो लोकः क्षीयते'(छा०८।१।६) इति श्रुतिः यागादिपुण्यलब्धस्वर्गलोकभोगस्य क्षयित्वं दर्शयति। ननु यदि सर्वत्रैवापूर्वं कल्प्येत, तत्त्वज्ञानस्यापि क्षयिफलकत्वं स्यात्, अपूर्वस्य पुण्यत्वात्, 'नास्त्यकृतः कृतेन' (मु०१।२।१२) इतिश्रुत्यन्तरात्, मोक्षं प्रति तस्य कारणत्वप्रतिषेधाच्च, इति चेन्न, मोक्षस्य लोकत्वाभावात्, पुण्यजितलोकस्यैव क्षयित्वभवणाद् लोकस्वरूपब्रह्मभावात्मकमुक्तेः क्षयित्वासम्भवात्, नास्त्यकृतः कृतेनेति मोक्षस्य नित्यत्वेन तस्मिन् दर्शनजन्यस्यापूर्वस्य कारणत्वविरहेऽपि मोहनिवृत्तौ तस्य तथात्वानपायात्, सति च तस्या मोक्षस्य स्थितस्यैव घनापगमे सूर्य्यस्येव प्रकाशात्। अत एव 'अयन्तु परमो धर्म्मो यद् योगेनात्मदर्शनम्' इति स्मृतेस्तत्र धर्म्मप्रकर्षेत्पत्तेऽपि नात्मदर्शनानन्तरं मोक्षे कृतकत्वापत्तिरज्ञाननिवृत्तेस्तज्जन्यत्वात्। तस्मात्समान एव तुल्यफलजनकत्वमिति सिद्धम् ॥३।३।२२॥

उपासनपर्य्यवसायिविद्याविचारे जिज्ञासिततत्फलभूतां पूर्वं व्याख्याय स्वरूपतः पुनर्विद्यामधिकृत्य विचार्य्यते—

( सम्भृत्यधिकरणम्—११ )

## सम्भृतिद्युव्याप्त्यपि चातः ३।३।२३

'सम्भृतिद्युव्याप्ति' सम्भृतिश्च द्युव्याप्तिश्च समाहारद्वन्द्वादेकवद्भावश्छान्दसः। सम्भृतिः=वीर्य्यपूर्णता, अपिः=विभूत्यन्तर-

समुच्चयद्योतकः। अतः = उपासनभेदात्, चकारेणाव्यवहितपूर्वसूत्रार्थमाधित्सन्नयोपस्थापकतदव्यवहितपूर्वसूत्रात् 'न' इत्यस्यानुकर्षः, तथा च शाखायणीयशाखोक्ता वीर्य्यसम्भृतिद्युव्याप्तिप्रभृतयो महाशक्तिरूपब्रह्मणो विभूतयः शाण्डिल्यादिविद्यासूपासनाख्यासु नोपादेया इत्यर्थः। पठन्ति हि शाखायणीयाः, 'ब्रह्मज्येष्ठा वीर्य्याणि सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान। ब्रह्म भूतानां प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्द्धितुं कः।' इति, "प्रथमाशब्दलिङ्गात् 'चिकितुषी प्रथमा यज्ञियानाम्' इति देवीसूक्तमन्त्रवर्णाच्च महाशक्तिरिति तदर्थः प्रतीयते, तदात्मकं हि ब्रह्म भूतानां जज्ञे, भूतानि जनयामास, अन्तर्भूतण्यर्थोऽयं प्रयोगः। 'अधीहि भगवः' (छा० ७।१।१) इत्यादिवत्, भूतानामिति सम्बन्धविवक्षया शेषे षष्ठी, 'अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा' इति देवीसूक्तमन्त्रवर्णसमानार्थोऽयं प्रतीकः। तादृशब्रह्मज्येष्ठानि ब्रह्मकारणकानि सम्भृतानि पूर्णानि वीर्य्याणि, ज्येष्ठा इति पुंस्त्वं छान्दसं 'नि' शब्दलोपो वा, 'अहं मित्रावरुणोभा बिभर्म्मि' 'यं कामये तं तमुग्रं कृणोमि' 'अहं रुद्राय धनुरातनोमि' इत्यादिना वीर्य्यसम्भृतिराम्नाता। तदेव ज्येष्ठं ब्रह्म अग्रे दिवम् आततान व्याप—'परो दिवा पर एना पृथिव्यैतावती महिना' इति हि देवीसूक्ते। तेन ब्रह्मणा स्पर्द्धितुं कोऽर्हति" इति तन्मन्त्रार्थः। सूत्रे व्याप्तिः कारणस्य कार्य्यानुप्रवेशश्चेत् तत्पादनमेव पर्य्यवसितार्थः स्यात्, तथात्वे 'पिता द्यौः' इति श्रुतेः, 'अहं सुवे पितरमस्य' इति दिवं जनयामीत्यर्थकदेवीसूक्तमन्त्रप्रतीकेन संवदनं भवति। ननु देवीसूक्तमन्त्रवर्णे, अहमित्यनेन वाच आम्भृण्या ऋषि-

काया. परामर्शात् कथं महाशक्तिरित्युच्यत इति चेन्न जीवरूपाया वाचो वर्णितप्रकारत्वानुपपत्त्या स्वात्मनि महाशक्तिस्वरूपत्वावबोधेन, तथाभिधानात्। न च ब्रह्माभेदज्ञानेनैव तथाभिधानात् कृतं महाशक्तित्वावबोधेनेति वाच्यम्, स्त्रीलिङ्गप्रयोगानुरोधेन तथाऽभ्युपगमात्, या हि मित्रावरुणादीन् बिभर्ति सुप्रसवित्री व्याप्तिनी सा नाम्भृणी किन्तु ब्रह्म तन्नैवाहन्त्वाया दृष्टायां कथं स्त्रीप्रत्यय स्यात्, महाशक्तेस्तथात्वे तु मित्रावरुणादिभरणादीनां स्त्रीलिङ्गप्रयोगस्य चानुपपत्तिविरहान्महाशक्तिरित्युमेत्यादिनाम्ना चैकार्थकत्वेन देवीसूक्तस्य तत्परताया युक्तत्वात्। तस्माद् ब्रह्ममहाशक्त्योरविशेषेऽपि लिङ्गभेदनियामकशब्दविशेषाभिप्राया शब्दप्रवृत्तिरिति विशेष। तदेवं महाशक्तिब्रह्मणो या विभूतय, तत्र सम्भृतिद्युव्याप्ती कण्ठत उक्ते चकारेण भूतजनन समहृ, ता शाण्डिल्यादिविद्यायामुपासनपर्यवसितायामुपादेया न वेति संशये उपादेया इति पूर्वपक्ष। अन्यथा विभूतिवर्णनपरश्रुतेरानर्थक्यं स्यात्, 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' ( जै० १।२।१ ) इति स्थिते', भवति तु सार्थक्यं 'विधिनात्वेकवाक्यत्वात्, स्तुत्यर्थेन विधीनां स्युः' ( जै० १।२।७ ) इतिप्रकारेण, अत 'तज्जलानिति शान्त उपासीत' (छा० ३।१४।१) इत्युपासनविधौ तज्जलानित्यनेन समानार्थविवरणादुमाकारेण वा निराकारतया वोपासनीयस्य ब्रह्मणो देवीसूक्तमन्त्रसमार्थक राणायणशाखीयमन्त्रोक्तविभूतिमत्तयोपसंहारस्य युक्तत्वात्, इत्येवं प्राप्तेऽभिधीयते सम्भृतीति। उक्तञ्च तदर्थं, नोपादेया

इत्युत्तरपक्षः, तत्रहेतुरुपासनभेदादित्यनेनोक्तः । शाण्डिल्यादि विद्यायामाध्यात्मिकमुपासनं राणायणशाखीयमन्त्रार्थोक्तिप्रविधि-बोधितमुपासनन्त्वाधिदैविकमिति भेदात् । अध्यात्मोपासन आधि-दैविकगुणोपसंहारो न युज्यते । शाण्डिल्यविद्यायामाध्यात्मिको-पासनलिङ्गम् 'एष म आत्मान्तर्हृदये' इति 'मनोमयः प्राणशरीरः' इति च, दहरविद्यायाञ्च, 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इति, एवमन्यत्रापि । तत्र शाण्डिल्यविद्यायां मनोमयः प्राणशरीरो भारूप इति तज्जलानित्युपदिष्टोमाकारेणापि ध्यानस्य तन्मन्त्रजपस्य च लिङ्गम् । निराकारोपासनलिङ्गञ्च 'एष म आत्मान्तर्हृदये' इति, यदि केवलं निराकारोपासनं कल्प्येत मनोमय इत्यादिकमनर्थकं स्यात्, विशेषतो भारूप इति दहर-विद्यायाञ्च परं ज्योतिरुपसम्पद्येति साकारोपासनलिङ्गम्, तज्जला-नित्यस्य व्याख्यानमुमाधिकरणे, परं ज्योतिरित्यस्य च विवरणं दहराधिकरणे द्रष्टव्यम् । तस्माद् राणायणशाखाखिलोक्ता ब्रह्म-विद्या तच्छाखीयशाण्डिल्यविद्यापरनामक महाविद्या च भिन्नेति निर्गलितार्थः ॥३।३।२३॥

सनामविद्याभेदप्रसङ्गेन तादृशविद्याभेदान्तरं दर्शयति—

( पुरुषविद्याधिकरणम्—१२ )

**पुरुषविद्यायामिव चेतरेषामनाम्नानात् ३।३।२४**

'पुरुषविद्यायामिव' छान्दोग्योपनिषदि या पुरुषविद्या नाम्नी विद्या तस्यामिव 'इतरेषां' तैत्तिरीयकाणाम् 'अनाम्नानात्' फलस्य धर्मस्य च अकथनात्, अर्थसंयोगरूपयोरभावात् पुरुष-

विद्येतिनाम्नोऽविशेषेऽपि तस्या भिन्नत्वमिति प्राकरणिकः समुदितार्थः। तथाहि 'पुरुषो वा व यज्ञस्तस्य यानि चतुर्विंशति वर्षाणि तत् प्रातः सवनम्' ( छा० ३।१६।१ ) इत्यादिका छान्दोग्ये पुरुषविद्याम्नाता, एतद्वेदनफलं 'षोडशवर्षशतं जीवति य एवं वेद' इति च तत्रैव। तैत्तिरीयकैराम्नायते, 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी' इत्यादि। अत्र च पूर्वं कर्मयज्ञाम्नानानन्तर ब्रह्मतत्त्वमाम्नातम् 'एवं विदुष' इत्यत्र 'एवं' पदेन तस्यैव प्राप्त्या तद्विदुषो महात्मय यज्ञस्वरूपञ्चाम्नायते। तथा चेयं विद्या प्रधानभूतब्रह्मविद्यायाः शेषभूता। तत्फलमेवैतत्फलमेवं स्थिते छान्दोग्ये पुरुष एव यज्ञत्वेनाम्नातः, तैत्तिरीयेषु तदाम्नानं नास्ति, पुरुषस्य यजमानत्वमेवाम्नातं यजमानपत्नीप्रभृत्यङ्गसमन्वितं च पृथगेव यज्ञरूपकम्, छान्दोग्ये वयोवर्षाणि सवनत्वेनोक्तानि, तैत्तिरीयके तु प्रातरादिसन्ध्यात्रयमेव सवनत्वेन कल्पितं न वयोवर्षाणि. छान्दोग्ये पुरुषविद्येयं प्रधानभूता, तैत्तिरीयकैः शेषत्वेनाम्नाता, छान्दोग्ये षोडशवर्षशतायुःफलकत्वमाम्नातं तैत्तिरीयकैस्तन्नाम्नायते, इति स्फुट एवार्थसंयोगरूपयोर्भेदः। तस्मादुभयशाखीया पुरुषविद्या मिथो भिन्नैवेति सिद्धान्तः। संशयपूर्वपक्षस्वरूपञ्चैतेनैवोहनीयम् ॥३।३।२४॥

विधिशेषत्वप्रदर्शनप्रसङ्गेन विधिशेषान्तरं विचार्य्यते—

( वेधाद्यधिकरणम्—१३ )

वेधाद्यर्थभेदात् ॥३।३।२५॥

आथर्वणिकमुण्डकोपनिषदि श्रूयते, 'यदर्चिमद् यदणुभ्योऽणु

च यस्मिन् लोका निहिता लोकिनश्च तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः । तदेतत् सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि । धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्दधीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि । प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् । यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' ( मु० २।२।२–५ ) इति । अत्र वेद्धव्यं विद्धि, लक्ष्यं विद्धीति विद्धय सन्दधीतेति वेद्धव्यमिति तन्मयो भवेदिति पञ्चमलकारान्तजानथेति च पदानि प्रवर्तकत्वाद्विधिशब्दरूपाणि । अत्र संशयः, किमेते विधयः एकेनार्थेन संयुज्यन्ते भिन्नैर्वा ? तत्रैकेनेति प्राप्तं वेधैक्यात् । इत्येवं प्राप्ते, उच्यते यथायथं भेदादिति । अयं भावः, अत्र वेद्धव्यं विद्धीति श्रवणविधिः, उपासानिशितशरसन्धानविधिस्तावत् मननविधिलक्ष्यवेदनयधिश्चदीकाभ्यविधिः, ब्रह्मवेधविधिश्च तन्निदिध्यासनविधिः, 'जानथ' इत्यत्र विधिवाक्ये ज्ञानं दर्शनरूपम् । कृष्णयजुर्वेदीये श्वेताश्वतरे 'यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ।' इति मन्त्रवर्णेन युक्तत्वविशिष्टपुरुषकर्तृकदर्शनविधिना तथा प्रतिपादनात् । आम्नातञ्चेदं शुक्लयजुः शाखोपनिषदि बृहदारण्यके 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति । सर्वत्रैव यद्यपि दर्शनं प्रधानमत्रापि तथा ; तथापि इष्टो यजति, बर्हिर्यजतीत्यादिवद् वेधादीनामङ्गरूपाणा-

मप्यपूर्वं पृथग् वर्तते, तदर्थाश्च पृथगेवाङ्गविधयः। अक्षरार्थस्तु 'वेधादीनां' मुण्डकोक्तवेधादिघटितमन्त्रप्रतिपाद्यानां श्रवणादीनाम्, द्वयोर्मन्त्रयोर्वेधघटितत्वेऽपि कतरस्य ग्रहणमिति संशये प्रथमोपस्थितग्रहणस्य न्याय्यत्वेन श्रवणादिलाभात् 'अर्थभेदात्' फलभेदात् श्रवणमनने स्वजन्यापूर्वेण महाशक्तिरूपेण निदिध्यासनमुपकुरुतः। चित्तैकाग्र्यन्तु निदिध्यासनस्य प्रथमावस्थेति तदीयापूर्वं निदिध्यासनपरिपाके हेतुः, निदिध्यासनञ्च स्वजन्यापूर्वेण दर्शनमुपकरोति एवं विशिष्टवेदन मोक्षाय। स हि मोक्षो मृत्यूत्तरणादिनामभेदेन व्यपदिष्टोऽप्येक एवार्थः। तस्माद् वेधादयः ज्ञानान्तराश्च प्रत्येकं विभिन्नार्थाः। 'अन्या वाचो विमुञ्चथ' इति प्रतीकश्च दर्शनप्रतिबन्धनिवृत्तिपर इति बोध्यम् ॥३।३।२५॥

ब्रह्मविद्याङ्गविधिविचारप्रसङ्गेन तदङ्गान्तरविचारः प्रस्तूयते—

( हान्यधिकरणम्—१४ )

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत् तदुक्तम् ॥३।३।२६॥

छान्दोग्ये श्यामाच्छबलं प्रपद्य इत्युपक्रम्य मन्त्रः पठ्यते 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' ( छा० ८।१३।१ ) इति, मुण्डके मन्त्रवर्णः 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति, कौषीतकिब्राह्मणे 'तत् सुकृत-

दुष्कृते विधुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति, अप्रिया दुष्कृतम्' (कौ० १।४) इति च। तत्र च्छान्दोग्ये अभिसम्भवामीति लिङ्गात्, मुण्डके पश्य इति स्थितेऽपि विद्वानिति पृथगुपादानस्य पुण्यपापविधूननध्यानरूपमानसवेदनविशेषपरत्वार्थकतया च तद् ध्यानं ब्रह्मविद्याङ्गमिति प्राप्तम्, तत्र संशयः—'धूञ् कम्पने' इति धात्वर्थवलात् पुण्यपापयोश्चालनध्यानं वा हानिध्यानं वा ब्रह्मविद्याङ्गम्? चालनं नाम कञ्चित् कालं पापमपसार्य्य फलप्रदानाय पुण्यस्याभिमुख्यम्, हानिः=उभयोरत्यन्तोच्छेद इति, अत्र प्राप्तं चालनमेव, एतासु श्रुतिषु धूञ् धातोः प्रयोगात्, तस्य च चालने मुख्यवृत्तेः, सत्यां गतौ मुख्यार्थपरित्यागस्यान्याय्यत्वात्। इति पूर्वपक्षः, तद्व्यावर्तकः सूत्रे तुशब्दः। उत्तरमाह—धूञ् धातोः 'हानौ' अत्यन्तोच्छेदे, वृत्तेः, कुतः? 'उपायनशब्दशेषत्वात्'—कौषीतकिब्राह्मणे, उपयन्तीति शब्द उपायनशब्दः प्राप्तिवाचकशब्द इत्यर्थः, तच्छेषत्वात्=विधुनुते इतिवाक्यादनन्तरं प्राप्तिवाचकशब्दस्य तन्निवृत्तिवाक्यत्वात्, धुञ् धातोर्मुख्यार्थतायां सुकृतदुष्कृतयोस्तत्रैव सत्त्वेनान्यकर्तृकप्राप्त्यसम्भवात्,—शाट्यायनिश्रुतौ दायतुल्यतया प्राप्त्याम्नानेन हानौ=त्यागे धुञ्धातोः प्रयोगस्याभ्युपेयत्वात्,—तथाहि 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति, परेतस्य दाये यथा सम्बन्धत्याग एवमेव सुकृतदुष्कृतयोरपीति, नात्र चालने धुञ् धातोः प्रयोगः किन्तु त्यागे =सम्बन्धत्यागे, अत्यन्तोच्छेदे इति फलितम्, धातूनामनेकार्थतया स्वयं श्रुत्यैव तद्विवरणात्। ननु छान्दोग्ये तत्र तादृशवाक्यशेषा-

भावात् कथं मुख्यार्थपरित्याग इत्याशङ्कायां प्रदेशान्तरवाक्यस्यापि वाक्यशेषत्वे दृष्टान्तमाह 'कुशाच्छन्दस्तुत्युपगानवत्' कुशा इति स्त्रीलिङ्गशब्दः, तथाहि कलापिन आमनन्ति 'कुशा वानस्पत्याः' इति, शाट्यायनिनां 'औदुम्बर्यः कुशाः' इति कुशाश्रुतिः सामान्येनावगताः कुशा औदुम्बर्य्य इति विवृण्वती शाखान्तरीयापि यथा वाक्यशेषो भवति, यथा वा देवासुराणां छन्दोभिरित्यविशेषेण प्राप्ते देवच्छन्दांसि पूर्वमिति च्छन्दोवाक्यं क्रमविशेषं बोधयत् सर्वत्र च्छन्दःप्रयोगे वाक्यशेषो भवति, यथा वा 'हिरण्येन षोडशिनः स्तोत्रमुपकरोति' इत्यविशेषेण प्राप्ते, समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपकरोतीति कालविशेषबोधकं स्तुतिविषयकं श्रुतिवाक्यं, हिरण्येनेत्यादि श्रुतेर्वाक्यशेषो भवति, यथा वा ऋत्विज उपगायन्तीत्यविशेषप्राप्तस्य नाध्वर्युरुपगायेदित्युपगानवाक्यमनध्वर्युविषयकत्वमवबोधयद् वाक्यशेषो भवति, तथा छान्दोग्यमुण्डकयोर्विधवनस्य कौषीतकिशाट्यायनवचने अपि विवरणरूपे भवन्ती वाक्यशेषो भवतः । तेषां वाक्यशेषत्वानङ्गीकारे विकल्प आश्रयणीयः स्यात् षोडशिग्रहणाग्रहणवत्, स च सति गत्यन्तरे न युक्तः, अत्र पूर्वतन्त्रं प्रमाणयति, 'तदुक्तम्' पूर्वभागे द्वादशलक्षण्यामुक्तम् 'अपितु वाक्यशेषः स्यादन्याय्यत्वाद् विकल्पस्य विधीनामेकदेशः स्यादिति' ( जै० १०।८।१४ ) चालनध्यानसम्बन्धत्यागध्यानयोर्विकल्पस्य दोषाष्टकग्रस्तत्वेनायुक्तत्वात्, शाखिभेदेन व्यवस्थितविकल्पत्वेऽपि वाक्यभेदस्य दुर्वारत्वात् । तस्मात् सर्व-

शाखिनामविशेषात् सुकृतदुष्कृतयोः सम्बन्धत्यागश्यानमेव विद्याङ्गम् ; भवति च विमुच्यमानस्य तथाभाव इति तत्त्वम् ॥३।२।२६॥

तत्र हानं विद्योपासनसिद्धानां कदा भवतीत्यस्य सविचारं सिद्धान्तमाह—

( साम्परायाधिकरणम्—१५ )

साम्पराये तत्तव्याभावात्तथा ह्यन्ये ॥३।३।२७॥

कौषीतकिनः पर्यङ्कविद्यायां पठन्ति, 'स एतं देवयान पन्थानमासाद्याग्निलोकमागच्छति' ( कौ० १।३ ) इत्युपक्रम्य 'स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधुनुते' (कौ० १।४) इति। अत्र संशयः—सत्कि ब्रह्मलोकार्धपथे देवयानमार्गे एव सुकृतदुष्कृतहानमुत मरणसमये ? इति ; श्रुतिबलात् प्रथमकोटिः प्राप्ता, इत्येव स्थिते उत्तरमाचष्टे 'साम्पराये' इत्यादि। साम्परायः=मरणसमयस्तस्मिन् सुकृतदुष्कृतहानं भवति विद्यासामर्थ्यात्, कौषीतकिब्राह्मणे न विदुषो गतिमामनति, कुतः, 'तत्तव्याभावात्' नहि विद्योपासनसिद्धस्य किञ्चिदस्ति तर्तव्यम्, 'न तस्य प्राणा उत्क्रामन्तीहैव समवलीयन्ते' इति श्रुतेः। 'तथाहि' तत्प्रकारमेव 'अन्ये' छन्दोगा आहुः 'अश्व इव रोमाणि विधूय पापम्' इति, प्रथममेव पापहानं ततो ब्रह्मभावः। अयं भावः—महाशाकेः कृपैव सुकृतं, निजिघृत्वैव दुष्कृतम्। तत्र जीवस्योपाध्यवच्छेदेन परिणामरूपमुत्पद्यते, उपाधिविलये तादृशे सुकृतदुष्कृते विलीयेते, विलीयते च जीवस्य जीवत्वमयमेव ब्रह्मभावः, तदानीं न तस्य तर्तव्यमस्ति पूर्णस्य तरणाद्यसम्भवादिति ॥३।३।२७॥

तर्हि कौषीतकिश्रुतेरनध्यवसायः स्यादित्याशङ्कामपाकरोति—

छन्दत उभयाविरोधात् ॥३।३।२८॥

छन्दः= अभिप्रायः कामना चेत्येकोऽर्थः, तमाश्रित्य, 'छन्दतः' इति ल्यब्लोपे पञ्चमी, 'उभयाविरोधात्' ब्रह्मलोकार्द्धपथे सुकृतदुष्कृतहानं मरणसमये च तदित्युभयत्र प्रमाणभूतयोः श्रुत्योरविरोधात्, विरोधपरिहारात् न कौषीतकिश्रुतेरनध्यवसाय इति सूत्रार्थः। श्रूयते हि, कौषीतकिब्राह्मणे पर्यङ्कविद्यायाम्, अग्निवायुवरुणादित्येन्द्रप्रजापतिलोकानतिक्रम्य ब्रह्मलोकद्वारमागतं देवयानपान्थमप्सरसां पञ्चशतं प्रतिधावति तं वशीकर्त्तुं नानोपायनैः, काश्चन ब्रह्मालङ्कारेण तमलङ्कुर्वन्ति, इतितात्पर्य्यकवचनानन्तरमाम्नातम्, 'स ब्रह्मालङ्कारेणालङ्कृतो ब्रह्मविद्वान् ब्रह्मैवाभिप्रैति' (कौ० १।४) एवकारेण तत्रत्यभोगव्यावृत्तिः। 'अभिप्रैति' इत्यस्य अभिप्रायवान् भोगादिकमुत्सृज्य ब्रह्मलोकं लिप्सुर्गच्छतीत्यर्थः, असति तद्भोगाभिप्राये गमनस्यैवोपपत्तेरितिभावः। मरणसमये सुकृतक्षये चाप्सरसामुपस्थितिर्ब्रह्मालङ्कारप्राप्तिर्नोपपद्यते। लोकविशेषगमनाभिप्रायवतः सुकृतदुष्कृतक्षयोऽर्द्धपथे भवतीति कौषीतकिब्राह्मणमाह, अश्व इव रोमाणि विधूय पापमितिच्छान्दोग्यवाक्यं तु— 'अथाकामयमानो योऽकामो निष्काम आप्तकामो [illegible] तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येतीति (बृ० ४।४।६) श्रुत्या अभिप्रायाभावे निष्कामस्य इत्यर्थात्, मरणसमये सुकृतदुष्कृतक्षयो भवतीति स्वच्छन्द एव स्वसत्तास्वासत्ताभ्यामर्द्धपथे मरणसमये च

सुकृतदुष्कृतक्षयं घटयतीति द्वयोः श्रुत्योरविरोधात् नास्ति कौषी-तकिश्रुतेरनध्यवसाय इति सर्वमनवद्यम् ॥३।३।२८॥

ननु विरजोत्तरणानन्तरं सुकृतदुष्कृतक्षयो देवयानयायिना-मुक्तः कौषीतकिब्राह्मणे, छान्दोग्यबृहदारण्यकयोश्च न मध्येमार्ग-मपि तु मरणसमय एव सुकृतदुष्कृतहानिरुक्ता, ततश्च यदि पञ्चाग्निविद्यावतां श्रद्धातप उपासकानाञ्च मरणसमय एव सुकृत-दुष्कृतक्षयस्तदोपाधिविगमात् कथं गतिरुपपद्येतेत्याशङ्कायामाह—

( गतेरर्थवत्त्वाधिकरणम्—१६ )

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥३।३।२९॥

हि शब्दो भिन्नक्रमोऽवधारणार्थश्च । तथा च 'उभयथा हि' उभयथैव 'गतेरर्थवत्त्वम्' प्रयोजनवत्त्वम्, 'अन्यथा'—उभयातिरिक्त-स्थलेऽपि गतिस्वीकारे विरोधः प्रसज्येत श्रुत्यन्तरेणेतिशेषः, इति सूत्र-योजनाप्रकारः । उभयथा = प्रकारद्वयेन, मरणसमये केवलं दुष्कृत-हानि', अश्व इव रोमाणि विधूय पापमिति पापमात्रविषयनश्रुते, सुकृतहानेरभावात्, नोपाधिलयः सुकृतवतोपाधिना तेषां गतिर्ब्रह्म-लोकप्राप्तिरूपप्रयोजना भवति विद्याजन्यसुकृतेन महाशक्तिकृपा-लक्षणेन तल्लोकप्राप्तेः । इति गतेरेकः प्रकारः सप्रयोजनः । अपरश्च कौषीतकिब्राह्मणोक्तः, एवमुभयथैव गतिरर्थवती । तदतिरिक्तस्थले = मरणसमये पुण्यपापहानस्थले, गतिस्वीकारे, 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति श्रुत्या विरोधः प्रसज्येत । मरणसमये पुण्यपापक्षये निरञ्जनभूतस्य जीवस्य परमसाम्य-

प्राप्तिर्न गतिरूपा, 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुतेरुत्क्रमणाभावात् कस्य कुत्र वा गतिः, स्यात्? किन्तु ब्रह्मभावः, ब्रह्मैव भवतीति श्रुतेः, तस्मादुभयथैव गतिरर्थवतीति युक्तम् ॥३।३।२९॥

ननु कथमियमुभयथा गतिरिति जिज्ञासायामाह—

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥३।३।३०॥

द्विविधो ह्ययं गतिप्रकारः 'उपपन्नः' युक्तः, 'तल्लक्षणार्थोपलब्धेः' तस्य=गतिभेदस्य, लक्षणं=कारणभूतः, अर्थः=विद्याभेदरूपवस्तु, तस्योपलब्धेः श्रुतित एव लाभात्, विद्या चोपासनपर्य्यवसायिनीत्युक्तम्, तत्र प्रथमोक्तगतिहेतुः छान्दोग्याद्युक्तं पञ्चाग्निविद्यादिकं द्वितीयगतिहेतुश्च कौषीतकिब्राह्मणोक्ता पर्य्यङ्कविद्या। अत्र दृष्टान्तो लोकवत्, लोके यथा राजसभां जिगमिषुर्द्वारदेश प्रवेशो निर्गच्छति दूरस्थश्च कश्चिन्मध्येमार्गमेव तथाभूतो गच्छति तद्वत् ॥३।३।३०॥

तल्लक्षणार्थोपपादनायाह—

( अनियमाधिकरणम्—१७ )

अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥३।३।३१॥

पञ्चाग्निविद्यादिषु कासुचिद्दुमोपासनादिरूपब्रह्मविद्यासु गतिश्रुतिरस्ति, शाण्डिल्यविद्यादिषु तादृशीषु कासुचिन्नास्ति, अत्र संशयः, यासु गतिश्रुतिरस्ति किं ता एव तल्लक्षणोऽर्थ इति नियमः, आहोस्वित् सर्वा एव विद्या इत्यनियमः? इति। नियम इति प्राप्तं श्रौतप्रकरणात्। इत्येवंप्राप्तेऽभिधीयते 'अनियमः सर्वासाम्' इति।

यासु गतिश्रुतिस्तासामिव यासु नास्ति तासां सर्वासामेव तल्लक्षणार्थत्वेनानियमः । ननु श्रौतप्रकरणाद् युक्तो नियम इत्युक्तमितियान्यम्,—'शब्दानुमानाभ्याम्' प्रकरणभेदेऽपि शब्दात् =श्रुतेः, अनुमानात्=स्मृतेश्चानियमस्य प्रतिपादनात्, तथाहि पञ्चाग्निविद्याप्रकरणे या देवयानगतिरुक्ता सा श्रद्धातपउपासकानामपीत्युक्तम्, अपि च देवयानः पितृयानश्चेति द्वावेव गतिमार्गौ, श्रौतौ स्मृतिरपि द्वाविमौ मार्गावुपदिशति । 'शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययावर्तते पुनः' इति । इमौ हि विद्याकर्मैकलभ्यौ, नाफलमुपासनं भवतीति फलश्रुतिशून्यविद्यासु फलाकाङ्क्षायां सगुणब्रह्मविद्यात्वसामान्येन पञ्चाग्निविद्यादिफलमेव कल्पनीयम् । तस्मात् सर्वास्वेव सगुणब्रह्मविद्यासु तल्लक्षणस्य, न च तत्र विभागनियमः । किञ्च साकारोपासनयापीहैव यदि ब्रह्मसाक्षात्कारहेतुतत्कृपास्यादनियमो भवतीति बोध्यम् ३।३।३१

यदि ब्रह्मविद्यासिद्धानां देहपातानन्तरमनुत्क्रान्तिकैर्स्य देवयानमार्गेण पुनरावृत्तये ब्रह्मलोकप्राप्तिर्भे, कथं तर्हि वसिष्ठस्य निमिशापे देहपातानन्तरं पुनर्जन्म भृग्वादीनामपि वारुणे यज्ञे पुनरुत्पत्तिरित्यादिकमितिहासपुराणप्रसिद्धमुपपद्यत इत्याशङ्कायामाह—

( आधिकारिकाधिकरणम्—१८ )

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३।३।३२॥

'आधिकारिकाणाम्' परमेश्वरेण सम्प्रदायप्रवर्तनादावधिकारे नियुक्तानां वसिष्ठादीनां 'यावदधिकारं' परमेश्वरनिर्दिष्टवत्तद्-

धिकारकालं व्याप्य प्रारब्धवशादवस्थितिर्भवति। अस्मदादीनामस्मिन् देहे बाल्ययौवनजरादिवत्, तेषां देहान्तरं, पूर्वदेहावच्छेदेन कृतकर्मणामुत्तरदेहेऽपि स्मरणात्, उत्पन्नतत्त्वज्ञानस्यापि विदुषो यावदायुर्यथा प्रारब्धवशात् स्थितिरेवमाधिकारिकपुरुषाणां देहभेदेऽपि यावदधिकारं स्थितिर्नत्वेकदेहपाते मोक्षः। एवमेव सवितुर्मोक्ष श्रुत्या दर्शितः, यथासौ भगवान् सविता सहस्रयुगपर्यन्तं जगतोऽधिकारं चरित्वा तदवसान उदयास्तमयवर्जितं कैवल्यमनुभवति, 'अथ तत ऊर्ध्वं उदेत्य नैवोदेता नास्तमेता एकल एव स्थाता' (छा० ३।११।१) इति, एवं वसिष्ठादीनामपीत्याचार्यपादानुगतः पन्थाः ॥३।३।३२॥

( अक्षरध्यधिकरणम्—१९ )

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥३।३।३३॥**

'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इति वाजसनेये, 'ओमित्येतत्। एतद्ध्येवाक्षरं ब्रह्म' इति काठके, 'सतीयमिति त्रीण्यक्षराणि' इति च्छान्दोग्ये, 'एष प्रजापतिर्यद्धृदयमेतद् ब्रह्म' 'तदेतत्त्र्यक्षरं हृदयम्' इति (बृ० ५।३।१) वाजसनेये च समुल्लिखितानां दहराधिकरणवर्णितानां बृहदारण्यकवर्णितचतुर्विंशत्यक्षरगायत्रीविषयकाणाञ्च वैदिकतान्त्रिकश्रुत्युक्तानां सर्वासामुमादिदेवतानामक्षरधियाम 'अक्षरविज्ञानानाम्=मन्त्रोपासनानामित्यर्थः, 'अवरोधः' औपनिषदब्रह्मविद्यात्वेन संग्रहः, तत्र हेतुनिर्देश —

'सामान्यतद्भावाभ्याम्' इति, सामान्यं=समानता अंशतो वर्ण-साम्येन सङ्केतगम्यता, तद्भावः मन्त्रभावश्च ताभ्याम्। 'एतद्वै तदक्षरम्' इत्यस्य यथा दुर्गाबीजार्थकत्वं तदुपपादितमक्षराधिकरणे। 'हृदयम्' इत्यत्र 'हृ' इत्यक्षरेण 'यम्' इत्यस्य विगृहीतस्य 'ई+अं' इति रूपस्य 'अम्' इत्यंशेन पञ्चदशस्वर-बोधनात् 'हृ' इत्यनेन तद्योगे मायाबीजस्वरूपताप्राप्तिरित्यादौ तान्त्रिकश्रुत्युक्तमन्त्रेण समानता। ननु हृदयमित्यनेन मायाबीजं न सिद्ध्यति दकारस्य व्यवधायकत्वादनन्वयाच्चेति चेन्न, मायाबीजादिहृदयक्षरदुर्गाबीजस्यात्र बोधनात्, दकारस्यैकाक्षरदुर्गाबीजोपस्थापकतया तस्य चान्तरत्वबोधनायात्रान्तर्निवेशस्य युक्तत्वात्। सम्प्रयोजनव्यवधानस्यान्वयाबाधकत्वात्, यथा पञ्चाग्निविद्यायां प्रश्नप्रतिवचनानां क्रमभङ्गकृतव्यवधानेऽप्यन्वयस्तद्वत्। प्रणव-गायत्र्योर्गौरीब्राह्मणोक्तदुर्गाबीजस्य चैक्यम्, हृदयमित्यत्र दकारस्य व्यवधायकतया नैरर्थ्यं, किन्तु समानत्वमित्यनयोर्भेदः। दहरविद्यायामपि समानत्वं बोध्यम्। दहरविद्यया स्वातन्त्र्येण मायाबीजस्याप्युपदेशो दहराधिकरणे विचारितः। अत्र दृष्टान्तमाह—औपसदवदिति, यथा जामदग्न्येऽहीने चतूरात्रे या उपसदाख्या इष्टयः तत्र सामोत्पन्नानामपि मन्त्राणां याजुषक्रियाङ्गत्वेन अध्वर्युणोपांशुपाठेनोपसंहारस्तद्वत्,—तान्त्रिकश्रुत्युक्तोमर्तादिमन्त्रोपासनानामपि ब्रह्मविद्यात्वेनोपसंहारः। इतिकर्तव्यताभागस्य तन्त्रोक्तस्य ग्रहणेऽपि नास्य विद्यान्तरत्वमित्यपि सूचयति तदुक्तमित्यनेन, तत्=श्रुत्यन्तरोक्तमन्त्रादेः तदितर-

श्रत्युक्तकर्मणि ग्रहणम्, उक्तम्-पूर्वकाण्डे मीमांसात्वेनैकशास्त्रस्यास्य पूर्वभागे गुणमुख्यव्यतिक्रमाधिकरणे इतिशेषः। तद्यथा 'गुणमुख्यव्यतिक्रमे तदर्थत्वान् मुख्येन वेदसंयोगः' (जै० सू० ३।३।९) इति। 'उपासितव्यम्' 'उपासीत' 'विजिज्ञासितव्यम्'—इत्यादिव्यक्तोपासनविधीनामर्थवादाक्षिप्तविधीनाञ्चौपनिषदब्रह्मविद्यात्वेन, अङ्गकाण्डस्य तान्त्रिकत्वेऽपि नौपनिषदब्रह्मविद्यात्वहानिरिति तात्पर्यम् ॥३।३।३३॥

नन्वेवमप्युपनिषत्प्रतिपादितमन्त्रव्यतिरिक्तानां तान्त्रिकश्रुत्युक्तोमाद्याकारब्रह्मोपासनमन्त्राणां ग्रहणमप्रासंगिकमित्याशङ्कायामुच्यते—

( इयदधिकरणम्—२० )

इयदामननात् ॥३।३।३४॥

इयद्भिर्मन्त्रैः दुर्गाबीजमायाबीजप्रणवादिभिः आमननात् सर्वेषां तन्त्रोक्तोमाद्याकारब्रह्ममन्त्राणामामननात् आसम्यक् मननात् माहात्म्येन निश्चयात्। उपासनस्य प्रधानतया मन्त्राणामङ्गतया तान्त्रिकश्रुत्युक्तानामपि ग्रहणम्, गुणमुख्यव्यतिक्रमन्यायादितिभावः ॥३।३।३४॥

उमायाः स्वरूपमसङ्कुचमपि मन्त्रप्रसङ्गेन शिष्यबुद्धिवैशद्याय विशेषेणोपदिश्यते—

( अन्तराभूताधिकरणम्—२१ )

अन्तरा भूतग्रामवत् स्वात्मनः ॥३।३।३५॥

दुर्गाबीज-मायाबीज-गायत्री-प्रणवैरुपास्योमा　भूतग्रामवद्

भूतसमूहस्येव 'स्वात्मनः' जीवात्मनः 'अन्तरा' अन्तःस्था भवति। भूतग्रामस्यान्तःस्थत्वं हि श्रुतिरनुशास्ति—'यः सर्वेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरः यं सर्वाणि भूतानि न विदुः यः सर्वाणि भूतान्यन्तरो यमयतीति' ( बृ० ३।७।१५ ) जीवात्मनोऽन्तःस्थत्वं च, य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद यमात्मानमन्तरो यमयतीति माध्यन्दिनीया, 'यो विज्ञाने तिष्ठन्' ( बृ० ३।७।२२ ) इत्यादिरूपा च काण्वशाखीया। श्रुतौ पुंलिङ्गनिर्देशः, आत्मशब्दानुरोधात्। सर्वान्तरभूत आनन्दमयः परमात्मैवोमेतितत्स्वरूपनिर्देशः ॥३।३।३५॥

ननु यदि सर्वान्तरा उमा, भवत्वेवं, तथाप्यन्येनापि केन चित्सर्वान्तरेण भवितव्यम्,—यतो 'यत् साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तर.' ( बृ० ३।४।१–३।५।१ ) इत्येक एव प्रश्नआम्नायणोपस्तस्य कौषीतकेयकहोलस्य चाव्यवहितपौर्वापर्येण बृहदारण्यकेद्विः श्रूयते प्रतिवचनमपि द्विरेव, तथा च वेद्यभेद इतीमं पक्षमाश्रयतो युक्तिं वभिरासेन सिद्धान्तश्चाह—

अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥३।३।३६॥

'अन्यथा' वेद्यभेदानङ्गीकारे, 'भेदानुपपत्तिः' आम्नानभेदानुपपत्तिः, 'इति चेत्' यदीदमुच्यते सिद्धान्ती तन्निरस्यति, 'न' तत्र युक्तम् 'उपदेशान्तरवत्'—तत्त्वमस्युपदेशस्य विद्याया अभेदेऽपि यथा भेदस्तद्वदत्रापि विद्याया अभेदेऽपि आम्नानभेद इत्याचार्याः। यद्यप्यप्रतिपन्नस्य श्वेतकेतोर्भूय एव मा भगवान् विज्ञापयत्विति-

प्रवचनात्तृप्तिप्रार्थनं, प्रतिवचनं तु उपपत्तिभेदयुक्तमेव तदद्वयमसां-रयैकवेद्यप्रतिपादकम्, न चेहास्ति तथा, प्रष्टुः कौषीतकेयस्य कहोलस्याप्रतिपन्नत्वाभावात्, चाक्रायणस्योषस्तस्य याज्ञवल्क्य-प्रतिवचनेनानपनीतबुभुत्सस्य पुनः प्रश्नवत्प्रतिवचने श्रुतवतोऽपि कौषितकेयस्य कहोलस्य यस्तादृश एव प्रश्नस्तस्य कारण पूर्वस्माद्विशेषबुभुत्सेति प्रतीयवतो योगीश्वरयाज्ञवल्क्यस्य प्रति-वचनेन बुभुत्सितार्थो वक्ष्यमाणरूपो ज्ञायते, तथाहि यदि सर्वान्तरः परमात्मा, स्वप्रियाचरणेनैव तत्प्रीतिः कथं न भवेत् ? अथ कुतोऽपि कारणान्न भवेत्; कीदृगाचरणं कर्त्तव्यम् ? किञ्च तत्प्रयोजनम् ? इति, अस्याश्च त्रिपयत्रयगोचराया बुभुत्साया निवृत्तये याज्ञवल्क्यः सर्वान्तर इत्युक्त्वा पृष्टस्तद्व्याचष्टे—"योऽशनाया पिपासे शोकं मोहं जरां मृत्युमत्येति" इति, स्वयन्नपानादिकामनापरतन्त्रस्य जीवस्य प्रियाप्रिये सर्वान्तरस्य न स्त', एकस्य जीवस्य यत् प्रियं तदेवान्य-स्याप्रियमिति कथं स्वप्रियाचरणं तत्प्रीतिजनकं भवेत् ? स्वरूप-ततस्याशनायाद्यभावाच्चेत्यर्थः । तच्च परमात्मानमुपास्य तत्कृपया एषणात्रययुक्तः सन्न्यासी वा सन्न्यासिवत् स्वामित्वाभिमानशून्यः पुत्रस्वामिकान्नाशनवद्गृहावस्थितिनिर्वृत्तिसिद्धेरिति 'एतं वमात्मानं विदित्वा' इत्यादेरर्थः । कथं तदुपासनम् ? तदाह 'ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' निर्विद्येति यदि निःशेषलाभार्थकं तदा वेदवेदान्तादिशास्त्रविद्यां लब्ध्वेति तस्य तात्पर्य्यं, यदितु निर्वेदविनयं कृत्वेत्यर्थकं तदा लब्धे पाण्डित्ये विरक्त इति तस्य तात्पर्य्यं, बाल्येन तिष्ठासेत्—बालो मातरमिव आत्मानमाश्रयेत्, मातृमात्रपरन्तां तां

स्वयं बाल इव प्रपद्येत। एवमुपासनाप्रकारः। 'अथ मुनिः' अनेनाथशब्देन सन्न्यासानन्तर्य्यं, सन्न्यासतुल्यावस्थानन्तर्यं वा सूचितम्, 'भिक्षाचर्य्यां चरन्ति' इत्यवगतविधिप्रतिपाद्यान्तरस्यानन्तर्य्यबोधनात्। मुनिभावानन्तरं मौनामौनस्वरूप विज्ञाय, तदुभयत्र निर्वेदवान् वा ब्रह्मस्वरूपो भवति, ब्राह्मणो भवतीत्यस्यार्थः। तथा च ब्रह्मस्वरूपतैव प्रयोजनम्। नचैते विषयाश्चाकाण्डणोपस्तविचारगोचराः, तथासति वेद्यभेद एव, न तस्य दृष्टान्तत्वमुपपद्यत इत्युच्यते तथाप्युपदेशान्तरवदित्यस्यैकविषयकादुपदेशाद् विषयान्तरोपदेशस्य यथा भेदस्तद्वदित्यर्थो ग्राह्यः। यथा यावज्जीवमग्निहोत्रं जुहोतीत्यनन्तरं दध्ना जुहोतीत्यत्र जुहोतीत्यंशस्यानुवादेन दधिकरणकत्वगुणविधिः, तथा ब्रह्मणि सर्वान्तरत्वानुवादेन मातृबुद्ध्या तदुपासनमत्र विधीयते, तथाभेदेऽपि सर्वान्तरत्वं वेद्यमिति वेद्यभेदो न भवतीति सर्वमवदातम् ॥३।३।३६॥

ब्रह्मविद्याविचारसम्बन्धादुपस्थिताया यथाश्रुतव्यतिहारश्रुतौ ब्रह्मविद्यात्वाभावशङ्का निरस्यति—

( व्यतिहाराधिकरणम्—२२ )

व्यतिहारो विशिंषन्ति हीतरवत् ॥३।३।३७॥

'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इति तैत्तिरीयकाः पठन्ति, जाबालाश्च 'त्वं वा अहमस्मि भगवो देवतेऽहं वा त्वमसीति।' इत्येवं यथाश्रुतार्थपरा श्रुतिः 'व्यतिहारः' सा ब्रह्मविद्यैव, ननु परब्रह्मणि जीवत्वदृष्टिरयुक्तैव तत्कथमस्य ब्रह्मविद्यात्वमित्याशङ्का दृष्टान्तेन परिहरति 'इतरवत्' इतरा = अन्या 'तद्वनमित्युपासितव्य-

मित्यन्तोमाधिकरणविचारितपूर्वा उभाश्रुतिः, तद्वत् : सा यथा जाग्रदादिजीवाभेदमुभाया प्रतिपादयन्त्यपि ब्रह्मविद्या तथा व्यतिहारश्रुतिरपि। अयं भावः, जीवे ब्रह्माभेदं प्रतिपादयन्त्याः श्रुत्या ब्रह्मविद्यात्वं सर्वैरिष्यत एव, 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मि, न स वेद यथा पशुरेवं स देवानाम्' (बृ०१।४।१०) इति निन्दाश्रुतेः, तत्प्रतिपादिकव्यतिहारश्रुतिर्ब्रह्मणि जीवाभेदमपि प्रतिपादयतीति यदि तस्या ब्रह्मविद्यात्वं नाभ्युपगम्यते तर्हि तन्मात्रप्रतिपादिकायास्तद्वनमित्युपासितव्यमश्रुतेर्ब्रह्मविद्यात्वं न स्यादिति। केवलं='विशिंषन्ति हि' हि=प्रसिद्धौ हेतौ वा यतः तैत्तिरीयका जाबालाश्च, जीवे ब्रह्माभेदमामनन्त एव तं ब्रह्मणि जीवाभेदेन विशिष्टमेकवाक्यसम्बन्धं कुर्वन्ति, तेन न दृष्टान्तान्न्यूनत्वं परन्तु प्रकर्षः। एवञ्च ब्रह्मणि जीवाभेदस्य ध्याने उपयोगाद् दृष्टान्तश्रुतेर्यथा न ब्रह्मविद्यात्वहानिस्तथा व्यतिहारश्रुतेरपीति-योध्यम्। व्यतिहारश्रुतिः स्वात्मनि ब्रह्माभेदपरैव ब्रह्मविद्या, नतु सा ब्रह्मणि जीवाभेदपरा, स्वात्मनि ब्रह्माभेददृढीकरणार्थं एव तदंश इति पूर्वपक्षः। तस्यां गतौ श्रुतार्थपरित्यागस्यानौचित्य-मित्याशयेनोत्तरमित्यधिकरणस्वरूपोद्देशः ॥३।३।३७॥

नतु सत्तीयमिति श्रीमध्यश्रवणोत्पत्तिविज्ञानस्य मन्त्रविज्ञाना-त्मकतया कथं ब्रह्मविद्यात्वमित्याशङ्कां निरस्यति—

( सत्याद्यधिकरणम्—२३ )

सैव हि सत्यादयः ॥३।३।३८॥

अस्मिन् पादेऽध्यायान्तरे च या सविशेषं निर्विशेषं वा

यथाधिकारमुपास्यत्वेन विचारिता उमा 'सैव' सा एव, 'हि' यतः सत्यादयः=सती अद्रिजा हैमवती दुर्गा देवात्मशक्तिर्ब्रह्म वाक् परमात्मा सत्परा परमित्यादयो वैदिकश्रुतिप्राप्तशब्दास्तथा सर्वा साध्वी भवप्रीता जगद्धात्री त्रिपुरा तारा चित्येत्यादितान्त्रिकश्रुतिप्राप्तशब्दाश्च भवति, वाच्यवाचकयोरभेदविवक्षयेदम्, तथा च सर्वोयमिति शब्दस्योपास्यरूपतया तदक्षरज्ञानस्य मन्त्रार्थ वाच्यवाचकयोरभेदाद्वा तदुपस्थापकत्वाद्वेति संक्षेपः ॥३।३।३८॥

उमासतीप्रभृतिनामकदेवतानां कामनासङ्कल्पकार्य्यादीनामुपलम्भात् ब्रह्मसत्परमात्मादिशब्दप्रतिपाद्यस्य च निर्गुणत्वादिश्रुतेर्नोभयप्रकारयोरेकार्थकशब्दत्वमित्याशङ्कायामाह—

( कामाद्यधिकरणम्—२४ )

## कामादीतरत्र तत्र चायतनादिभ्यः ॥३।३।३९॥

'इतरत्र' इतरासु उमासतीवाक्प्रभृतिशब्दवाच्यासु देवतासु 'कामादि' कामनासङ्कल्पकार्य्यादिकं वेदप्रमाणकं तान्त्रिकश्रुतिस्मृतीतिहासपुराणप्रमाणकञ्चोपलभ्यते, इत्येतन्न वयं प्रत्याचक्ष्महे, किन्त्वेतद्ब्रूमः 'तत्र च' यत्रायुष्मद्भिर्निर्गुणत्वासङ्गत्वादिश्रुत्या कामाद्यभाव उद्घोष्यते ब्रह्मसत्प्रभृतिशब्दप्रतिपाद्ये तस्मिन्नर्थे च कामादिकमुपलभ्यत इति, कुतः ? 'आयतनादिभ्यः' आयतनशब्दघटितश्रुत्यादिभ्य', आयतनशब्दघटितश्रुति='सन्मूलाः सदायतनाः सत्प्रतिष्ठाः' इति (छा० ६।८।४) 'सदेव सोम्येदमग्र आसीत्' इत्युपक्रमा। ननु कथमस्या आयतनश्रुतेर्ब्रह्मणि कामाद्युपलब्धिहेतुत्वम् ? इति चेदुपसंहारवाक्येनोपक्रमवाक्यार्थस्योपस्थापनात्,

उपक्रान्तं हि सतः कामनासङ्कल्पपूर्वककार्य्यम्, नहि तदन्तरेण सर्वासां सन्मूलत्व सदायतनत्वं सत्प्रतिष्ठितत्वं भवति। ननु तच्छ्रुतेरित्याकारेण कामादिश्रुतेर्वचनमुचितमितिवाच्यं कामशब्दस्य तत्र श्रवणाभावात् तस्याः श्रुतेर्ग्रहणासम्भवात्। आयतनशब्देन लब्धवयवेन सदेव सोम्येदमग्र आसीदिति सतः, बहुस्यां प्रजायेति कामस्य, हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति सङ्कल्पस्य, नामरूपे व्याकरोदिति कार्य्यस्योपस्थापकाः सर्वे शब्दाः सगृहीताः, नन्वेवं सदादीत्येव कथं नोक्तमितिचेत्, कामादिबोधकशब्दान्तरछविमात्रपरत्वभ्रमनिवृत्त्यर्थमितिब्रूमः। आयतनशब्दानन्तरमादिपद च तद्दुत्तरश्रुतिनैरकाङ्क्ष्येण, 'सोऽकामयत' इत्यादेर्ब्रह्मप्रकरणकतैत्तिरीयकादिश्रुतेः सङ्ग्रहाय। यद्यप्ययं चिन्मात्रब्रह्मवादिनां नयोऽसकृन्निरस्तः, तथापि तमनूद्य पुनस्तन्निरसनं शिष्यबुद्धिवैशद्यार्थमिति बोध्यम्। निर्गुणत्वासङ्गत्वश्रुतयश्च पूर्वोक्तरीत्या सङ्गमनीयाः, अत एव निरुपधिपरदुःखप्रहाणेच्छारूपायाः करुणायाः सम्भवेन साकारे निराकारे च मातृभाव. सुगम एव, परमियं करुणा सर्वजीवसाधारणी तत्पूर्वरूपा, या तावदपूर्वरूपा तत्स्वरूपमसकृदुक्तमिति दिक् ॥३।३।३९॥

अथैतदुपासनप्रसङ्गेन यज्ञादिरूपोपासनाश्रितो विचारः प्रस्तूयते—

( आदराधिकरणम्—२५ )

## आदरादलोपः ॥३।३।४०॥

वैश्वानरविद्याखण्डे श्रूयते—"अथेह क्षुधिता बाला मातरं

पर्य्युपासते । एवं सर्वाणि भूतान्यग्निहोत्रमुपासते' ( छा० ५।२४।५ ) इत्यत्राग्निहोत्रपदं प्राणाग्निहोत्रपरं, प्रसिद्धाग्निहोत्रपरञ्च द्वयोरेव प्राप्तेः, प्राणाग्निहोत्रप्रकरणात्, 'स य इदमविद्वानग्निहोत्रं जुहोति' (छा० ५।२४।१) इति पूर्ववाक्यस्य द्विविधाग्निहोत्रबोधकत्वाच्च। वैश्वानरविद्यामविदुषः प्रसिद्धाग्निहोत्रकर्म्म णोऽनिन्दितत्वे विद्यास्तुतेरसम्यक्त्वापत्तेः । अथ। य एवं विद्वानग्निहोत्रं जुहोतीति स्तुत्या अनन्तरपूर्वोपात्तस्य द्विविधाग्निहोत्रस्य हवनकर्म्मतया ग्रहणौचित्यात् । द्विविधाग्निहोत्रं एव मातृभावस्य दृष्टान्ततया मातृभावेन ब्रह्मदृष्ट्या द्विविधाग्निहोत्रस्य कर्त्तव्यत्वाभ्युपगते । न च मातृभावेन ब्रह्मदृष्टिर्वैश्वानरविद्या च मिथो भिद्येते, वैश्वानरविद्याया। स्वस्मिन् सर्वात्मभूतब्रह्मदृष्टिरूपत्वादिति वाच्यम्, सर्वात्मभूते ब्रह्मण्यपि मातृभावस्यानपायात्, तद्भाववेदनप्रकर्षस्य तत्कृपासापेक्षत्वाच्च। तथाहि वैश्वानरविद्यायाः श्रवणमात्रेण विश्वात्मनि न सर्वात्मभावसाक्षात्कारो भवति नहि यावत् तत्साक्षात्कारस्तावदात्मनि परिच्छिन्नत्वदृष्टिर्नापैति, कथं पुनस्तत्साक्षात्कारो विना तत्करुणामित्यलब्धमनोरथतया क्षुधिता इव उपायान्तरानभिज्ञतया बाला इव कर्म्मरताः श्रवणजज्ञानेनाग्निहोत्राग्निमेव सर्वात्मभूतं परं ब्रह्मेति मन्यमाना मातृभावेनोपासते करुणालाभाय। यथाहि माता बालानामधिकारविमर्शिनी कञ्चिदङ्के कृत्वा स्तन्यं पाययति, कञ्चनं गव्यदुग्धमशितुमर्पयति कमप्येवमेवमग्निरपि ब्रह्मदृष्ट्या सर्वात्मतया मातृभावेनाग्निहोत्रेणोपासितः, ध्रुवं वैश्वानरविद्यां कमपि यज्ञेन मननेन, कमपि च ध्यानाद्विधया योज-

यति, ध्यानप्रकर्षेणान्यस्य तत्साक्षात्कारमित्यग्निहोत्रेऽपि वात्स्येन तिष्ठासेदिति विधिरनुमावितो मातरमित्युपमानपदनिर्देशिन्या भगवत्या श्रुत्येति विदांकुर्वन्तु श्रीमन्तः। प्राणाग्निहोत्रेऽपीयं गतिराश्रयणीया। 'यथेह क्षुधिता' इति मन्त्रस्य 'सर्वाणि भूतानि' इत्येपप्रतीको विचारित', प्रथमाध्याये द्वितीयपादे शब्दविशेषादिति सूत्रभाष्ये। एवं ब्रह्मणि मातृभाव पुरस्कृत्यैव भ्रूण इव स्वस्मिन् ब्रह्माभेददृष्टिमाश्रयतो यदग्निहोत्रद्वय तत् साधीयः। मातृभावश्च जननपोषणकरुणास्नेहमयानन्दः। इत्येवं रूपेण क्रियमाणमग्निहोत्र कर्म्मतया लोपनीयं नवा ? इति संशये, कर्म्मत्वेन हेयत्वाल्लोपनीयमितिप्राप्ते 'आदरादलोप' इत्युच्यते। अग्नौ ब्रह्मदृष्ट्या मातृभावेनाग्निहोत्रोपासने आदरात् गृहिणामधिकारविशेषयुक्तानां नित्यत्वेनैव कर्त्तव्यत्वादनुरागात्, न तु स्वर्गादिफलार्थित्वात्, 'अलोप.' लोपो न युक्त', तस्य कर्मणो बन्धहेतुत्वेन हेयत्वाभावात्, ये तु प्रसिद्धाग्निहोत्रे नाधिकारिणः तेषामत्र प्रसक्तिरेव नास्तीति बोध्यम्। प्राणाग्निहोत्रे तु सर्वेषां द्विजानां सर्वेष्वाश्रमेष्वधिकारात् सर्वत्र तस्यालोप इत्युत्सर्गः ॥३।३।४०॥

अत्रापवादमाह—

उपस्थितेऽतस्तद्वचनात् ॥३।३।४१॥

'अतः' प्राणाग्निहोत्रप्रकरणस्थात्, 'तद्वचनात्' "तद् यद्भक्तं प्रथममागच्छेत्" इत्याम्नानात्, 'उपस्थिते' प्राप्ते भक्ते, प्राणाग्नि-

ङ्गोत्रस्यालोपः; न तु तद्प्राप्तावपि प्रतिनिधिभूतेन जलादिना तदनुष्ठानम्, विधिविषये हि मुख्यालाभे प्रतिनिधिर्न तु निष्यविषये, इति भावः ॥३।४।४१॥

कर्मप्रसक्तं विचारान्तरमाह—

( तन्निर्धारणाधिकरणम्—२६ )

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॥३।३।४२॥

'तन्निर्धारणानियमः' तानि बुद्धिस्थानि निर्द्धारणानि= "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादीनि कर्माङ्गाश्रयाण्युपासनानि, तेषां तन्निर्द्धारणानाम्, अनियमः = नियतकर्त्तव्यत्वं नास्ति, कुतः 'तद्दृष्टेः' अनियमदृष्टेः=श्रुतावनियमदर्शनात्, "तेनेभौ कुरुतो यश्चैवं वेद यश्च न वेद" इत्युपासनानुपासनरूपयोर्ज्ञानाज्ञानयोः कर्मश्रवणात्, यदि तेषां नित्यत्वं स्यात् कथं तदभावे क्रतुलक्षणं प्रधानं कर्म समाप्येत साङ्गस्य वैदिककर्मणः फलजनकत्वात्। सत्येवम्, अनियतानां तेषां केनचित्प्रधानकर्मफलभिन्नेन फलेन भवितव्यम्, तदभ्युपेत्याह 'पृथक्' इति, पृथक् फलम् 'हि' हिः प्रसिद्धौ, अवधारणे वा "यदेव विद्यया करोति तदेव श्रद्धया चोपनिषदा वीर्यवत्तरं भवति" इति श्रुतिप्रसिद्धं फलम्, 'अप्रतिबन्धः' प्रबलकर्मान्तरेण बाधाभावः, इदमेव वीर्यवत्तरत्वम्। 'विद्या' यज्ञविद्या, 'उपनिषत्' उद्गीथो-

पासनम्। अत्र, उद्गीथोपासनं क्रत्वङ्गमिति पूर्वपक्षः। न क्रत्वङ्गं किन्त्वङ्गाश्रितं कर्मान्तरमिति सिद्धान्तः॥३।३।४२॥

उद्गीथसम्बन्धेन तदनधिकारिणीनां स्त्रीणां स्मरणादुपस्थितानां तासां ब्रह्मविद्याधिकारोऽस्ति न वेति शिष्यजिज्ञासामन्तरा निवर्त्तयति—

( प्रदानाधिकरणम्—२७ )

## प्रदानवदेव तदुक्तम् ॥३।३।४३॥

स्त्रीणां ब्रह्मविद्यायामधिकारोऽस्ति न वेति संशयः, सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्तीति नृसिंहतापनीयश्रुत्या यजुःशब्दलक्षिते वेदसामान्ये तासामनधिकार इत्येका कोटिः, श्रुतश्च गार्गीमैत्रेय्योस्तत्राधिकार इति द्वितीया कोटिरुपतिष्ठते, न च ब्रह्मवादिनीनामृषिकाणां तत्राधिकारेऽपि 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा' इति श्रीमद्भागवतवचनात् सामान्यतः स्त्रीणामनधिकार एव प्राप्तः, इति वेदुमाद्युपासनप्रकारस्य तान्त्रिकस्याप्यौपनिषद्ब्रह्मविद्यात्वेन संग्रहात् तत्र तासामधिकारे बाधाभावात्, एवञ्चेत् पुनरेकैव कोटिः, कुतः संशयः? आह, अस्ति तथापि संशयहेतुः स्त्रीणामस्वातन्त्र्यात्, 'न स्त्री स्वातन्त्र्यमर्हति' इतिस्मरणात्। अत्राह, नास्त्यधिकार इति, 'नास्ति स्त्रीणां पृथग् यज्ञो न व्रतं नाप्युपोषितं। पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते' इति स्मरणात्। श्रुतिरपि स्त्रीणां मूल्यं निर्दिशन्ती तेषां क्रेयत्वमाह—'शतमधिरथं शोभनामशोभनां वा कन्यां प्रति' इतिशाबरभाष्येण षष्ठाध्याय-

प्रथमपादस्य पञ्चदशसूत्रसम्बन्धिनोद्धृता । तेन न स्त्रीणां धनस्वाम्यमस्ति कर्म्मस्वाम्यं वा तान्त्रिकप्रकारेणोपासनञ्च धनसाध्यमिति, क्रीताक्रीतयोर्भेदबोधकशास्त्राभावाद् अक्रीताघटितविधिवाद्स्यासिद्धेश्च । एवं प्राप्ते उत्तरं पठति 'प्रदानवत्' इति, तद्धि धनं न क्रयमूल्यं, मूल्यत्वे उत्कृष्टापकृष्टपण्यभेदेन मूल्यभेदः स्यात्, अत्र तु शोभनाशोभनयोरेकएव पणः तस्मात् पणदानमिदं 'प्रदानवदेव' अदृष्टार्थदानं हि प्रकृष्टदानमिति प्रदान दृष्टफलकतया तद्भिन्नमपि तद्वदेव विहितं कर्म्म ननु क्रयमूल्यार्पणमित्येवकारार्थः। अतस्तासां वैदिकयागेऽप्यधिकारः । 'तदुक्तम्' तत्=स्त्रीणां यागाधिकारित्वम् उक्तं पूर्वभागे 'जाति तु बादरायणोऽविशेषात् तस्मात् स्त्र्यपि प्रतीयेत, जात्यर्थस्याविशिष्टत्वात्' इति ( जै० सू० ६।१।८ ) इति 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इति श्रुतिरत्र जात्याश्रितप्रमाणमुन्नेयम् । तस्मात्स्त्रीणां निरुक्त ब्रह्मविद्यायामस्त्यधिकारः ॥३।३।४३॥

प्रासङ्गिकमुक्त्वा प्रकृतं विद्याविचारमारचयति—

( लिङ्गभूयस्त्वाधिकरणम्—२८ )

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥३।३।४४॥

द्विविधं खलु विद्याश्रितमुपासनं भवति रूपवद्भूताङ्गकं तदनङ्गकं च, प्रसिद्धाग्निहोत्रवत् प्राणाग्निहोत्रमपि प्रथमान्तर्गतम्, भक्ताहुत्यङ्गकत्वाचास्य, वैश्वानरविद्यात्मकमुपासनं द्वितीयं श्रवणमननिदिध्यासनजपादिरूपमुपासनान्तरमपि तथेति निश्चितम् । यत् खलु रूपवद्भूताङ्गकं तदनङ्गकं वेतिसंशयास्पदं भवति,

तत्र तत्त्वावधारणार्थमधिकरणमिदम्। अत्र विचार्य्यं वाजसनेयिनामग्निरहस्यवाक्यम्, तद् यथा 'नैव वा इदमग्रे सदासीत्' इति ब्राह्मणे मनोऽधिकृत्याम्नातम्, 'तत् षटत्रिंशत् सहस्राण्यपश्यदात्मनोऽग्नीनर्कान् मनोमयान् मनश्चितः' इत्यादि, तथैव 'वाक्चित' प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्म्मचितोऽग्निचितः' इति साम्पादिकपृथगग्निप्रत्यायकम्। अत्र संशयः, किमेते भावनाविशेषेण भाविता अग्नयः क्रत्वङ्गभूता उत केवलं भावनामयाः ? प्रथमकल्पे अग्निभावनाङ्गकक्रतुरूपोपासनरूपवद्भूतहविराद्यङ्गकम्, द्वितीयकल्पे च भावनामात्ररूपत्वात् तदनङ्गकम्। किं तावत् प्राप्तम् ? अग्निचयनप्रकरणात् क्रत्वङ्गमग्निविशेषा इति, पूर्वपक्षेऽस्मिन् सिद्धान्तिनो हेतुर्नेया प्रतिज्ञा—भावनामया एवाग्नयो न क्रत्वङ्गमिति। कुतः 'लिङ्गभूयस्त्वात्' भूयांसि हि लिङ्गान्यस्मिन् ब्राह्मणे केवलभावनामयत्वमेषां प्रकाशयन्ति 'तद् यत् किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति तेषामेव सा कृतिः' इति 'तान् हैवानेवं विदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते' इत्येवं प्रकाराणि दृश्यन्ते। तद्धि लिङ्गं प्रकरणाद् बलीयः। 'तद्धि' तत् = प्रकरणाद् बलीयस्त्वम्, पूर्वभागे लिङ्गात् प्रकरणस्य दौर्बल्यसूत्र उक्तमित्यर्थः, उक्तम् इत्यस्य पूर्वसूत्रादनुकर्षोऽपिशब्देन द्योतितः। दौर्बल्यसूत्रञ्च 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' ( जै० सू० ३।३।२४ ) इति। इत्यमेव भगवदाचार्य्यपादसरणिरेवमग्रेऽपि ॥३।३।४४॥

इमं पक्षमाक्षिपति—

**पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥३।३।४५॥**

पूर्वविकल्पः प्रकरणात् क्रिया स्यात् मानसवदिति योजना। 'पूर्वविकल्पः' पूर्वस्मिन् = इष्टकामिश्चितेऽग्नौ, विकल्पः = विविध-भावनाया उपदेशः, 'प्रकरणात्' वास्तवाग्निचयनप्रकरणपठितत्वात्, 'क्रिया' क्रत्वङ्गमेव, न तु स्वतन्त्रं भावनारूपमुपासनम्। तथाहि—शतायुषः पुरुषस्यायुर्दिनानि षट्त्रिंशत्सहस्रसंख्यानि भवन्ति दिनभेदभिन्नानां मनोवृत्तीनामसंख्यत्वेऽपि एकैकदिनावच्छिन्न-वृत्तित्वेन सामान्येनैवमेकैकमेकैकत्वपेक्षाबुद्धिजा षट्त्रिंशत् सहस्रावसंख्या मनोवृत्तीनां सम्पद्यते, एवं वागादिवृत्तीनामपि सख्या, ताश्च वृत्तयः प्रत्येकं मनश्चिद्वाक्चिदाद्यग्नित्वेन ध्याताः वास्तवाग्निहविराद्यङ्गकक्रियोपकारका इति तद्ध्यान विधीयत इतिभावः, ननु प्रकरणस्य लिङ्गापेक्षया दौर्बल्येन, लिङ्गै-र्ज्ञायते भावनैवेयमित्युक्तं तत् कथमयमाक्षेप इत्यत आह 'मानसवत्' यथा दशरात्रयागस्याविवाक्यसञ्ज्ञके दशमेऽहनि पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादन-हवनादीनि मानसान्येवेति मानसोऽपि ग्रहकल्पः कर्मप्रकरणात् कर्माङ्गं भवति तद्वत् ॥३।३।४५॥

आक्षेपे हेत्वन्तरमाह—

**अतिदेशाच्च ॥३।३।४६॥**

'षट् त्रिंशत् सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान् यावा-

नसौ पूर्वः' इत्यतिदेशवाक्येऽपि तयोः समानतामवगमयति, समानता चात्र भावितानेः प्रकृताग्निवत् क्रत्वङ्गत्वेनैवोपपद्यते ॥३।३।४६॥

समाधत्ते—

## विद्यैव तु निर्द्धारणात् ॥३।३।४७॥

पक्षव्यावर्त्तकस्तुशब्दः । विद्यात्मका एवैते मनश्चिदाद्योऽग्नयः स्वतन्त्रा एव, विद्या ध्यान भावनाचैकोऽर्थोऽत्र ग्रहीतव्यः, तथा च मनश्चिदाद्यग्निभावनात्र प्रधान न तु क्रत्वङ्गम्, कुतः निर्धारणात्—'ते हैते विद्याचित एव' इति, 'विद्यया हैवैत एवं विदश्चिता भवन्ति' इति च ॥३।३।४७॥

स्मारयन्नाह—

## दर्शनाच्च ३।३।४८

प्रदर्शितत्वाच्च, लिङ्गभूयस्त्वरूपहेतोरितिशेषः । इमे सूत्रे अन्यथापि व्याख्यायेते, निर्धारणादित्यस्य श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वन्यायेन लिङ्गभूयस्त्वेनावधारणादित्यर्थः । दर्शनाच्चेत्यस्य दर्शनाच्च निर्द्धारणादिति पूर्वसूत्रानुकर्षेण पर्य्यवसितोऽर्थः—दर्शन श्रुतिः, या पूर्वसूत्रभाष्ये दर्शिता सैव । दर्शनशब्दस्य श्रुत्यर्थकत्वेन सूत्रेष्वसकृत् प्रयोगात् तत् परित्यागो नोचित इति ध्येयम्॥३।३।४८॥

अत्राशङ्कते—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥३।३।४९॥

भावनामयाग्निषु क्रत्वङ्गत्वस्य 'न बाध' नाभाव', विद्यारूपत्वेन यत् स्वातन्त्र्यमुक्तं तस्यैव बाध इत्यर्थः, 'श्रुत्यादिबलीयस्त्वात'

श्रुत्यादीनां बलीयस्त्वात्=उत्तरापेक्षया पूर्वस्य बलवत्त्वात्, तेन श्रुतेः सर्वतोबलवत्त्वादित्यर्थः । श्रुतिस्तु विधायकश्रुतिः, मनश्चिदादिसाम्पादिकाग्निविषयो लिङादिप्रत्ययघटितश्रुतिप्राप्तो विधिर्न श्रूयते, क्रियात्मकक्रतुविधिश्च तत्प्रदेशोऽश्रुतोऽपि प्रदेशान्तरे श्रूयते, क्रियात्मकक्रतवश्चेष्टकाचिताग्न्यव्यभिचारिणो भवन्ति, क्रतुश्रुतेर्बलीयस्त्वादेव तत्प्रकरणीयेषु मनश्चिदाद्यग्निषु क्रत्वङ्गत्वं भविष्यति भावनाविषयविधेः प्रदेशान्तरेऽप्यभावात्, 'क्रतुं कुर्वीत' 'ध्यायेत्' 'उपासीत' इत्यादि रूपा प्रदेशान्तरीया विधयश्च न भावनामयाग्निसापेक्षा, तस्मात् प्रदेशान्तरस्थक्रतुविधेर्बलवत्त्वात्तन्नियताग्निप्रकरणमध्ये पठितानामेतेषामग्नीनां तदङ्गत्वं न लिङ्गेन बाधितुं शक्यते, तस्य वायुर्वैक्षेपिष्ठा देवतेतिवत् तदङ्गतायां स्तुतिरूपत्वात् । विद्याचित एवेत्यादावेवशब्दश्च स्वायोगव्यवच्छेदकः । तेन न प्रकृताग्नेर्बाध । क्रतोर्वीर्य्यपरत्वकामैस्तदीयप्रकृताग्नौ मनोवृत्त्यादिभावनानियमेन कर्त्तव्येति क्रियात्मकक्रत्वङ्गत्व तेषां निर्बाधम् ॥३।३।४९॥

त्याशङ्कां निरस्यति—

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च

तदुक्तम् ॥३।३।५०॥

'अनुबन्धः='क्रियात्मकक्रतूपकारिणामाधानचयनग्रहस्तोत्रशस्त्रादीनां हीनः सम्बन्धः, हीनत्वं च वास्तवसम्बन्धशून्यत्वम्, यथा—'ते मनसैवाधीयन्त, मनसैव ग्रहा अगृह्यन्त, मनसास्तुवन्, मनसाशंसन्, यत् किञ्च यज्ञे कर्म क्रियते, यत् किञ्च यज्ञियं

कर्म तन्मनसैव, तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमेव क्रियते' इत्यादौ वस्तुभूताना यज्ञाभावेऽपि चिन्तनमात्रेण सम्बन्धात्, सोऽपि मनोवृत्तिरूपेष्वग्निषु न तु क्रियाङ्गेषु, एवंरूपस्याग्न्यादेः कथं क्रियात्मकक्रत्वङ्गत्वं भवेत्,—अनुबन्धादिभ्य इ यज्ञादिपदात् श्रुति लिङ्गया परिग्रह श्रुतिश्च एवकारगर्भा दर्शिता । नचैवकारः स्वायोगव्यवच्छेदफलक, मुख्यार्थस्यागानौचित्यात्, केवल श्रुत्यैव भावनाया॰ प्राप्तेश्च । लिङ्गञ्च दर्शितम् । निदर्शनमाह 'प्रज्ञान्तरवत्' इति, यत्रैवरूपता तस्मिन् प्रज्ञान्तरे वैश्वानरविद्यादौ, 'पृथक्त्वम्' क्रियाङ्गाद् भेद क्रियाङ्गत्वबाधो यथा दृष्ट स्तथात्रापि । सति विरोधे श्रुत्यादेर्बलीयस्त्वविचार, न चास्ति कश्चिद् विरोधः भिन्नविषयत्वात् । एतदेवोक्त 'प्रज्ञान्तरवद् दृष्ट' इत्येतेन । को दृष्ट ? पूर्वसूत्रानुवृत्तो 'बाध' इति दर्शितम् । एतच्च न्यायेनापि समर्थितमित्याह 'तदुक्तम्' इति । पूर्वभागे उक्तम्—'फलार्थत्वात्तेनेतिचेन्न वर्णत्रयसंयोगात्' ( जै० सू० ८।१।४।९ ) इति । तथाहि अवेष्टिर्नाम काचिदिष्टि सा राजसूय प्रकरणे पठिताऽपि तस्माद्धुत्कृष्टान्या भवति प्रधानभूता,—यतस्त नास्ति त्रैवर्णिकानामधिकार, राजसूयकत्वङ्गभूतायेष्टिश्च केवल राजाधिकारिका, ब्राह्मणवैश्ययोर्द्विजयोरपि तत्रानधिकारात्, राजा राजसूयेन यजेतेतिश्रुत । यथायमवेष्टिभेदो न्यायसिद्ध, तथा मनश्चिदादाग्निप्रकृताग्न्योर्भेदश्च, एकश्चिन्तनमयो विद्यात्मक प्रधानभूत, परश्चेष्टकाचित्त प्रसिद्धोऽग्नि क्रत्वङ्गमिति ॥३।३।५०॥

मानसवदित्यनेन चिन्तनस्यापि क्रियात्मकक्रत्वङ्गत्वमुपदर्शितम्, प्रकृते तत् परिहरति—

**न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः॥३।३।५१॥**

ये तावदस्या विद्यायाः क्रियात्मकक्रत्वङ्गत्वबाधका हेतवो दर्शितास्तानविगणय्य 'सामान्यात्' मानसत्वसामान्येन, 'उपलब्धे' मनश्चिदादिचिन्तनस्य, 'न' क्रियात्मकक्रत्वङ्गत्वं न युक्तम्, 'हि' यतः मृत्युशब्दसामान्यात् 'मृत्युवत् लोकापत्तिः' मृत्युशब्दोपस्थापितस्यैकस्येव तच्छब्दोपस्थापितस्यान्यस्य लोकापत्ति=परस्य लोकाधिकारः 'न' न भवति 'स वा एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः' इत्यादित्यमण्डलस्थः पुरुषो मृत्युशब्देनोच्यते, तथा, मृत्युर्यम', 'किंस्विद् यमस्य कर्तव्यम्' इति 'मृत्यवेत्वा ददानि' इति पित्रोक्तस्य नचिकेतसोविमर्शभूते, आदित्यमण्डलस्यपुरुषस्य मृत्युशब्दोपस्थाप्यत्वसाम्येऽपि तस्य लोकापत्तिः यमलोकाधिकारो यथा न प्रतीयते तद्वदित्यर्थः। येन केनापि साधर्म्यमात्रं प्रमाणबाधिततद्धर्मस्यापि लिङ्गं भवतीति युक्तिरसङ्गतेत्यभिप्रायः॥३।३।५१॥

अस्य क्रियात्मकक्रत्वङ्गत्वाभावे युक्त्यन्तरमाह—

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः॥३।३।५२॥**

'परेण' अन्येन-वैश्वानरविद्याखण्डेन 'शब्दस्य' अग्निरहस्य-ब्राह्मणस्य,='ताद्विध्यम्' तद्विधत्वं ध्यानरूपोपासनपरत्वं बोध्य-र्मतिशेषः,तथाच नेदं क्रियात्मकक्रत्वङ्गमपितु भावनारूपं प्रधानमेश

नन्वग्निविषय कथमयमनुबन्धो भवेदित्यत आह, 'भूयस्त्वात्त्वनुबन्ध' इति, भूयस्त्वात् अधिकारिबाहुल्यात्,—अधिकारिणां बहुविधत्वात्, अनुबन्ध = माभूदग्निविषय, वस्तुतोऽसम्बद्धानां धर्मान्तराणां ध्यानज सम्बन्धोऽस्ति, प्रकारभेदोऽयमधिकारिभूयस्त्वात्। वैश्वानरविद्ययोपासनं श्रेयसाम्, अग्निरहस्यविद्यया च श्रेयसाम्, तत्रापि मनश्चिद्वाक्चिदादिरूपेणावान्तरभेदेन बहुधा सम्बन्धनिर्देशोऽप्यधिकारिभेदादिति ध्येयम् ॥३।३।५२॥

ननु यदि मनश्चिदादयो न क्रत्वर्थाः, प्रधानतया पुरुषार्था इति प्राप्तम्, अथ कोऽयं पुरुषः ? उपासक एवेति चेत्, स एव कः ? यदि शारीरः परत्र फलभोक्ता, तस्यैवासिद्धेर्वैफल्यमुपासनस्येत्याक्षेपमूलं देहात्मवादं निराचिकीर्षुस्तत्पक्षमादावुपन्यस्यति, पूर्वपक्षग्रहमन्तरेणोत्तरपक्षस्य दुर्ग्रहत्वात्—

( ऐकात्म्याधिकरणम्—२९ )

## एक आत्मनः शरीरे भावात् ॥३।३।५३॥

'एके' लौकायतिका मन्यन्ते, परलोकहितं सर्वविधमुपासनं विफलम्, 'आत्मनः शरीरेऽभावात्' अभावादित्यकारो लुप्तः, 'शरीरे' दृश्यमानदेहे, आत्मपदार्थस्य, 'अभावात्' वृत्तित्वविरहात्—स्थूलदेहावच्छेदेन वृत्तित्वाभावादिति पदद्वयार्थः। नहि आत्मा नाम कश्चिदन्यश्चेतनस्वभावो वर्तते यः स्थूलशरीरवृत्ति पश्चात् शरीरनाशेऽपि फलं भुञ्जीत, किन्तु स्थूलशरीरमेवात्मा। नहि स्वं स्वस्मिन् वर्तते, तस्य नाशादेव मोक्षः। न तद्व्य-

मुपासनादिकं किञ्चिदपेक्षणीयमस्ति। एतेनैतदुक्तं भवति, किण्वादिभ्यो मदशक्तिवत् शरीरभावमुपपद्यमानाद् रजोबीजादेव चैतन्यं जायते न तदर्थमात्मान्तरापेक्षेति ॥३।३।५३॥

आक्षेपमिमं निराकरोति—

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ३।३।५४

'न तु' इति सूत्रमध्यस्थं निपातद्वयं प्रथमं पठनीयम्, पूर्वपक्षव्यवच्छेदादिरतदर्थः, 'व्यतिरेकः' चेतनस्वभावादात्मनः शरीरे भेदः, सिध्यति, कुतः 'तद्भावाभावित्वात्' तस्य=शरीरस्य, भावे=सत्त्वे अभावित्वात्=अभावात् चैतन्यस्य, उपलब्धिवत्=उपलब्धेः जाग्रद्बोधस्येव, यथा जाग्रद्बोधस्य शरीरसत्त्वेऽप्यभावः स्वप्नादौ, तथा चैतन्यमात्रस्य शरीरसत्त्वेऽपि मरणोत्तरमभावात् ·न तस्य चेतनस्वभावात्मस्वरूपत्वं स्वभावस्य यावद्द्रव्यभावित्वात्। यद्वा व्यतिरेकशब्दादेव पूर्वपक्षव्यच्छेदो लब्धः, 'न तु' इत्यस्य यथासन्निवेशमेवान्वयः, 'व्यतिरेकः' स्थूलशरीरे आत्मनः उपासकजीवस्य विशेषेण अतिरेकः=भेदः, 'तद्भावाभावित्वात्' तद्भावेन=तस्य स्थूलशरीरस्य भावेन अभावित्वात्=भाववत्त्वविरहात् स्थूलशरीरसत्तानियतसत्ताकत्वाभावादित्यर्थः, तथात्वे मृतशरीरेऽपि चैतन्यं स्यात्, बाल्यादिभेदेन देहभेदाद् बाल्यदृष्टस्य स्थाविरे स्मरणानुपपत्तेश्च, एवमयं विशिष्टो भेदः, 'न तूपलब्धिवत्—' अपीति पूरणीयम्, आस्तामात्मनो भेदाभेदयोः उपलब्धिसादृश्यमपि स्थूलशरीरे नास्तीत्यर्थः। उपलब्धिः=बुद्धिः, 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा

शेमुषी मति' इति कोषात्। उपलब्धौ चेतनभेदे सत्यपि उपासनस्य जीवरूपस्य बुद्ध्युपाधिकत्वात्-उपाध्यशमादाय न तत्र भेद, उत्क्रान्तिश्च तत्प्रयुक्ता, यावदुपलब्धिस्थितिस्तावदेव जीवत्व न तु स्थूलशरीरस्यानुरोध, तस्मादस्यात्मत्व कथमपि न सम्भवतीत्याशय । सत्येव जीवस्वरूप यदुक्तपूर्व तदनुबन्धनमुपासन, तत्फलभोक्ता चासौ जीव, नातो विफलमुपासनमिति तात्पर्यम् ॥३।३।५४॥

प्रकृतप्रतिपादनप्रतिबन्धिका बलवज्जिज्ञासा निवर्त्ये प्रकृत विचारमारभते—

( अङ्गावबद्धाधिकरणम्—३० )

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥३।३।५५॥

अङ्गावबद्धा = उद्गीथावयवप्रणवादिविषया च प्रत्यया उपासना प्रतिवेद शाखाभेदेषु विहिता ते तत्तच्छाखागतेष्वेवो-द्गीथादिषु भवेयुरथवा सर्वशाखागतेष्विति सशये, स्वशाखागते ष्वेवोद्गीथादिष्विति प्राप्तम् सन्निधानात्। 'उद्गीथमुपासीत' इत्यादिरूपेण उद्गीथत्वस्वरूपसामान्यधर्मेण विहितानां विशेषा काङ्क्षाया सन्निहितेन सन्निकृष्टेन स्वशाखास्थत्वरूपविशेषेणा काङ्क्षानिवृत्ते, यथा हि शुक्ला गामानयेति सामान्येन नियुक्त सन्निहितामेव काञ्चिदानयति तद्वत्, इति प्राप्तेऽभिधीयते, तु शब्द पक्षान्तरद्योतक 'न तावदेते प्रत्यया प्रतिवेद स्वशाखा-स्येव व्यवस्थिता, उद्गीथत्वादिना सामान्येन श्रुते, नहि लौकिक

दृष्टान्तेन वेदो नियन्तुं शक्यते सन्निधानापेक्षया श्रुतेर्बलीयस्त्वात्, तस्मात् सर्वशाखागतेष्वेवोद्गीथादिष्वेवं प्रत्यया इति ॥३।३।५५॥

नन्वस्ति शाखाभेदेन प्रत्ययभेदः, संख्योपसंग्रहाधिकरणे दर्शनादित्यत आह—

मन्त्रादिवद् वाऽविरोधः ॥३।३।५६॥

वाकारः शङ्काव्यावर्त्तकः। आदिपदात् कर्म्मगुणयोः परिग्रहः। शाखान्तरोत्पन्नानामपि मन्त्रादीनां शाखान्तरे विनियोगः प्रसिद्धः। यजुषां कुटरुरसीति मन्त्रस्याभावेऽप्यश्मादाने तस्य, मैत्रायणीयानां प्रयाजहवने विध्यभावेऽपि तस्य कर्म्मणः, यजुषामग्नीषोमीयपशुमात्रविधानेऽपि षडङ्गस्य गुणस्य च शाखान्तरप्राप्तस्य विनियोगो न विरुध्यते, तथा शाखान्तरविहितोपासितरूपप्रत्ययानामपि शाखान्तरीयतदाश्रये विनियोगे नास्ति कश्चिद् विरोधः। संख्योपसंग्रहाधिकरणोक्ते विशेषो भावभेदप्रयुक्तो वक्ष्यते ॥३।३।५६॥

उपासनान्तरेऽपि संशयमपाकरोति—

( भूमज्यायस्त्वाधिकरणम्—२१ )

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥३।३।५७॥

'प्राचीनशाल औपमन्यवः' (छा० ५।११।१) इत्यस्यामाख्यायिकायां व्यस्तस्य समस्तस्य चोपासनं श्रूयते, व्यस्तोपासनं तावत् 'औपमन्यव कं त्वमात्मानमुपास्से' इति राज्ञा पृष्ट

औपमन्यव आह 'दिवमिति' राजा प्रत्युवाच 'एषं वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्स इति तत्फलं च 'अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमात्मानं वैश्वानरमुपास्ते' इत्यादौ, तथा समस्तोपासनमपि—'तस्य ह वा एतस्यात्मनो मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः' इत्यादिरूपे राज्ञ उपदेशे। अत्र संशयः—किमिह व्यस्तसमस्तयोरुभयोरेवोपासनं विहितमुत समस्तस्यैवेति, किमत्र प्राप्तम्? उभयोरिति, प्रत्येकं फलविशेषश्रवणात्। इत्यत्राभिधीयते 'भूम्नः' समस्तस्य, 'ज्यायस्त्वम्' प्रधानत्वं व्यस्तसमस्तयोरुभयोर्मध्ये प्रधानत्वम्, तथा च तदुपासनमेवात्र विहितम्। 'क्रतुवत्' दर्शपूर्णमासादियागवत्, यथा दर्शपूर्णमासादिक्रतुः साङ्गप्रधानः सामस्त्येनैक एव प्रयोगो विधीयते न तु प्रयाजाद्येकैकाङ्गमात्रप्रयोगोऽपि, तद्वत्। 'तथाहि दर्शयति' 'मूर्धा ते व्यपतिष्यत्' इत्यादिना व्यस्तोपासनस्य हेयत्वं 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इत्यादिना समस्तोपासनस्य सर्वात्मभावत्वप्रतिपादनेनोपादेयत्वमिति ॥३।३।५७॥

नन्वेवं सर्वस्वरूपं हि ब्रह्म, यद्विषयकमुपासनं विधीयते तत् सर्वमेव ब्रह्मगोचरमिति वेद्यैक्यात् सर्वत्र विद्यैका स्यादिति शङ्कायामधिकरणान्तरमाह—

( शब्दादिभेदाधिकरणम्—३२ )

**नाना शब्दादिभेदात् ॥३।३।५८॥**

सत्यपि परमार्थतो वेद्यैक्ये विद्या उपासनारूपा 'नाना' बहु-

विधैव, 'शब्दादिभेदात्' शब्दः=स्पष्टविधिवाक्यं विध्याक्षेपकवाक्यञ्चेति द्वयम्, आदिपदात् फलभेदोपासकदृष्ट्यादिपरिग्रहः। यथा कर्म्मरूपोपासनाया एकमेव ब्रह्म—विषयः, 'एकं सद् विप्रा बहुधा वदन्ति' (ऋ० १ मं० १६४ सू० ४६ मन्त्रे) इत्यादौ तथाम्नानात्, किन्तु चोदनायाः फलस्य कर्म्मिदृष्टेश्च भेदात् देवतादिभेदः कर्म्मभेदश्च, तथा विद्यात्मकोपासनाया अपि भेद इत्यर्थः। एतेनैतदुक्तं भवति 'एको हि रुद्रो न द्वितीयाय तस्थु.' (श्वे० ३।२) इति, 'एको देवः सर्वभूतेषु गूढः' (श्वे० ६।११) इति, 'एकमेवाद्वितीयम्' इति चैवमादिश्रुतिभ्यः 'एकैवाहं जगत्यत्र द्वितीया का ममापरा' इति 'शब्दात्मिका सुविमलर्ग्यजुषां निधानम्' इति, 'अहं क्रतुरहं यज्ञः' इति 'वासुदेवः सर्वम्' इत्यादिस्मृतिभ्यश्च ऐन्द्राग्नेयवायव्यादियागानामुद्गीथपञ्चविधसामाद्युपासनानां च परमार्थत एकं परमात्मानं विषयीकुर्वतामपि विधिवाक्यादिभेदान्नानात्वं तत्राधिकारिविशेषाभिप्रायेण, ये सकामास्तेषामपि देहातिरिक्तात्मज्ञानमुच्छृङ्खलकामनासङ्कोच च सम्पादयितुं कर्म्मविधिविशेषवद् विद्याविधिभेदोऽपि बोध्य.। यद्वा 'भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति' इति सूत्रस्यार्थस्तु यथा स्वर्गादिकामकर्तृकक्रत्वपेक्षया स्वर्गाद्यकामकर्तृकनित्यक्रतोर्ज्यायस्त्वं यथा वा निष्पन्तरप्राप्तक्रियात्मकक्रत्वपेक्षया शाण्डिल्यरस्यरहस्यमनु सुर्गतितिः विधेयितविद्यात्मकतोर्ज्यायस्त्वं तथा वैश्वानरविद्यायां भूम्नः समस्तोपासनस्य ज्यायस्त्वं 'तथा हि दर्शयति' औपमन्यवादीनां "अत्स्यन्नं पश्यसि प्रियम्' इत्यनेना-

धिकारिणः परिच्छिन्नदर्शनं भोगस्पृहाश्च दर्शयति=श्रावयति श्रुतिः, दर्शयति चाख्यायिकासुरेन व्यस्तोपासनाभ्यासेन समस्तोपासनोपदेशयोग्यत्वम्, तस्मात् सकामस्य परिच्छिन्नदृष्टेर्मन्दाधिकारिणो व्यस्तोपासनं तदुपासनदार्ढ्ये च समस्तोपासनमित्यधिकारिभेदेन विधिभेदः, ज्यायश्च समस्तोपासनम्, अत्र यथा शब्दादिभेदान्नानोपासनानि तथान्यत्रापीति नानेत्यादिसूत्रस्य चार्थ इत्यवधेयम् ॥३।३।५८॥

भवत्वधिकारिभेदस्थले विधिभेदादुपासननियमः, यत्रि उत्तमाधिकारिकर्त्तव्यमुपासनं शब्दभेदात् तस्यापि भेदो दृश्यते शाण्डिल्यविद्या वैश्वानरविद्यादिप्रकारेण। तत्र समुच्चयो विकल्पो वोपासनस्येति संशये 'यो भूय आरभते तस्य फले विशेष' इत्यापस्तम्बानुशासनात् समुच्चयप्राप्तावाह—

( विकल्पाधिकरणम्—३३ )

## विकल्पोऽविशिष्टफलत्वात् ॥३।३।५९॥

तादृगुपासनभेदस्थले फले विशेषाभावात् विकल्पः। ब्रह्मप्राप्तिः फलं, तच्च तादृगुपासनानामविशिष्टम्, फले विशेषाभावाद् भूय आरम्भणमयुक्तं तस्मात् समुच्चयो नास्तीति फलितम् ॥३।३।५९॥

उपासनायाः स्वर्गादिकामनाशून्यकर्तृकतायामविशिष्टफलकत्वमस्तु, कामनावत्कर्तृकोपासनास्थले समुच्चयो विकल्पो वेति संशयं व्युदस्यति।

( काम्याधिकरणम्—३४ )

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥३।३।६०॥**

'काम्याः' उपासनाः, 'स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति' ( छा० ७।१।५ ) 'स यो वाचं ब्रह्मेत्युपास्ते यावद् वाचो गतं तत्रास्य यथा कामचारो भवति' इत्यादिश्रुतिबोधिताः काम्या उपासनाः समुच्चयेन वा एकैकप्रकारेण वा 'यथाकामं' यथेच्छं, कर्तुं शक्यन्ते, 'पूर्वहेत्वभावात्' अविशिष्टफलकत्वरूपस्य पूर्वोक्तस्य हेतोरभावात्, समुच्चयपक्षो नास्तीति नियमोऽत्र ग्रहीतुं न शक्यत इतिभावः ॥३।३।६०॥

प्रधानप्रत्ययसमुच्चयादिविचारेऽङ्गप्रत्ययेषु समारचयति—

( यथाश्रयभावाधिकरणम्—३५ )

**अङ्गेषु यथाश्रयभावः ॥३।३।६१॥**

'अङ्गेषु' उद्गीथादिषु य आश्रिताः प्रत्ययाः त्रिवेदीविहिताः, तत्र समुच्चयो विकल्पो वेति संशये, पर आह,—यथाश्रयभाव इति, यथैवैषामाश्रयाः स्तोत्रादयः समुच्चयेन भवन्ति प्रत्यया अपि तथैव, प्रत्ययानामाश्रयाधीनत्वादर्थप्राप्तो हेतुरयम् ॥३।३।६१॥

सूत्राभ्यां क्रमेणापरं हेतुद्वयमाह—

**शिष्टेश्च ॥३।३।६२॥**

शिष्टिः=उपदेशः। आश्रयाणां वेदत्रये यथोपदेशो दृश्यते तथैवाश्रितानां ननु ततो विशेषः कश्चिदित्युपदेशकृतविशेषाभावादाश्रयतुल्यत्वम्, नचाय उत्तरसूत्रार्थः ॥३।३।६२॥

समाहारात् ॥३।३।६३॥

ऋग्वेदिनां यः प्रणवः स सामवेदिनामुद्गीथ इति छान्दोग्ये प्रणवोद्गीथयोरैक्यध्यानस्य फलम् 'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' ( छा० १।५।५ ) इत्युक्तम् । अनयोरैक्यध्यानमाहात्म्याद्धुद्गाता स्वकर्म्मण्युत्पन्नं छिद्रं हौत्रात् कर्म्मणोऽनुसमाहरति = प्रतिसमादधाति—इति कथनाद् वेदान्तरोदितप्रत्ययस्य वेदान्तरोदितपदार्थसम्बन्धसामान्यात् सर्ववेदोदितप्रत्ययोपसंहार इति सूचितं भवतीति समुच्चये लिङ्गं दर्शितम् ॥३।३।६३॥

स्वपक्षमुपसंहरति—

गुणसाधारण्यश्रुतेश्च ॥३।३।६४॥

'तेनेयं त्रयी विद्या वर्त्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति' ( छा० १।१।९ ) इति, ओङ्कारस्य ध्येयस्य सर्ववेदसाधारण्यश्रवणात् तदाश्रितध्यानानामपि सर्ववेदसाधारण्यं गम्यते । प्रधानस्य यत् साधारण्यश्रवणं तदेव गुणसाधारण्यश्रुतितुल्यम्, लिङ्गदर्शनरूपत्वेन प्रमाणत्वादित्यर्थः ॥३।३।६४॥

अत्र सिद्धान्तमाह—

न वा तत्सहभावाश्रुतेः ॥३।३।६५॥

पूर्वपक्षाद्न्योऽयं पक्ष इति द्योतको वा शब्दोऽस्य व्यवस्थितत्वं बोधयति । 'न' यथाश्रयभावो न युक्तः । कुतः तत्सहभावाश्रुतेः । यत्रैव प्रणवस्तत्रैव तद्ध्यानमित्येवं सहभावस्याश्रवणात् । वेदत्रयविहितानामङ्गानान्तु सहभावः श्रूयते 'ग्रहं वा गृहीत्वा

चमसं वोन्नीय स्तोत्रमुपाकरोति स्तोत्रमनुशंसति प्रस्तोतः साम गाय होतरेतद् यज' इत्यादौ। नैवं तत्र प्रत्ययस्येति॥३।३।६५॥

प्रत्युत—

दर्शनाच्च ।३।३।६६॥

'दर्शनाच्च' प्रत्ययप्रत्येतव्ययोः कर्म्मण्यसहभावं श्रुतिरामनति तस्मादपि, निश्चीयते—यथाश्रयभावो न युक्त इति, चकारः सिद्धान्तपक्षहेतूपन्याससमाप्तिसूचनेन सह पादसमाप्तिं द्योतयति। असहभावश्रुतिश्च 'तेनोभौ कुरुतो यश्चैवं वेद यश्च न वेद' ( छा० १।१।१० ) इति, प्रत्ययाभावेऽपि मन्त्रस्यैव कर्म्मोपयोगमाह। किञ्च 'एवं विद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' ( छा० ४।१७।१० ) सर्वेषां प्रत्यये सर्व एव रक्षणप्रभवः स्युः,कथं तज्ज्ञातारं ब्रह्माणमपेक्षेरन्। पृथगुद्देशोपासनोमाद्याकारब्रह्मोपासननिराकारब्रह्मोपासनानां कर्म्मात्मकविद्यात्मकानां वैदिकतान्त्रिकेतिकर्त्तव्यताकानां सर्वेषामेव परमार्थतो ब्रह्मोपासनत्वेऽपि साक्षान्मोक्षहेतुरुपासना विद्यात्मिका वेदान्तप्रतिपाद्यैव, यच्च निष्कामं कर्म्मेत्युच्यते तदपि विद्याप्रधानतया विद्यायाश्च वेदान्तप्रत्ययत्वात् तदन्तरेव निविशते। काम्यविद्याया वेदान्तमध्ये प्रवेशस्तु विद्यात्वसामान्येन ब्रह्मविद्योपयोगितया चेति तत्साधारणो विचारः पादेऽस्मिन् प्रस्तुतः। उपासनाप्रकारभेदादिकं प्रासङ्गिकतया चोक्तमिति ध्येयम् ॥३।३।६६॥

इति ब्रह्मसूत्रशक्तिभाष्ये पुरुषार्थसाधनोपदेशाख्ये तृतीयाध्याये विद्याविचारो नाम तृतीयः पादः।

## तृतीयेऽध्याये चतुर्थः पादः ।

इत पूर्वपादे उपासनानि विचारितानि, कर्म्मरूपाणि विद्यारूपाणि च तानि भवन्तीत्यपि तत्र प्राप्तम् । तद्विधिषु काण्वानां वाजिनाञ्च ब्राह्मणे 'आत्मा वा अरे द्रष्टव्य' इत्यादिक श्रूयते, उपासकभेदादिद विधिवाक्यद्वय, तत्र वाजिन खलु 'प्राणस्य प्राणम्' इत्यादिवाक्येऽन्नस्यान्नमित्यामनन्तो ब्रह्मणो मातृभाव गमयन्ति, तत्रत्यम् 'आत्मा वा अरे द्रष्टव्य' इत्यादिक मातृभावेन दर्शन विदधाति, जीवस्य च भ्रूणरूपतया मातुरनन्यत्वेन । काण्वाना निर्विशेषब्रह्मसाक्षात्कारपरेण 'आत्मा वा अरे द्रष्टव्य' ।इत्यनेन वाक्येन प्राप्त यदात्मदर्शन निर्विशेषब्रह्म साक्षात्काराधिकारिणे स्वपुत्रायोद्दालकेन महर्षिणोपदिष्टेन तत्त्वमस्यादिमहावाक्येन च यत्स्वरूपमसकृत् श्रावित, विद्यारूप तत् तद्विधमन्यच्च क्रियात्मककतूपकारकत्वरूपेण क्रत्वङ्गत्वेन पुरुषार्थं जनयत्याहोस्वित् स्वयमेवेत्यस्मिन् पादे प्रथम विचार्य्यते । तादृशे च सशय सिद्धान्तबुभुत्सावता शिष्याणामालोक्य भगवान् बादरायण स्वसिद्धान्तमादौ विज्ञापयति—

( पुरुषार्थाधिकरणम्—१ )

**पुरुषार्थोऽतः शब्दादिति बादरायणः ॥३।४।१॥**

भ्रूणवदवस्थितस्यात्मनो मातुरनन्यत्वमिवोमाकाराद् ब्रह्मण

परमार्थतोऽपरिच्छिन्नाद्द्रश्यस्वरूपादपि स्वानुग्रहेणोपात्तपरिच्छिन्न-दृश्यरूपादनन्यत्वं यः सगुणब्रह्मोपासनाधिकारी तद्रूपदत्तचित्तः सर्वं भेदं विलापयन् पश्यति, तदीयदर्शनस्य मातृकृपैवापूर्वं तद्द्वारा च पुरुषार्थहेतुत्वं भवतु, तत्त्वमस्यादिवाक्यश्रवणादि-पूर्वकमात्मनो यदपरिच्छिन्नब्रह्माद्वैतदर्शनं तस्यापि पुरुषार्थं प्रति साक्षात्कारणत्वं नास्ति, किन्तु क्रत्वङ्गतयेति परमतनिरासार्थंसूत्रं पुरुषार्थ इति,—'अतः' अस्माद् ब्रह्माभेदसाक्षात्कारात् पुरुषार्थः स्वत एव न तु क्रत्वङ्गतया, तत्र हेतुः 'शब्दात्' = 'तरति शोकमात्मवित्' ( छा० ७।१।३ ) इति, 'ब्रह्म वेद ब्रह्मैव भवति' ( मु० ३।२।९ ) इति, 'ब्रह्मविदाप्नोति परम्' ( तै० २।११ ) इति चैवमादिकायाः श्रुतेः, इति बादरायण आह,—अहं वच्मीत्य-नुक्त्वा बादरायण इत्युक्तिः, 'आचार्याणामियं शैली स्ववचोऽपि परवचनवदभिधत्ते' इतिव्यवहारात्, 'सर्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः।' ( मनु० ८।१८३ ) इति मनुवचनवत्, कथारूपेऽस्मिन् प्रकरणे कथकयोर्द्वयोर्नामकीर्तने प्रमेयस्य सुमहत्त्वाचेति ॥३।४।१॥

परमतमाह—

शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥३।४।२॥

'शेषत्वात्' यजमानपुरुषस्यापि कर्म्माङ्गत्वात्, 'पुरुषार्थवादः' पुरुषस्य = यजमानात्मनः स्तुत्यर्थवादः तज्ज्ञानप्रशंसा, कर्म्म-प्रवृत्तये इतिभावः, यथान्येषु यज्ञाङ्गद्रव्येषु 'यस्य पर्णमयी

जुहूर्भवति न स पापं श्लोक शृणोति' इति स्तुत्यर्थवाद स्तद्वदिति जैमिनिराचार्य्यो मन्यते। एतेनैतदुक्तं भवति देहातिरिक्त मात्मानमजानतः पारलौकिकसुखसाधने बहुवित्तव्ययायाससाध्ये यज्ञादिकर्मण्यसम्भवन्ती प्रवृत्तिस्तज्ज्ञानेन भवतीत्येतदर्थं शरीरा पेक्षया तत्र प्रीतिसम्पादनार्थञ्च तरति शोकमात्मविदित्यात्मज्ञानं प्रशंसापरमिति बोध्यम् ॥३।४।२॥

इमं पक्षं द्रढयति—

## आचारदर्शनात् ॥३।४।३॥

'आचारः'=कर्म्म याजनयजनादिकम्, तद्दर्शनात्=श्रुतिस्त- द्दर्शयति यतः, आत्मज्ञस्योषस्तिचाक्रायणस्यार्त्विज्यश्रुतिर्यथा— 'अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्ति- रस्मि चाक्रायण इति होवाच स होवाच भगवन्तं वा अहमेभि- सर्वैरार्त्विज्यैः पर्य्यैशिष भगवतो वाहमवित्त्यान्यानवृषि भगवांस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समति सृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच' ( छा० १।११।१–३ ) इति आत्मज्ञस्य केकयस्याश्वपतेराज्ञो यजनलिङ्गश्रुतिश्च 'यक्ष्यमाणो वै भगवन्तोऽ हमस्मि' ( छा० ३।११ ) इति ॥३।४।३॥

लिङ्गमित्युक्त्वा फलवद्वार्ता श्रुतिमाह—

## तच्छ्रुतेः ॥३।४।४॥

'तस्य' क्रियाशेषत्वस्य–फलवद्त्वस्य, 'श्रुतेः' श्रुतिप्रमाणकत्वात्।

'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवति' ( छा० १।१।१० ) इति कर्म्मण एव विद्यासहकारेण वीर्य्यवत्तरत्वं श्रूयते, न तु केवलविद्यायास्तस्माद् विद्यायाः फलवत्त्वम् ॥३।४।४॥

हेत्वन्तरमाह—

समन्वारम्भणात् ॥३।४।५॥

'तं विद्याकर्म्मणी समन्वारभेते' ( बृ० ४।४।२ ) इति समन्वारम्भणश्रुतेः=परलोकप्रस्थितस्य फलारम्भे विद्याकर्म्मणो सहभावदर्शनात्, न केवलविद्यायाः पुरुषार्थत्वम् ॥३।४।५॥

नन्वनया श्रुत्या कर्म्म विद्याङ्गं विद्या वा कर्म्माङ्गमिति निर्णेतु न शक्यत इत्यत आह—

तद्वतो विधानात् ॥३।४।६॥

'तद्वतः' विद्यावतः, 'विधानात्' कर्म्मविधानात्, कर्त्तृविशेषणतया तस्य कर्म्माङ्गत्वमेव न तु कर्म्मवत्तस्य प्रधानत्वम्। 'आचार्य्यकुलाद् वेदमधीत्य यथाविधानं गुरोः कर्म्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्म्मिकान् विदधत्—' ( छा० ८।१५।१ ) इतिश्रुतेरध्ययनवत कर्म्माधिकारदर्शनादध्ययनस्य तदर्थविज्ञानपर्य्यन्तत्वात्,विज्ञानाख्याया विद्यायाः कर्म्माङ्गतया फलहेतुत्वम्, न तु स्वातन्त्र्येणेति सिद्धम् ॥३।४।६॥

हेत्वन्तरप्रदर्शनेन स्वपक्षमुपसंहरति—

नियमाच्च ॥३।४।७॥

चकारः पूर्वपक्षस्थापनसमाप्तिद्योतकः । 'कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः' ( ईश० २ ) इति कर्म्मानुष्ठाने नियम विधेश्च । कर्म्माङ्गमेव विद्येति जैमिनीयः पूर्वपक्षः ॥३।४।७॥

एवं प्राप्ते तन्मतं निरस्यते—

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥३।४।८॥

तु शब्दः पूर्वपक्षव्यावर्त्तकः । पुरुषार्थवादे शेषत्वादिति हेतुः स्वरूपासिद्धः, शेषत्वस्याद्याप्यसाधनात्, पुरुषार्थवाद इति साध्यमपि न युज्यते, कुतः 'अधिकोपदेशात्' देहातिरिक्तस्य कर्त्तुरात्मनोऽधिकस्यासङ्गत्वाकामत्वादेरुपदेशस्य सत्त्वात्, नह्यात्मानमसङ्गमकाम च विजानतः कर्म्मप्रवृत्तिर्भवति । येनोपदेशेन कर्म्मप्रवृत्तिर्विनश्यति कर्म्मविधौ न सोऽर्थवादो भवितुमर्हति— 'एवं' इत्येव प्रत्याख्यानं, 'बादरायणस्य' भगवतः सूत्रकृतः, प्रागुक्त 'पुरुषार्थोऽतः' इत्येव रूपं तस्य मतम्, 'तद्दर्शनात्' तच्छ्रुतेः 'असङ्गो ह्ययं पुरुषः' इति 'अकामो निष्कामो न तस्य प्राणा उत्क्रामन्ति' इत्यादेः, प्रपञ्चयिष्यते चायमर्थः ॥३।४।८॥

आचारदर्शनादिति सूत्रोक्तं निरस्यति—

तुल्यं तु दर्शनम् ॥३।४।९॥

यथा।मविद्यां कर्म्मश्रुतिस्तथा तदभावश्रुतिरपीति तुल्यं दर्शनं भवति, तथाहि 'एतद्ध स्म वै तद्विद्वांस आहुरृषयः कावषेयाः

किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे एतद्ध स्म वै तत् पूर्वे विद्वांसोऽग्निहोत्रं न जुहुवांचक्रिरे' इति। उपस्त्यादीनामार्त्विज्यादिश्रुतिश्च नापरिच्छिन्नब्रह्माद्वैतसाक्षात्कारवतामार्त्विज्यादिकं गमयति यावत्र तत्साक्षात्कारस्तावत् तद्रूपालाभार्थं युज्यते यजनम्, याजनं च साधनोपयुक्तदेहस्थितये इति विद्यायाः कर्म्माङ्गत्वे प्रमाणं न भवति। अपरिच्छिन्नब्रह्माद्वैतदर्शनरूपा विद्या तु स्वयमेव पुरुषार्थं जनयतीतिभावः ॥३।४।५॥

यदुक्तं तच्छ्रुतेरिति तत्रोच्यते—

असार्वत्रिकी ॥३।४।१०॥

'यदेव विद्यया करोति' इत्यादिश्रुतिः 'असार्वत्रिकी' सर्वत्र = सर्वासु विद्यासु, नोपयुज्यते, किन्तु प्रकरणादुद्गीथविद्यायामेव यद्वा कर्म्माङ्गावबद्धायां विद्यायामेव सा श्रुतिरुपयुज्यते प्रकरणापेक्षया 'यदेव करोति' इति सामान्यपरायाः श्रुतेर्बलवत्त्वात्। ब्रह्मसाक्षात्कारस्य कर्म्माङ्गानवबद्धत्वेन नैतत्प्रमाणकत्वम्। उद्गीथादिवन्मानान्तरप्राप्ताङ्गभावे विषये यदि तद्विद्यावद् ब्रह्मसाक्षात्कारः सबद्धः स्यात्, तदैव श्रुतिरियं तत्साधारणी स्यात्। तस्माद् असार्वत्रिकी सा ब्रह्मसाक्षात्कारसाधारण्याभावादित्यर्थः ॥३।४।१०॥

समारम्भणादितिसूत्रोक्तं निरस्यति—

विभागः शतवत् ॥३।४।११॥

यथा शतं देवदत्ताय दीयतां द्विशती कौण्डिन्याय चेति विभागव्यवस्थायां देवदत्ताय शतमेव दीयते न द्विशती, एवं

'त विद्याकर्म्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुते पूर्ववाक्ये 'तमुत्क्रामन्त प्राणोऽनुत्क्रामति' इति उत्तरवाक्ये च 'तद् यथा तृणजलायुका तृणस्यान्तं गत्वान्यमाक्रममाक्रम्यात्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यमाक्रममाक्रम्यात्मानमुपसंहरति' इति दर्शनात्, प्रकरणान्तरे ब्रह्म विदुषश्च 'न तस्य प्राणा उत्क्रामन्ति' इति दर्शनात्, गतप्राणयोर्द्वयोर्विभागो गम्यते-तेन यया विद्यया कर्म्मणः सद्भावः तद्विद्यावन्तमुत्क्रान्तप्राणं विद्याकर्म्मणी समन्वारभेते 'क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे' इति श्रुतेर्यया विद्यया कर्म्मणोऽसद्भावोऽपरिच्छिन्नब्रह्माद्वैतसाक्षात्काररूपतद्विद्यावन्तमनुत्क्रान्तप्राणमप्यपसृतप्राणं तु न समन्वारभेते इत्यर्थः । तस्मात् समन्वारम्भणश्रुतिर्न तदद्वैतसाक्षात्काररूपविद्याविषयेति स्थितम् । यत्तु 'विभागोऽत्र द्रष्टव्यो विद्यान्यं पुरुषमन्वारभते कर्म्मान्यमिति शतवत्, यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै तद्वत्' इति शारीरकोक्तम्, तस्यापि अस्मदुपदर्शितव्याख्यान एव तात्पर्य्यम् 'त विद्याकर्म्मणी' इति दार्ष्टान्तिके वाक्ये तमित्येकवचननिर्देशात्, एकत्र विद्याया अन्यत्र च कर्म्मणः प्राप्त्यसम्भवादिति ॥३।४।११॥

तद्वतो विधानादिति सूत्रोक्तं प्रत्याचष्टे—

## अध्ययनमात्रवतः ॥३।४।१२॥

वेदानधीत्यादिश्रुत्याध्ययनमात्रवतः कर्म्माधिकारो विधीयते तेन श्रवणपर्य्यन्तसम्भवेऽपि मनननिदिध्यासने अपि कर्म्माधिकारे

नापेक्ष्यते कुतस्तरां दर्शनम्, तस्मात्तस्य कर्माङ्गत्वं नैतया श्रुत्या सिध्यतीत्यर्थः ॥३।४।१२॥

नियमाच्चेति सूत्रोक्तं निरस्यति—

नाविशेषात् ॥३।४।१३॥

'अविशेषात्' सामान्यतयोक्तत्वात्, विद्वत्पक्षे नियमोऽयं 'न' न प्रयुज्यते उत्सर्गापवादन्यायेन, नियमस्य विद्वदितरविषयत्वात्, विद्वत्पक्षे तदपवादश्च 'उपमर्दञ्च' इति सूत्रेण प्रदर्शयिष्यते ॥३।४।१३॥

तत्रैव कल्पान्तरमाह—

स्तुतयेऽनुमतिर्वा ॥३।४।१४॥

यद्यपि प्रकरणाद् विद्वानेव कुर्वन्नित्यनेन सम्बध्येत, तथापि 'स्तुतये' विद्यास्तुतये, 'अनुमतिः' कर्म्मानुज्ञानम्, 'वा' इति कल्पान्तरबोधनाय । कथमिव विद्यास्तुतिः ? 'न कर्म्म लिप्यते नरे' इति तन्मन्त्रचरमपाद श्रवणात् । कर्म्म कुर्वत्यपि विदुषि न कर्म्मलेपो भवतीति विद्या स्तूयते, तथा चार्थवादोऽयं न नियमविधिरित्यर्थः ॥३।४।१४॥

अत्रैकेषां मतमाह—

कामकारेण चैके ॥३।४।१५॥

चकारो नियमपक्षनिरासससमुच्चयद्योतकः । एके वदन्ति, 'कामकारेण'='जिजीविषेत्' इति कामनाश्रुत्या, प्राग्भवीयसंस्कारवशेन यावद्देहस्थितिमोहलेशानुवृत्त्या यथैव कामः स्यात् ■ कर्म्म

कुर्य्यादेव न च तेन कश्चिद्दोषो भवति 'न कर्म्म लिप्यते नरे' इति समाधानात् ॥३।४।१५॥

विद्यायाः क्रत्वङ्गत्वे बाधकमाह—

उपमर्दञ्च ॥३।४।१६॥

येन यस्य नाशो भवति, नहि तस्य तदङ्गत्वम्, उपकारकस्यैवाङ्गत्वात्, ब्रह्मदर्शनेन च कर्म्मण' 'उपमर्दम्' क्षयम्, 'च' आमनति 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे। ( मु० २।२।८ ) इति श्रुति., चकारादयमर्थो लभ्यते। विनाशकारणस्याङ्गत्वं न सम्भवति न वा तस्मिन्नुत्पन्ने कर्म्मोत्पद्यत इति ॥३।४।१६॥

यदि विद्यायाः क्रत्वङ्गत्वमुच्यते येषामाश्रमिणां कर्म्माधिकारो नास्ति तेषां विद्याश्रुतिर्व्याकुप्येत, इत्याशयेनाह—

ऊर्द्ध्वरेतःसु च शब्दे हि ॥३।४।१७॥

'ऊर्द्ध्वरेतःसु' आश्रमेषु यज्ञादिकर्म्माधिकाराभावात् विद्याया अधिकाराच्च तत्र क्रत्वङ्गत्वं नोपपद्यते। यद्यपि 'दूरादाहृत्य समिधः सन्निदध्याद् विहायसि। सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः' इति मनूक्तस्य सामान्यतो ब्रह्मचारिधर्म्मस्य नैष्ठिकेऽपि प्राप्त्या गुर्वाद्यभावे 'प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मन' इत्यग्निमात्रशुश्रूषापरताया मनुना विहितत्वाच्च नैष्ठिकब्रह्मचारिणाम्, वनस्थमधिकृत्य 'मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा। एतानेव महायज्ञान् निर्वपेद् विधिपूर्वकम्' इति मनुस्मरणाच्चोर्द्ध्वरेतसामपि

तेषामस्ति कर्म्माधिकारः, तथा च सूत्रे, ऊर्द्ध्वरेतःस्विति बहुवचनं नोपपद्यते, एकस्मिन् यत्याश्रम एव कर्म्मानधिकारात्, तथापि यतीनां कुटीचकबहूदकहंसपरमहंसभेदेन चातुर्विध्याद्वा व्यक्तिभेदाभिप्रायेण वा बहुवचनमित्यवधेयम्।

ननु तादृशाश्रमसत्त्वे तत्र विद्याधिकारे च किम्प्रमाणमित्याशङ्क्याह—'शब्दे हि' शब्दे=श्रुतौ तत्प्रमाणमस्ति, 'न कर्म्मणा न प्रजया न धनेन त्यागेनैकेऽमृतत्वमानशुः। परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति' इति, 'तमेव विदित्वाति-मृत्युमेति नान्यः पन्था विद्यते अयनाय।' इति चैवमाद्यौ, एतेन कर्म्मातिरिक्तोपायेन ब्रह्मज्ञानमात्रलभ्यमृत्य्वतिक्रमात्मकब्रह्मभावप्राप्तिं यतीनां बोधयन्ती श्रुतिरेषां सत्त्वं ब्रह्मविद्याधिकारञ्च प्रमाणयतीत्यर्थः। 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' ( बृ० ४।४।२१ ) इत्याद्याः श्रुतय आदिपदेन गृह्यन्ते। तस्माद् यथोक्तब्रह्मविद्यायाः प्रधानभूताया मोक्ष एव पुरुषार्थो लभ्यत इति सिद्धान्तः।

अथात्र 'नाविशेषात्' इत्यादिसूत्रपञ्चकस्य परमोऽर्थः प्रदर्श्यते—तत्र, नियमादिति जैमिनीयहेतुनिरसनपरमेतदिति तु तुल्यम्। कुर्वन्नेवेह कर्म्माणीति श्रुतेर्नियमपरत्वञ्चेत्,—कोऽसौ नियम इति वक्तव्यम्, कर्म्मकरणेतरव्यावृत्तो जिजीविषेदिति नियमश्चेद्व्याघातः प्रसज्यते, जिजीविषाया यत्नचेष्टान्यतररूपात् करणादितरत्वात्तद्व्यावृत्तो जिजीविषेदिति शब्दो वन्ध्यापुत्रायेत। यदि चात्र सन्प्रत्ययार्थोऽविवक्षितस्तथापि सुषुप्तिसाधारणजीवनं कर्म्मकरणेतरव्यावृत्त्या न सम्भवतीति व्याघाततादवस्थ्यम्। अथ यावज्जीवं

कर्म्म कुर्य्यादित्येवं नियमः श्रुतेरस्यास्तात्पर्य्यविषय इति चेत्, 'न' इदं न युक्तम्, 'अविशेषात्' तादृशविशेषस्य कथितमन्त्रेऽभावात्, तेन तदनभिधानादित्तियावत्। ननु कर्मकरणेतरव्यावृत्तिरग्निहोत्रादिकर्म्मत्यागाभावः, तद्वतो जीवनेच्छादिरुन व्याहतमितिचेत्, फलाकाङ्क्षायाः कर्मकरणेतरत्वेन तद्व्यावृत्तिरनेन न प्रतिपाद्यते किन्तु कर्मत्यागा भाव इत्यविशेषाभावात्, उक्ता च फलाकाङ्क्षाव्यावृत्तिर्भगवद्गीतायां कर्मण्येवाधिकारस्ते मा फलेषु कदाचनेति। न ह्येवं विद्यायाः कर्म्माङ्गत्वं लभ्यते, कर्म्मिणां कर्मैवात्र नियम्यते। नन्वेवं निष्कामकर्मण एव भवत्वङ्गं विद्या इत्यत आह 'स्तुतयेऽनुमतिर्वा' इति; पूर्वमन्त्रे 'मा गृधः' इति यन्नैष्काम्यमुपदिष्टं तस्य स्तुतयेऽनुमतिरभ्यनुज्ञानमिदं कर्म्मणः, कर्म्मणो बन्धहेतुत्वेऽपि निष्कामस्य तन्न बन्धहेतुरिति 'न कर्म लिप्यते नरे' इत्यनेन प्रतिपादितत्वात्, न हि कर्म्मसामान्यं लिप्यते बन्धनरज्जुवत् संश्लिष्यते, किन्तु सकामकृतमित्यस्य तदर्थत्वात्। तस्मात् सर्वेषां कर्म्म कर्त्तव्यमिति नियमो नास्ति किन्तु मुमुक्षुभिः सर्वैरेव निष्कामैर्भवितव्यमित्ययं नियमः। नैष्काम्यं च विषयकामनाराहित्यमिति 'कस्य स्विद्धनम्' इति प्रागुक्तमन्त्रवर्णेन प्रतिपादितम्। एकेषां श्रुत्यर्थविदां मतमाह 'कामकारेण चैके' इति जिजीविषेदित्यत्र कामकारश्रवणात् कर्म्मकरणाभाववान् न जिजीविषेदित्ययमितरव्यवच्छेदकनियमः, तेन निवृत्तकर्म्मणां सन्न्यासिनां जीवनविषया कामना प्रतिषिध्यते, नत्वयं कर्म्मनियम इति। ननु नैष्काम्यस्य नियमेऽभ्युपगतेऽपि

कर्मसहभावेन तस्योपदेशाद् विद्यायां तस्यानुपयोगाच्च मुमुक्षो-स्तादृशकर्मणोऽङ्गं निद्या भवतु, न तु तस्याः स्वतः पुरुषार्थत्व-मित्याशङ्कां निरस्यति 'उपमर्द्दं च' इति। कर्माविरक्तस्योपसन्नस्य विद्यार्थिनो नारदस्य 'मर्द' कषायमर्द रागविनाशमपरा श्रुति-राहेतिशेषः, तथाहि च्छान्दोग्ये 'अधीहि भगव इति होपससाद सनत्कुमारं नारदः' इत्युपक्रान्तं 'तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमारः' इत्यन्तं श्रूयते, 'तस्मात् नैष्काम्यं कर्मणो विशोधकं विद्याधिकारप्रयोजकं चेति नैष्काम्यनियमो मुमुक्षूणां सर्वेषामविशेषेण प्राप्त इति भावः। कर्मनियमपरत्वे बाधकमाह 'ऊर्द्ध्वरेतःसु च शब्दे हि' इति। ये कर्मानधिकृता-स्तेषूर्द्ध्वरेत आश्रमेष्वपि प्रथममन्त्राद् विद्याप्राप्त्या मन्त्रेणानेन कर्मनियमः सर्वेषामित्येतदसमञ्जसं भवति। ननु प्रथममन्त्रे ऊर्द्धरेतसां विद्याया वचनं नास्तीत्यत आह 'शब्दे हि' इति। 'ईशावास्यम्' इत्यादिमन्त्राद्धिशब्दे विद्यायाः, 'तेन त्यक्तेन' इति शब्दे सन्न्यासचतुष्टयरूपोर्द्ध्वरेत आश्रमाणां च प्राप्तेः। अखिलजगतः परमेश्वरेणाच्छादनस्य तद्विधिविषयविद्यापरत्वात्, त्यागमध्ये सन्न्यासस्य प्रधानतया प्रवेशाच्च। सौत्रो हि-शब्दो हेतुवचन इति संक्षेपः ॥३।४।१७॥

अत्राक्षेपतन्निराकरणार्थकमधिकरणान्तरमाह—

( परामर्शाधिकरणम्—२ )

**परामर्शं जैमिनिरचोदना चापवदति हि ॥३।४।१८॥**

विद्यायाः कर्माङ्गत्वाभावोपपादनाय परेण नाकमित्यादयो ये

श्रुत्यात्मका शब्दा ऊर्ध्वरेतसामाश्रमाणां प्रमाणतयोपन्यस्ता, वस्तुतो न ते तथा भवन्ति। 'परामर्श' स्पर्शमात्रं नामोच्चारण मात्र, 'जैमिनि' तन्नामाचार्य्य, मन्यत इति शेष। सा श्रुति कर्तव्योपदेशरूपत्वाभावादाश्रमान्तरे प्रमाणं न भवति, यत 'अचोदना' सा विधिप्रत्ययाभावात्। नन्वस्त्येव चोदना, श्रूयते हि 'अथात्मन्यग्नीन् समारोप्य तत्रारोपणेनाह्नित्योपस्थापनावपेक्ष माणैररण्यमभिप्रेयात् तदैव देवमनुष्येभ्य स्थिरोभवति' ( मनु भा० मेधा० ६।३८ ) इतीति चेन्न गृहस्थधर्मस्योदीच्याङ्गतया तद्विधानात्,—'जरामर्य्यं वा एतत्सत्र यदग्निहोत्र दर्श-पूर्णमासौ चेति, जरया हैव तस्मात् सत्राद्विमुच्यते, मृत्युना ह चेति' ( न्याय भा० वात्स्यायनधृता ४।१।५९ सू० भा० ) इति श्रुतजरसो गृहस्थस्यात्मन्यग्न्यारोपणपूर्वकमरण्यगमन, यज्ञस्या वभृथस्नानमिव गृहस्थधर्मस्याग्निहोत्रस्योदीच्याङ्ग नत्वाश्रमान्तर मित्यत्र तात्पर्य्यात्। नन्वेवमपि नामोच्चारणेऽपि सिद्धवन्निर्देशा दुपरि धारणीयन्यायात् कल्प्य एवाश्रमविधिरितिचेन्न, तस्याप्यग्नि होत्रोदीच्याङ्गविधितयैव पर्य्यवसानादाश्रमान्तरे चोदनाभाव-तादवस्थ्यात। यदि चाश्रमान्तरम्, गार्हस्थ्यसापेक्ष तन्निरपेक्ष वा सत् ? यदि सापेक्षमायातं विद्याया कर्म्माङ्गत्वेन,यदेतदात्मन्यग्न्या रोपण विद्यायास्तदङ्गत्वस्यौचित्यात्। यदि गार्हस्थ्यनिरपेक्षमा-श्रमान्तरमुच्यते, तदपि न, 'हि' यत', श्रुतिरेव स्वयम् 'अपवदति' विधिवद्विमूतमिति प्रतिपादयति, 'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणै र्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्य प्रजया

रपितृभ्यः' इति, 'आचार्य्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' इति च, तस्माद्गार्हस्थ्यनिरपेक्षप्रव्रज्याश्रमस्याभावात् तत्सापेक्षस्य तस्य गार्हस्थ्यकर्म्मादीच्याङ्गतया तदीयविद्यायाः कर्म्माङ्गत्वं नानुपपन्नमिति ॥३।४।१८॥

इममाक्षेपं निरस्यति—

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥३।४।१९॥

'बादरायणः' एतन्नामा भगवान् सूत्रकृत्, गार्हस्थ्यनिरपेक्षमाश्रमान्तरं प्राव्राज्यम् 'अनुष्ठेयं' करणीयं मन्यते, 'साम्यश्रुतेः' "ब्रह्मचर्य्यं समाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्य्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा, अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति जाबालवाक्येऽनुष्ठेयत्वांशे गार्हस्थ्यतुल्यत्वश्रुतेरित्यर्थः। एतेन परैरुद्भाविता जाबालश्रुतेरर्वाचीनत्वशङ्का निरस्ता ॥३।४।१९॥

ननु प्रव्रजेदिति जाबालश्रुतिरपि ब्रह्मविद्यायाः कर्म्माङ्गत्वमेव साधयति, तस्यामेव श्रुतौ आग्नेय्यादिमन्त्रग्रहणान्तक्रियाकलापस्य प्रव्रज्यारूपतया प्रतिपादितत्वात्, ब्रह्मविद्यारूपमन्त्रस्य च तदङ्गत्वात्, इति जैमिनीयप्रत्यवस्थानादाह—

## विधिर्वा धारणवत् ॥३।४।२०॥

पूर्वतन्त्रे सिद्धान्तितम्, सुवर्णधारणं न कर्म्माङ्गं किन्तु पुरुष-

मुपकरोतीत्यत पुरुषधर्म इति, तत्र सुवर्णादीना पुरुषधर्मत्वाधिकरणीयया (जै० सू३।४।२८—२४) 'सुवर्णं हिरण्यं भार्य्यं दुर्वर्णोऽस्य भ्रातृव्यो भवति' इति श्रुत्या पृथगेव यथा सुवर्णधारणविधि, भार्य्यमित्यस्य धार्य्यमित्यर्थकत्वात्, तथा प्रव्रज्या न कर्म्माङ्ग आतुरसन्न्यासे कर्म्माभावात्, पठ्यते हि जावाले 'यद्यातुर स्यान्मनसा वाचा सन्न्यसेत्' इति, किन्तु पुरुषमुपकरोतीति पृथगेव तद्विधि । यदुक्त मन्त्रो ब्रह्मविद्येति पाठ तत्र गृह्यता तथा न हि तदर्थेऽस्माक ब्रह्मविद्याशब्दप्रयोग कि तर्हि ब्रह्मज्ञानार्थे, प्रव्रज्या च तदर्था, न तु सा प्रव्रज्यार्था। सूत्राक्षरार्थस्तु—'धारणवत्' सुवर्णधारणवत्, 'विधि' प्रव्रज्याया विधि, वा शब्द शङ्काव्यवच्छेदक । कर्म्मानङ्गत्वपुरुषोपकारकत्वादिना दृष्टान्तदार्ष्टान्तिकयो साधर्म्यं बोध्यम्, सर्वधर्म्मसामान्याभावस्त्वप्यत एव, तस्माद् गार्हस्थ्यनिरपेक्षप्रव्रज्याश्रमसिद्धिस्तत्र ब्रह्मविद्याया कर्म्माङ्गत्वाभावात्स्वातन्त्र्येण पुरुषार्थहेतुत्व च सिद्धम् ॥३।४।२०॥

विधिप्रसङ्गाद्विध्यन्तर विचारयति

( स्तुतिमात्राधिकरणम्—३ )

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥३।४।२१॥

'स एष रसाना रसतम परम परार्द्ध्योऽष्टमो य उद्गीथ' (छा० १।१।३) इति इयमेवर्गग्नि साम ( छा० १।६।१ ) इति 'अय वाव लोक एषोऽग्निश्चित, तदिदमेवोक्थमियमेव पृथिवी' इति चैव जातीयकश्रुतिवाक्यजात किमुद्गीथादिस्तुतिमात्रम्, आहोस्वि-

दुद्गीथादिषु रसमयत्वादिदृष्टयोपासनाविध्यर्थम् ? इति संशये स्तुतिमात्रम् इति पूर्वपक्षः, तत्र हेतुः 'उपादानात्' उपादीयन्ते कर्म्माङ्गानि यस्मिन् वाक्ये तादात्म्येन तत्सम्बन्धात्, भावप्रधान-निर्देशेन उपादानत्वादित्यर्थो वा, यद्वाक्यं कर्म्माङ्गघटितत्वे सति भिन्नयोरभेदबोधकतया प्रयुज्यते तत्स्तुतिरूपं भवति 'इयमेव जुहूरादित्यः कूर्मः' इत्यादि वाक्यवत् 'इतिचेत्' इति यदुच्यते तत् 'न' न युक्तम्। 'अपूर्वत्वात्' अप्राप्तार्थबोधकत्वात्, स्तुतिमात्र-रूपतायामानर्थक्यप्रसङ्गाच्चेत्याशयः। सन्निहिते प्रधाने विधावर्थ-वादतया स्तुतिरूपवाक्यशेषस्य सप्रयोजनत्वेनार्थवत्त्वेऽपि, प्रदेशान्तरस्थप्रधानविधिवाक्ये तत्सम्बन्धेनार्थवादत्वानुपपत्त्या निरर्थकत्वम्। तस्मादुपासनविधिपरमेव तद्वाक्यजातमिति। उद्गीथादेः क्रत्वङ्गत्वे सिद्धेऽपि न तद्गतिविधिः क्रतुविध्यसन्निधाने सम्भवतीति पूर्वपक्षयुक्तिः, सिद्धान्ते च नेदं कर्म्माङ्गमपितु प्रधान-मिति युक्तिः,—ननैवं 'यदेव विद्यया करोति तदेव श्रद्धया चोपनिषदा वीर्य्यवत्तरं भवति' इति क्रतुवीर्य्यवत्तरत्वश्रुतिः प्रधानपक्षे नोपपद्यत इति वाच्यम्, यतः प्रधानभूतोद्गीथोपासनस्य फलश्रुतिरियं न क्रतोः, अत एव 'तेनोभौ कुरुतो यश्च वेद यश्च न वेद' इति तत्रैव श्रावितम्। विचारितञ्चैतदङ्गावबद्धप्रत्ययाधिकरणे तस्यैवोपकारक मिदमधिकरणम् ॥३।४।२१॥

स्पष्टमुपासनविधिं दर्शयति—

भाववचनाच्च ॥३।४।२२॥

भाववचनं विधिशब्दः, तस्मात्। चकारोऽस्य हेत्वन्तरत्वद्योत-

कोऽधिकरणसमाप्तिसूचकश्च । 'उद्गीथमुपासीत' (छा० १।१।१) इति 'मामोपासीत' ( छा० १।२।१ ) इति 'अहमु क्थमस्मीति विद्यात्' इत्युपासनाविधयः श्रूयन्ते स्तुतिमात्रत्वपक्षे तद्व्याघातः स्यादिति ॥३।४।२२॥

यज्ञादिकर्मणः एव स्वातन्त्र्येण पुरुषार्थहेतुत्वमिति वादिनामौपनिषदाख्यायिकाप्रयोजनप्रदर्शनाय तन्मतं सिद्धान्तं च विद्याविचारप्रसङ्गेनाह—

( पारिप्लवाधिकरणम्—४ )

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥३।४।२३॥

'उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ तस्यह नचिकेता नाम पुत्र आस' ( क०१।१।१ ) इति, 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च' (बृ० ४।५।१) इत्येवं जातीयासु वेदान्ताश्रितास्वाख्यायिकासु सशय्यते किमिमाः पारिप्लवार्थाः उत वा सन्निहितविद्याप्रतिपादनार्थाः ? पारिप्लवो नानाविधाख्यायिकाकथनम्, स चाश्वमेधे पुत्रादिपरिवृताय राज्ञे पारिप्लवमाचक्षीतेति ब्राह्मणप्राप्तः । आख्यायिकासामान्येनेमा अप्याख्यायिकास्तदर्था इति प्राप्तम् इतिचेदित्युपन्यस्य निरस्यति 'न' इत्यादिना, न पारिप्लवार्थाः, कुतः 'विशेषितत्वात्' मनुर्वैवस्वतो राजेत्यादीनां कासाञ्चिदाख्यायिकानां तत्र विशिष्य दर्शितत्वात् आख्यायिकासामान्यस्याप्राप्तेः, अन्यथा विशेष्याभिधानं व्यर्थं स्यात् ननु प्रदर्शनार्थं तद् भवेदितिचेन्न, एवेनैव चारितार्थ्ये कथा

निरतारस्य तत्रानौचित्यात् नाचिकेतमैत्रेय्यादिकथाया राजन्महिमाख्यायिकासामान्यानन्तर्गतत्वाच्च ॥३।४।२३॥

एवं पारिप्लवार्थत्वे निरस्ते सिद्धान्तो स्वपक्षं व्यवस्थापयति—

## तथा चैकवाक्यतोपबन्धात् ॥३।४।२४॥

'तथा' संशयकोटिप्रकारयोरेकप्रकारनिरासे परिशिष्टो यस्तेन प्रकारेण 'च' अवधारितः, उपासनाविध्यर्थत्वेन निर्णीत इति तथा चेत्यंशस्यार्थः, कुतः ? 'एकवाक्यतोपबन्धात्', 'एकवाक्यतया' एकार्थप्रतिपादकतया उपबन्धात् सन्निहितविन्यासात्, 'वायुर्वै क्षेपिष्ठा देवता' इत्यस्य 'वायव्यं श्वेतमालभेत' इति विध्येकवाक्यत्ववत्, यमेवैष वृणुते तेन लभ्य इत्यादिप्रोपासनपर्य्यवसायिविद्याविधिना, मोक्षाधिकारिपुरुषविशेषकर्त्तृकत्वादिप्रतिपादकतया एकवाक्यताप्राप्तेः; विषयकामनाविरहितः पितृभक्तः, शमदमवैराग्यश्रद्धादिगुणसम्पन्नो मोक्षार्थी आत्मानमुपासीत इत्येवं विशिष्टविधिपर्य्यवसानादेकवाक्यत्वम् । एवमन्यत्रापि । यद्वा एकवाक्यत्वं च उपबन्धश्चेति समाहारद्वन्द्वैकवद्भावः, एकवाक्यत्वं दर्शितप्रकारम्, उपबन्धः, विद्याग्रहणसौकर्य्याय विद्यायामप्रविष्टोऽपि तदुपकारी बन्धः, वचनपरिपाटी । बाला हि उपाख्यानमुखेन स्वल्पायासेन विद्यां ग्राहयितुं शक्यन्ते इति प्रसिद्धम् । तस्माद् विद्याप्रतिपादनार्था एवाख्यायिका इति सिद्धम् ॥३।४।२४॥

प्रसक्तानुप्रसक्तविचारभूयिष्ठं विद्यायाः स्वातन्त्र्येण पुरुषार्थहेतुत्ववादमुपसंहरन्नाह—

( अग्नीन्धनाद्यनपेक्षाधिकरणम्—५ )

### अत एव चाग्नीन्धनाद्यनपेक्षा ॥३।४।२५॥

'अत एव' स्वतन्त्राया विद्याया पुरुषार्थहेतुत्वादेव, अग्नीन्धनादीना क्रतुसाधनत्वं नास्ति, फलसाधनतायामपेक्षा, क्रत्वङ्गत्वे तु प्रधानानुविधायिनामेतेषामवश्यमपेक्षया भूयेतेति भाव ॥३।४।२५॥

अथ ब्रह्मचर्य्यादेव प्रव्रजितानां यज्ञाद्यभावे विद्याया कर्म्मापेक्षत्वासम्भवात्, स्वातन्त्र्येण पुरुषार्थहेतुत्वमिति प्रसङ्गाद् गृहस्थस्यापि ब्रह्मविद्याया कर्म्मापेक्षता वर्त्तते नवेति संशय विचार्य्यते—

( सर्वापेक्षाधिकरणम्—६ )

### सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥३।४।२६॥

गृहस्थस्य विद्याया 'सर्वापेक्षा'—गृहस्थविहिताग्निहोत्रादि सकलकर्म्मापेक्षा, तत्र हेतुमाह—यज्ञादिश्रुते, 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति विद्यासाधन यज्ञादिश्रुते, ननु कथ यज्ञादेर्विद्यासाधनत्वम् ? विविदिषायामेव करणत्वश्रवणात्, इतिचेन्न क्लृप्तकरणान्तरायामिच्छाया यज्ञस्य करणत्वाभावादिषुणा जिघांसतीति वाक्येनेषोर्वधसाधनत्व वद्यज्ञादिना विविदिषन्तीति वाक्येनापि यज्ञादेर्वेदनसाधनत्वा वगमाद् विद्याया कर्म्मापेक्षत्व सिध्यति। इदन्त्ववधेय यदत्रापि कर्म्मण एव विद्याङ्गत्व क्रतुसाधनद्रव्यादे क्रत्वङ्गत्ववत् न तु

विद्यायाः कर्म्माङ्गत्वम् । अत्र दृष्टान्तः—'अश्ववत्' यथा-दूराध्वद्रुतगमनसाधनभूतोऽश्वः खुरबन्धपरिकर्म्मादिस्वीयसर्वंवस्त्वपेक्षस्तद्वत् ॥३।४।२६॥

सर्वकर्म्मापेक्षस्य गृहस्थस्य शमदमादीन्यनुष्ठेयानि न वेति संशयं निराचष्टे—

( शमदमाद्यधिकरणम्—७ )

## शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥३।४।२७॥

यज्ञादिरूपसाधनस्य व्यापारेणापूर्वेणैव चरितार्थतया गृहस्थेन शमदमादीनि नानुष्ठेयानीति प्राप्तेऽभिधीयते—'तथापि' यज्ञादि-साधनवानपि ब्रह्मवेदनार्थी गृहस्थः 'शमदमाद्युपेतः' शमदमा-दिभिः = आदिपदात् उपरतितितिक्षासमाधानश्रद्धानां परिग्रहः, 'उपेतः' युक्तः स्यात् गृहस्थेन तान्यपि अनुष्ठेयानि, 'तद्विधेः' दर्शनात्मकब्रह्मविद्याविधेः 'तदङ्गतया' शमदमाद्यङ्गकतया कर्तृविशेषणतया प्रधानविधिशरीरे प्रवेशेन यद्वा 'तद्विधेः' शमदमादिविधेः 'तदङ्गतया' ब्रह्मविद्याङ्गत्वेन 'अवश्यानुष्ठेयत्वात्' गृहस्थेनाप्यवश्यमनुष्ठेयानीति प्रतिपत्तेः,'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्' इतिश्रुतेः 'तस्मात्' इत्यस्य 'नित्य एषमहिमा' इत्यादेर्ऋचाभ्यनूक्तत्वात्त-त्स्वरूपोपदेशाच्चेत्यर्थः । 'एवं वित्' इत्यस्य गुरुवेदान्तवाक्ये दृढतरप्रत्ययवान् इत्यर्थः यद्यपि पश्येदिति माध्यन्दिनीयपाठस्थले

कारवानां पश्यतीति पाठः ( बृ० ४।४।३।३ ) तथाप्यत्र विधिरूपत्वमस्त्येव तदर्थकपश्चमलकारस्य लेडाख्यस्य पाणिन्युक्तत्वात्। अपरिधारणाधिकरणन्यायेन विधेराक्षेपाद्वा। अत्र पश्येदिति दर्शनस्य 'आत्मा द्रष्टव्यः' इति प्राप्तविध्यनुवादरूपत्वे तु गुणविधिरेवायमिति यष्ठाकल्प उक्तो वेदितव्यः, श्रद्धायाम् लभते ज्ञानमित्यादिस्मृतयोऽप्यत्रादरणीया इति ॥३।४।२७॥

ब्रह्मविदुषां करणीयविचारप्रसङ्गादन्नभोजनविषयविचारः प्रस्तूयते—

( सर्वान्नानुमत्यधिकरणम्—८ )

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥३।४।२८॥

छान्दोग्ये प्राणसंवादे श्रूयते 'न ह वा एवंविदि किञ्च नानन्नं भवति' (छा०५।२।१) इति, तथा बृहदारण्यके 'न ह वा अस्यानन्न जग्धं भवति नानन्नं प्रतिगृहीतम् (बृ०१६।१।१४) इति सर्वमेवादनीय भवति, तस्य किमप्यभक्ष्य नास्तीत्यर्थः, अत्र किमयं विद्याङ्गतया सर्वान्नभक्षणस्य विधिः, विधिः प्रायो उपासनार्थोऽर्थवादो वा ? इति संशये, अपूर्वत्वाद्विधिरयं भवति इति प्राप्तेऽभिधीयते, न विधिः, प्राणोपासनपरवाक्यशेषत्वात्, लिङ्गविरोधाच्च, तथाहि मटचीहतेषु कुरुष्वित्युपक्रम्य च्छान्दोग्ये ब्रह्मविद् उषस्तेश्चाक्रायणस्याख्यानमाम्नातं,—ततोऽवगम्यते प्राणात्ययसम्भावनायामापदि तेन हस्तिपकं भिक्षित्वा तदुच्छिष्टकुल्माषाशनमकारि, किन्तु तदुच्छिष्टानुपान प्रत्याख्यायि तत्रोच्छिष्टकुल्माषाः

खादिताः, प्रत्याख्यायते चानुपानम्, किमत्र कारणमिति हस्तिपक-प्रश्नेनोपस्तिनोक्तं 'न वा अजीविष्यमिमानखादन्' (छा०१।१०।४) इति 'कामो म उदपानम्' (छा० १।१०।४) इति च, यदि ब्रह्मविद् एवमाचरणं प्राणविदः कथं सर्वान्नभक्षणविधिः सम्भवेत् तस्मादर्थवादोऽसौ स्तुतिमात्रं प्राणोपासनापर्य्यवसायिन्याः प्राणविद्यायाः। उपस्त्याख्यायिकोक्तलिङ्गदर्शनेन ब्रह्मविदः प्राणात्ययसम्भावनाया-मापदि सर्वान्नादनमनुमन्यते इतिसूत्रतात्पर्य्यम् ॥३।४।२८॥

श्रुतिविरोधाशङ्कायामुत्सर्गापवादन्यायं दर्शयति—

अबाधाच ॥३।४।२९॥

'आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति श्रुतेर्बाधाभावाच्च, प्राणात्ययसम्भावनारूपापद्व्यतिरिक्तस्थले तद्विषयसत्त्वादितिभावः ॥३।४।२९॥

अपि च स्मर्यते ॥३।४।३०॥

प्राणात्ययापदि सर्वान्नादनं विद्वदविद्वद्विशेषेण धर्म्मशास्त्रकृद्भिरपि स्मर्य्यते च। तथा च मनुः, 'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः। आकाशमिव पङ्केन न स पापेन लिप्यते' इति। चकारोऽनन्नस्य वर्जनस्मरणं समुचिनोति, 'सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्। तया स्वकाये निर्दग्धे मुच्यते किल्बिषात् ततः।' इत्येवं मन्वादिवचनात् ॥३।४।३०॥

अत्र पक्षे विशेषमाह—

शब्दश्चातोऽकामकारे ॥३।४।३१॥

'अतः' जीवितात्ययेऽन्नस्यानुमननात् 'शब्दः' श्रुतिः, चकारोऽ-

ध्ययो भिन्नत्रमस्च, ‘अकामकारेऽप्यनन्नस्य प्रतिषेधक’, ‘तस्माद् वा ब्राह्मण सुरा न पिबेत्’ इति काठकाना संहिताया कामाकामयोर विशेषेण सुरापान निषिध्यते। तस्मात् प्राणात्ययेऽभोज्यानाम न्नानामेव भोजन नानन्नाना सुरादीनामिति स्थितम ॥३।४।३१॥

सर्वापेक्षाचेत्यनेन गृहिणा विद्याङ्गतयाश्रमकर्मानुष्ठेयमुक्त मथामुमुक्षुणा गृहिणा तदनुष्ठेय नवेति सशये नानुष्ठेयमिति प्राप्त दर्शपूर्णमासाभावे प्रयाजाद्यननुष्ठानवदिति तत्राह—

( आश्रमकर्म्माधिकरणम्—९ )

**विहितत्वादाश्रमकर्म्मापि ॥३।४।३२॥**

यावज्जीवमग्निहोत्र जुहोतीत्यादि श्रुतेरमुमुक्षोरपि, ‘आश्रम कर्म्म’ अनुष्ठेयम्, अवेष्टिवत् क्वचिदङ्गस्यापि क्वचित् प्रधानत्वात्। तथाचामुमुक्षुणा प्रधानतयैवानुष्ठातव्य श्रुतिविधाना-दित्यर्थ ॥३।४।३२॥

अधिकारिभेदाभिप्रायेणाह—

**सहकारित्वेन च ॥३।४।३३॥**

विद्यावतोऽपि गृहस्थस्य मुमुक्षुतया साक्षाद्भावेनोपासकस्य ‘सहकारित्वेन’ विद्याया सहकारिरूपेण विहितत्वाद् आश्रम कर्म्मानुष्ठेयमिति चकारानुकर्षप्रयुक्त सूत्रार्थ। विधान च ‘विद्या चाविद्या च यस्तद् वेदोभय सह। अविद्यया मृत्यु तीर्त्वा विद्ययामृतमश्नुते’(यजु०मा०४०।१४)इति मन्त्रेणाद्रितम्। अविद्येति विद्याभिन्नयज्ञादिकर्मबोधकम्। तज्ज्ञानञ्च तदनुष्ठानप्रकारादि

ज्ञानम्। एतादृशोपासकस्य निष्कामकर्म्म युज्यते मुमुक्षाया मातृसन्दर्शनमात्रकामनायाश्च निष्कामत्वरूपाभावप्रतियोगिकोटावप्रवेशादितिभावः ॥३।४।३३॥

उपपादयति—

## सर्वथापि च त एवोभयलिङ्गात् ॥३।४।३४॥

विद्याङ्गतया वा स्वातन्त्र्येण वा विद्यासहकारितया वेति 'सर्वथा' सर्वेण प्रकारेण 'त एव' ते अग्निहोत्रादयः अनुष्ठेया एव, उभयलिङ्गात्, श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च। श्रुतिलिङ्ग 'ब्राह्मणा विविदिषन्ति यज्ञेन' इति, यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्' (यजु०माध्य०३१।१६) इति ब्रह्मविदोऽश्वपते राज्ञो वाक्यं 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' (छा० ५।११।५) इति च यथायोगं ज्ञेयम्। स्मृतिलिङ्गञ्च 'तौ तस्मिन् पुलिने देव्याः कृत्वा मूर्तिं महीमयीम्। अर्हणां चक्रतुस्तस्याः पुष्पधूपाग्नितर्पणैः' इत्युपक्रमान्ता 'सोऽपि वैश्यस्ततो ज्ञानं चक्रे निर्विण्णमानसः' इत्यन्ता सप्तशतीस्मृतिर्विद्याङ्गत्वे, 'एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्' इत्यत्रिस्मृतिः, युधिष्ठिरादेरग्निहोत्रादिप्रतिपादकमहाभारतस्मृतिश्च स्वातन्त्र्ये, 'उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः। तथैव ज्ञानकर्म्मभ्यां प्राप्यते ब्रह्म शाश्वतम्' इति हारीतस्मृतिश्च, समुच्चये लिङ्गं ज्ञापकम्, तस्मात् सर्वथाप्यनुष्ठेया एव त इति भावः ॥३।४।३४॥

अङ्गत्वे समुच्चये च फलमाह—

अनभिभवञ्च दर्शयति ॥३।४।३५॥

'धर्म्मेण पापमपनुदति' इतिश्रुतिः, विद्यायाः, अनभिभवम्- पापजन्यस्य फलप्रतिबन्धरूपस्याभिभवस्याभावं 'दर्शयति' श्रावयति तस्माद् विद्यार्थिनो विदुषश्च कर्म्मानुष्ठेयमेवेति ॥३।४।३५॥

आश्रमिप्रसङ्गेनानाश्रमिणां ब्रह्मविद्याधिकारो विचार्य्यते—

( विधुराधिकरणम्—९ )

अन्तरा चापि तद्दृष्टेः ॥३।४।३६॥

विधुराः पत्नीविरहिताः गृहस्थधर्म्माणः प्रकारान्तरेणापि येऽनाश्रमिणस्तेषां सर्वेषामन्ययेनान्तराशब्देनात्र ग्रहणम्, अन्तरा आन्तरालिकास्तेषां ब्रह्मविद्याधिकारतदनधिकारसंशये, यज्ञादावन- धिकारवद् ब्रह्मविद्यायामप्यनधिकार इति पूर्वपक्षः । तत्राभिधीयते, 'अन्तरा चापि तद्दृष्टेः' इति, तेषामान्तरालिकानामप्यधिकारः । चकारेण वुद्धिस्थद्योतनात् । तत्र हेतुः 'तद्दृष्टेः' अत्रो रैक्वादीनां तथाऽधिकारदर्शनादित्यर्थः ॥३।४।३६॥

प्रमाणान्तरमाह—

अपि च स्मर्य्यते ॥३।४।३७॥

मार्कण्डेयलोमशप्रभृतीनामस्मृताश्रमविशेषधर्म्माणामपि ब्रह्म- वित्त्वं स्मर्यते, महाभारतमार्कण्डेयपुराणादावित्यर्थः ॥३।४।३७॥

उपपादकमाह—

## विशेषानुग्रहश्च ॥३।४।३८॥

'विशेषैः' आश्रमादिकृतभेदापेक्षेभ्यः कर्म्मभ्यो विशिष्टैर्जपादिभिः, जन्मान्तरकृताश्रमादिधर्म्मैश्च 'अनुग्रहः' पारमेश्वरी कृपा भवत्येव । चोऽवधारणे । अत्र दैवीभागवतीयवाग्बीजजपरतसत्यव्रतोपाख्यानमन्यच्चैवं प्रमाणम् । मनुरपि स्मरति 'जप्येनैव तु संसिद्ध्येद् ब्राह्मणो नात्र संशयः । कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते' इति । गीतायां श्रीभगवानपि 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' ॥ इत्याह अतएव भगवच्छङ्कराचार्य्यचरणाः सूत्रस्यास्य भाष्ये—'जन्मान्तरानुष्ठितैरप्याश्रमकर्म्मभिः सम्भवत्येव विद्याया अनुग्रहः' इति प्राहुः । विद्यातत्त्वं च विवृतं सप्तशत्यां 'सा विद्या परमा मुक्तेर्हेतुभूता सनातनी' इति । अतो नास्ति विद्याया अनुग्रहस्य पारमेश्वर्य्याः कृपायाः कश्चिद् भेद इति प्रासङ्गिकमेतत् । तस्माद् विधुरादीनामस्ति ब्रह्मविद्यायामधिकारः ॥३।४।३८॥

अनयोरुत्कर्षापकर्षावाह—

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥३।४।३९॥

'अतः' अन्तरालवर्त्तित्वात्, 'तु'-शब्दः पूर्वसूत्रान्तार्थव्यावृत्तिद्योतकः । 'इतरत्' आश्रमवर्त्तित्वं विद्यासाधनतया 'ज्यायः' प्रशस्यतरम्, 'लिङ्गाच्च' लिङ्गादपि, न केवलं लिङ्गात् किं तर्हि ? 'स्वाध्यायोऽध्येतव्यः' इति 'ब्रह्मचार्य्याचार्य्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्य्यकुलेऽवसादयन्' ( छा० २।२३।१ ) इति

'यावज्जीवमग्निहोत्रं जुहोति' इति 'गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत्' इत्यादिश्रुतिष्वाश्रमतद्धर्मविधीनां दृष्टत्वात्,— 'षट्त्रिंशदाब्दिकं चर्य्यं गुरौ त्रैवेदिकं व्रतम्। तदर्द्धिकं पादिकं वा ग्रहणान्तिकमेव वा'। इति, 'यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले। युक्तः परिचरेदेनमाशरीरविमोक्षणात्।' इति, 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।' इति, 'वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि। पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृही।' इति, 'ऋतामृताभ्यां जीवेत्तु मृतेन प्रमृतेन वा।' इति, 'गृहस्थस्तु यदा पश्येद् वलीपलितमात्मनः। अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्।' इति, 'वनेषु च विहृत्यैवं तृतीयं भागमायुषः। चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परिव्रजेत्।' इति चैवमादि स्मृतिभिः साक्षादुक्तत्वाच्च, लिङ्गञ्च श्रौतम्—'तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च' (बृ० ४।४।९) इत्यादिकं पुण्यकृदित्यनेनाश्रमबोधकम्, स्मार्त्तञ्च 'अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः, आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते त्वसौ' इति स्मार्त्तधृतस्मृतिवचनं 'संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकं चरेत्' इति भगवदाचार्य्यधृतस्मृतिवचनञ्च। तस्मादान्तरालिकत्वस्य ब्रह्मविद्यासद्भावादुत्कृष्टत्वेऽप्याश्रमवर्त्तित्वम् आन्तरालिकत्वापेक्षयोत्कृष्टतरमिति भावः ॥३।४।३९॥

इत्येवं श्रुतिस्मृतिदृष्टेष्वाश्रमेषु यऊर्द्ध्वरेतसो भवन्ति नैष्ठिकब्रह्मचारी वनी, प्रव्रजितश्चेति, तेषां स्वाश्रमेभ्यः प्रत्यापत्तिर्वर्त्तते न वेति विचार्य्यते—

( तद्भूताधिकरणम्—११ )

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमा-
## तद्रूपाभावेभ्यः ॥३।४।४०॥

अस्ति तावदेतेषु नैष्ठिकब्रह्मचारिणस्तद्भावमपहाय गार्हस्थ्यप्रवेश: सर्वैरभ्युपगम्यः, ब्रह्मचर्य्यं समाप्य गृही भवेदिति श्रुतेः, वनिनश्च यावज्जीवमग्निहोत्रं जुहोतीति श्रुतिप्रत्ययात् पत्न्याः सहगमना भावपक्षेऽग्निपरिचरणानुरोधे गार्हस्थ्यप्रत्यापत्तिर्युक्ता, 'यतिर्यो इच्छिकोभवेत्' इति (नारद परि० ६।३।८) दर्शनादिच्छतः प्रव्रज्याश्रमस्थस्य गार्हस्थ्यग्रहणं न विरुध्यते, तस्य विधिनिषेधातीतत्वा दित्येवं प्राप्तेऽभिधीयते, तद्भूतस्येति, तुशब्दः पूर्वपक्षव्यवच्छेदकः। 'तद्भूतस्य' प्रतिपन्नोर्ध्वरेतोभावस्य, 'अतद्भावः' ऊर्ध्वरेतस्त्वाभावः, गार्हस्थ्यग्रहणमित्यर्थः, 'न' न युक्त, 'नियमात्तद्रूपाभावेभ्य' तद्रूपाभावेभ्यः='तेषाम् ऊर्ध्वरेतसां रूपाणि श्रुतिस्मृत्युक्तधर्मास्तेषामभावेभ्यः प्रतियोगिभेदाद् बहुत्वम्, 'नियमात्' श्रुतिस्मृतिभ्यां गार्हस्थ्यप्रत्यापत्त्यावर्तनात् । यद्वा नियमात्= नियमविधे, पञ्चम्यर्थे प्रयुक्तत्वम् तद्रूपाभावेभ्यः=तद्रूपाणां= अतद्भावानाम्–ऊर्ध्वरेतस्त्वाभावानाम्, अभावेभ्यः=प्रतिषेधेभ्यः, ऊर्ध्वरेतसामाश्रमाणां नैष्ठिकत्वादिरूपेण त्रित्वात् नैष्ठिकत्वादित्रित्वप्रयुक्तं तद्भावत्रित्वमतो बहुवचनम् । 'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' ( छा० २।२३।१ ) इति श्रुतेः, युक्तः परिचरेदेनमाशरीरविमोक्षणात्' ( मनु० २।२४३ ) इति स्मृतेश्च प्राप्तो नैष्ठिकब्रह्मचारिणो नियमो गृहस्थत्वाभ्युपगमबाधकः, ब्रह्मचर्य्ये

समाप्य गृही भवेत्' इति तूपकुर्वाणकब्रह्मचारिविषयम्, यो हि समावर्त्तनकालविशेषं नियम्य, यावत् पाठसमाप्ति ब्रह्मचर्य्यं चरिष्यामीति नियम्य वा गार्हस्थ्याय ब्रह्मचारी स्यात् स उपकुर्वाण इत्युच्यते। 'अरण्यमियादितिपदं ततो न पुनरियादित्युपनिषत्। इति श्रुतेः 'अपराजिताञ्चास्थाय व्रजेद्दिशमजिह्मग। आनिपाता च्छरीरस्य युक्तो वार्य्यनिलाशन.' (मनु० ६।३१) इति स्मृतेश्च प्राप्तो नियमो वनिनो गार्हस्थ्यप्रत्यापत्तिबाधक, न च पत्न्यसहभाववतोऽग्निहोत्रस्य वनेऽनुपपत्त्या पत्नीनिक्षिप्ताग्नावग्निहोत्रस्य स्वयं चिकीर्षोर्वनिनोऽस्ति गार्हस्थ्यप्रत्यापत्तिरितिवाच्यं तत्रापि, वन्येन यागाधिकारिणस्तस्य गृहस्थितायां पत्न्यामनिक्षिप्तमग्निस्वयमेवोपादाय वनगमनस्य 'पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत् सहैव वा' इत्यनन्तरमेवाविशेषेण 'अग्निहोत्रं समादाय गृह्य चाग्निपरिच्छदम्' इति मनुना विहितत्वात्। 'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षणो ब्रह्मभूयाय भवति' (जा०) इति 'वीराध्वाने वा अनाशके वा अपां प्रवेशे वा अग्निप्रवेशे वा महाप्रस्थाने वा (जा०) इति च श्रुत्या, 'तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद् विमुच्यते' इति स्मृत्या च गतिचर्य्यानियमेन प्रव्रज्यावतो गृहस्थत्वे प्रत्यापत्तिर्बाध्यते, 'यतिर्यादृच्छिको भवेत्' इत्यपि 'चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत्' इति पूर्वपदसम्बन्धात्त्रिकेतविषयमिदं यादृच्छिकत्वमिति प्रतीतेः सत्वस्थस्य गुणातीतस्य वा तथा प्रवृत्त्यनुपपत्तेश्च। इदं च मतं जैमिनेरपि, जैमिनिबादरायणयोरुभयोरेव मतमित्यादरातिशयार्थं

मिदं वचनम्। तस्मादूर्द्ध्वं रेतसां नास्ति गार्हस्थ्यमिति कृत्वा तदन्तर्भावेण सूत्रस्यास्य व्याख्यानं परम्पराप्राप्तम्। सामान्यतो निषिद्धं पारदार्य्यादिकं तूर्ध्वरेतः आश्रमप्रविष्टानां विशेषतः प्रतिषिद्ध-मुपरिष्टादत्र विचारयिष्यते। स्मर्य्यते च 'धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम्। चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः। दशलक्षणको धर्म्मः सेवितव्यः प्रयत्नतः' इति सर्वाश्रमसाधारणो धर्म्मं इत्यन्यदेतत्। अथाधिकरण-मिदं कस्यचिद् विशेषस्य सुबोधयिषया प्रकारान्तरेण व्याख्यायते,—तथाहि—अनाश्रमिणां ब्रह्मविद्याधिकारे सिद्धे आरूढपतितादीना-माश्रमच्युतानां तदधिकारचिन्तायामधिकरणमूचयन्नाह 'तद्भूतस्य नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः' इति। 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' ( मु० १।२।१२ ) इति श्रुत्यनुगतया सम्यगुपसन्नाय शिष्याय ब्रह्मविद्याप्रवचनं श्रूयते, अत्र संशय्यते, धर्मैधमुज्झितस्याश्रमस्योपसन्नस्य ब्रह्मविद्याप्रवचनयोग्यत्वं न वेति, ब्रह्मजिज्ञासुत्वादिना प्रवचनयोग्यत्वकोटेः सर्वापेक्षाधिकरण-विरोधात्तदभावकोटेश्चोपस्थितेः। अत्र पूर्वपक्षः, प्रवचनयोग्य त्वमेव, अनाश्रमिवदिह जन्मन्याश्रमधर्म्माभावेऽपि जन्मान्तर-कृततद्धर्म्मरणास्मिन् जन्मन्युपयोगसम्भवेन तदपेक्षत्वसिद्धेः, अन्यथानाश्रमिणस्तदधिकारसिद्धान्तो व्याहन्येत। इति प्राप्तेऽ-भिधीयते तद्भूतस्येति, यतः 'तद्भूतस्य' तस्मिन् = स्वाभ्युपगते आश्रमे भूतस्य = स्थितस्य, 'अतद्भावः' न सः अस', नञर्थो विरोधः, विरोधश्च शास्त्रप्राप्त, स्वाभ्युपगताश्रमस्य शास्त्रप्राप्तविरोध-

विशिष्टः, अविहितः प्रतिषिद्धो वेत्यर्थः य आश्रमः तस्मिन् भावः यादृच्छिकी स्थितिः, 'न' न युक्ता । अतः प्रवचनयोग्यत्वं नास्ति स्वेच्छया शास्त्रादेशमतिक्रान्तवतः प्रशान्तचित्तताविरहात् । 'प्रशान्तचित्ताय शमान्विताय' इति प्रवचनयोग्यतायां श्रौतलिङ्गादित्याशयः । नन्वेवमनाश्रमिणोऽपि विहिताविक्षेपेण प्रशान्तचित्तताविरहात् प्रवचनयोग्यत्वाभाव' कथं वार्य्येत इति चेदनयोर्द्वयोर्विशेषात्, रैक्वादीनां समावृत्तानां लाभालाभतुल्यदशायाच् आधिसुतानां कन्यालाभविरहादनाश्रमित्वं न स्वेच्छाकृतमारूढपतितादीनामाश्रमभ्रष्टानां शास्त्रलङ्घनन्तु स्वेच्छाकृतमिति विशेषात् । अत्र स्वेच्छाकृतशास्त्रलङ्घनमुपपादयति, 'नियमातद्रूपाभावेभ्यः' स्वाभ्युपगताश्रमस्य यो नियमः प्रदर्शितश्रुतिस्मृतिसिद्ध धर्म्मपालननैयत्यं तस्मात्=तत्प्रयुक्तेभ्य', तद्रूपाभावेभ्य., तद्रूपाणि=अतद्भावाः, अविहितप्रतिषिद्धाश्रमान्तरस्थितयः, तेषामभावेभ्यः, तद्रूपाणीति बहुवचन तादृशाश्रमाणां बहुत्वाभिप्रायेण प्रतियोगिभेदाच्च तद्रूपाभावेभ्य इति बहुवचनं सामान्याभावानङ्गीकर्तृनयसाधारण्याय । इतिमतं न केवलं बादरायणस्य किं तु जैमिनेरपि, मतद्वयसिद्धत्वकथनमत्रादरातिशयार्थमित्युक्तम् । एतेनैतदुक्तं भवति, वैराग्याभावेऽपि मानख्यातिपूजार्थं यदि कश्चिद् ब्रह्मचर्य्याद्वा गृहाद्वा प्रव्रजेत्, यदि वा गृहीतनैष्ठिकब्रह्मचर्य्यो गृही भवेत्, वनी वा गृहं प्रत्यापद्येत, प्रव्रजितो गृहं वानप्रस्थ्यं वा, तदेषां तद्भूतानामतद्भावा भवन्ति, विनापवादं शास्त्रीयौत्सर्गिकक्रमलङ्घनादारूढपतितत्वाच्च । इदं व्याख्यानं

चातुराश्रम्यपक्षे । यदि चैकाश्रम्य त्वाचार्य्या प्रत्यक्षविधानाद् गार्हस्थ्यस्येति गौतमबौधायनादिस्मरणेन, 'परामर्श जैमिनिः' (ब्र० सू० ३।४।१८) इति बादरायणीयसूत्रेण च चातुराश्रम्यपक्षस्य जैमिनिनानभ्युपगमप्रतिपादनादत्र जैमिनेरपीति कथन व्याहतमित्युच्यते तथाप्यैकाश्रम्यपक्षेऽस्य सूत्रस्य योजनेन व्याघातस्य परिहर्त्तुं शक्यत्वादचोद्यमेतदिति ब्रूम । ऐकाश्रम्यपक्षे हि स्वाध्यायोऽध्येतव्य इति श्रुतिप्राप्तमध्ययन गार्हस्थ्यपूर्वाङ्गमग्निहोत्रादेस्तदपेक्षत्वात्, ब्रह्मचर्य्यस्य तदितिकर्त्तव्यान्तर्गतत्वेनोपकारकत्वादङ्गत्वमङ्गत्वमङ्गानवरुद्धत्व वा, किञ्चिदभ्युपेतव्यम्, इत्येवमधीयानो गृहीतुभूयु नैष्ठिकचारी प्राक् समावर्त्तनात् पुरुषोपघातादिना निमित्तेन ऽस्य गार्हस्थ्यानधिकारमाकलयन् यदि नैष्ठिकत्वमभ्युपेयात्तस्याश्रमत्वाभावेऽपि तस्मिन् नियमेऽवस्थितोऽसौ तद्भूतशब्देनोच्यते,—अभ्युपेतनैष्ठिकनियमेन तेन पुरुषोपघातादिरूपगृहस्थत्वबाधकनिवृत्तावपि न गार्हस्थ्यमाश्रयणीयम्,—यदाश्रीयते तस्य स एवातद्भाव । उपकुर्वाणब्रह्मचारिणोऽप्यसमावृत्तस्य गार्हस्थ्यमतद्भाव एवेति बोध्यम् । तथा, दर्शपौर्णमासयागस्यानुयाज इवाश्वमेधादेरवभृथ इव वा जरतो गृहस्थस्यारण्यगमन प्रव्रज्यान्त गृहाश्रमस्यैवोदीच्याङ्ग, यथानुयाजमनुतिष्ठतो न प्रधानभूतदर्शपौर्णमासानुष्ठान प्रसज्यतेऽवभृथमाचरतो वा न तदश्वमेधाद्यनुष्ठानमेव मरण्यगमनरूपोदीच्याङ्गस्थितस्य न गार्हस्थ्यप्रत्यापत्ति, यतोऽसावतद्भाव, आश्रमत्वाभावेऽपि नियमरूपतया भेदस्तु तेषाम एव, अभ्युपेतैकनियमस्य तद्विरुद्धनियमाभ्युपगमो जैमिनेरप्य-

सम्मत । समावृत्तस्योपकुर्वाणब्रह्मचारिणो गार्हस्थ्य न निरुद्ध मतस्तत्र स्थितिर्नोतद्भाव इत्यवधेयम् ॥३।४।४०॥

गार्हस्थ्य प्रतिषिध्योर्ध्वरेतसा स्त्रीगमनविषयो विचार प्रस्तूयते—

( आधिकारिकाधिकरणम्—१२ )

## नचाधिकारिकमपि पतनानुमानात्तदयोगात् ॥३।४।४१॥

'ब्रह्मचार्य्यवकीर्णी नैर्ऋतं गर्दभमालभेत' इति श्रुत, योषिद्गामिनो ब्रह्मचारिण प्रायश्चित्त पूर्वभागेऽधिकार लक्षणे सिद्धान्तितत्वादाधिकारिकमित्युक्तम, तदुपकुर्वाणस्यैव न नैष्ठिकस्य वाह 'नचाधिकारिकमपि' अधिकारलक्षणे कथितमपि तत् प्रायश्चित्तम्, 'न च' नैष्ठिकब्रह्मचारिणो नैव युज्यत, 'पतनानुमानात्' पातित्यस्मृते, 'आरूढो नैष्ठिक धर्म्मं यस्तु प्रच्यवते पुन । प्रायश्चित्त न पश्यामि येन शुध्येत् स आत्महा' इति स्मृतिवचनात् 'कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते' इति सादृश्यदर्शनात् नैष्ठिकब्रह्मचारिणोऽवकीर्णित्व महापातकमिति प्रायश्चित्तादर्शनाभाववचनान्यथानुपपत्त्या च कल्प्यते, अत सामान्यविशेषन्यायात्, गृहस्थोचितकर्म्मकलापप्रकरणीयया प्रदर्शितश्रुत्या नैष्ठिकब्रह्मचारी नाधिक्रियतेऽधिक्रियते तु गार्हस्थ्यापयोग्युपकुर्वाण ब्रह्मचारीत्यभिप्रेत्याह 'तदयोगात्'—तयोरयोगात् =तस्मिन्=नैष्ठिके तस्य नैर्ऋतगर्दभालम्भनरूप प्रायश्चित्तस्य 'अयोगात्' अप्राप्तेरित्यथ ॥३।४।४१॥

अत्र मतान्तरमाह—

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥३।४।४२॥

तु-शब्दः पक्षान्तर द्योतकः, एके आचार्या मन्यन्ते, 'अपि' नैष्ठिकब्रह्मचारिणोऽपि, अवकीर्णित्वम् 'उपपूर्वम्' उपपातकम्; अतः 'भावम्' प्रायश्चित्तवत्त्वम्,—'अशनवत्' मधुमांसादि भोजनवत्—यथा ब्रह्मचारिणो मधुमांसादिभोजनम् उपपातक तस्य च यत् प्रायश्चित्तं तत् नैष्ठिकोपकुर्वाणसाधारणमविशेषाभिधानात्, तद्वदत्रापि, ब्रह्मचारित्वस्यावकीर्णित्वस्य चोभयसाधारणतया प्रायश्चित्ततुल्यताया युक्तत्वात्। 'तदुक्तम्' पूर्वमागे प्रमाणलक्षणे इति शेष, 'समा विप्रतिपत्तिः स्यात्(जै०सू०१।३।८) "शास्त्रस्था वा तन्निमित्तत्वात्' (जै० सू० १।१६) इति प्रागुपदर्शिता प्रायश्चित्तश्रुतिर्हि ब्रह्मचारिसामान्येन प्रवृत्ता प्रकरणाद् बलायसी। प्रायश्चित्तभावाभावयो स्मृतिवचनस्य साम्ये, नैष्ठिकपक्षे स्मृत्यनुमितश्रुतिकल्पनापेक्षया प्रत्यक्षश्रुतिप्रतिपादित प्रायश्चित्तभाव एव युक्त इति जैमिनिसूत्रद्वयतात्पर्यम्। प्रायश्चित्त न पश्यामीति वचन निन्दातिशयार्थम्। एव वनिनः संन्यासिनश्च स्त्रीगमने लघु प्रायश्चित्तं स्मर्यंत। नैष्ठिकादित्वावकीर्णित्वादीना महापातक गणे पाठोऽपिनास्ति, अस्ति तु प्रतान्त्च्युतिरित्युपपातकगणे, तस्मादुपपातकपक्षो युक्त ॥३।४।४२॥

मतद्वैधेऽपि फलसाम्येन स्वसिद्धान्तमाह—

( बहिरधिकरणम्—१३ )

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥३।४।४३॥

'उभयथापि' यदि नैष्ठिकस्यावकीर्णित्वादिनोर्ध्वरेतसा स्त्रीगमनेन

महापातकं यदि वा उपपातकमिति प्रकारद्वयेऽपि, 'बहिः' बहिष्कार्य्योऽयं भवति, 'स्मृतेः' आरूढो नैष्ठिकं धर्म्ममित्यादि-स्मृतिवचनात्, न च निन्दातिशयार्थत्वमस्य वचनस्येतिवाच्यं प्रायश्चित्तस्य तदनन्तरं व्यवहार्य्यतायाश्च साम्ये निन्दातिशयार्थत्वकथनस्य याच्ञामात्रे पर्य्यवसानात्। प्रायश्चित्ताभाववचनं श्रुतेऽपि प्रायश्चित्तेऽव्यवहार्य्यत्वार्थमिति शूलपाणिमहामहोपाध्यायस्मार्त्तभट्टाचार्य्यादीनां समयात्, 'आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम्। उद्बद्धं कृमिदष्टं च स्पृष्ट्वा चान्द्रायणं चरेत्' इत्यादि-स्मृतेश्च। 'च' किञ्च, 'आचारात्' शिष्टाचारात्, न हि तैः सह यज्ञाध्ययन विवाहादि संसर्गः शिष्टैराचर्य्यते। तुशब्दः पापसंज्ञा-प्रायश्चित्तनिर्देशे स्वस्यौदासीन्यप्रदर्शनार्थः ॥३।४।४३॥

विद्याविचारोपस्थापिताधिकारादिविचारं सानुबन्धं समाप्य तदुभयाश्रयो विचारः प्रस्तूयते—

( स्वाम्यधिकरणम्—१४ )

स्वामिनः फलश्रुतेरित्यात्रेयः ॥३।४।४४॥

अङ्गाश्रितोपासनेषु संशयः किमिमानि स्वामिकर्त्तृकाण्याहोस्विदृत्विक्कर्त्तृकाणीति, स्वामी यजमानः। अत्र 'स्वामिनः' कर्त्तृत्वमिति 'आत्रेयः' आचार्य्यो मन्यते, कुतः? 'फलश्रुतेः' =वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते ( छा० २।३।२ ) इत्यादिरूपफलश्रवणात्। शास्त्रदेशितं

।४।४४॥

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥३।४।४५॥**

औडुलोमिराचार्य्यो मन्यते, स्वामिनः कर्तृत्वं नास्ति किन्तु 'आर्त्विज्यम्' ऋत्विजः कर्म्म तत्, तत्र ऋत्विजः कर्तृत्वमित्यर्थः, 'हि' यतः 'तस्मै' साङ्गाय कर्म्मणे, यजमानेन 'परिक्रियते' परिकरः प्रतिनिधिरूपः सहायः स क्रियते। अत्र 'परिक्रीयते' इति पाठो-मिश्रादीनां सम्मतः, दक्षिणारूपमूल्येन स क्रीतो भवतीति तदर्थः। तत्प्रयोगान्तर्गतानामुद्गीथादीनामुपासनानि यद्यपि न तदङ्गभूतानि, तथापि उद्गीथरूपाङ्गाश्रयवद्धतया तत्प्रयोगान्तर्गतान्येव गोदोहनादिवत्, तानि ऋत्विग्भिरेव निर्व्वर्त्यन्ते, एतान्यपि तथैव निर्वर्त्येरन्। 'तं ह बको दाल्भ्यो विदाञ्चकार स ह नैमिशीयानामुद्गाता बभूव' ( छा० १।२।१३ ) इत्युपासनापराख्यविज्ञानस्योद्गातृकर्तृकता श्रुतौ पठ्यते, तेन लिङ्गेनर्त्विक्-कर्तृकत्वमुद्गीथाद्युपासनस्येति निर्णयः ॥३।४।४५॥

आत्रेयेण यदुक्तं फलश्रुतेरिति तत्राह—

**श्रुतेश्च ॥३।४।४६॥**

'यां वै काञ्चन यज्ञ ऋत्विज आशिषमाशासते यजमानायैव तामाशासते इति होवाचेति' तथा 'तस्मादु हैवंविदुद्गाता ब्रूयात् कं ते काममागायानि' (छा० १।७।८-९) इति यत् श्रूयते तदृत्विक्कर्तृकस्य वेदनस्य यजमानगामिफलं प्रतिपादयति, शास्त्रदेशित फलमनुष्ठातरीत्युत्सर्गश्चानुष्ठातुरपरिक्रियमाणत्वे बोध्यः। तस्मादङ्गोपासनेषु ऋत्विक्-कर्तृकत्वमिति सिद्धम् ॥३।४।४६॥

आश्रमकर्मवत् शमदमादिवच विद्यया. सहकार्यन्तर विधिमुपपादयति—

( सहकार्यान्तरविध्यधिकरणम्—१५ )

## सहकार्यान्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥३।४।४७॥

'तस्माद् ब्राह्मण पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः, अमौनं च मौनं च निर्विद्याथ ब्राह्मण' ( बृ० ३।५।१ ) इति वाजसनेये श्रूयते, अत्र पाण्डित्य-बाल्य-मौनेषु तृतीयं मौनमुपासकसामान्यनियतपाण्डित्यस्यानुवादो भाधिकारिविशेषपक्षेण विधीयते वेति संशय्यते, तत्रोपासकसामान्य-नियतपाण्डित्यानुवाद पण्डितमुन्योर्ज्ञातृरूपत्वात् ज्ञातृत्वमन्तरेणो-पासनस्यासम्भवात् मौनस्य विध्यनन्वितत्वाच्च इति प्राप्तेऽभिधीयते सहकार्यन्तरेति । 'तद्वत' प्रागुक्तश्रुतिमत =मतुवर्थ प्रतिपाद्यत्व-सम्बन्ध प्रागुक्तश्रुतिप्रतिपाद्यस्य यजमानस्येत्यर्थ , गृहिणो ब्राह्मण स्येति निष्कर्ष, 'पक्षेण' अधिकारिभेदात् कल्पभेदेन, 'तृतीय' तृतीयस्थाने यदुक्त स 'सहकार्यान्तरविधि' विधीयमान सह कार्यान्तरम्, सहकार्यान्तरतया तद्विधीयते इत्यर्थ , न त्वनुवाद अपूर्वत्वात्, न खलु पाण्डित्य मौनञ्चैकोऽर्थो येनानुवाद स्याद मौनमित्यनेन पाण्डित्यस्यापि तत्र ग्रहणात् अथ मुनिरित्यथ शब्दानु-कृष्टेन तिष्ठासेदिति विधिना तस्यान्वितत्वाच्च । बाल्येन तिष्ठासेदित्य नेन मातरि बालस्येव ब्रह्मणि स्थितिपर्यवसायिनोच्छा विधीयते,

तेन स्तनन्धयभावेन तदुत्तरं पञ्चमाब्दपर्य्यन्तबालभावेन चोपासनाद्वयं लब्धम्, 'अथ मुनिः' इत्यनेन भ्रूणभावेनोपासनं विधीयते भ्रूणस्य नीरवतया मौनवदर्थकमुनिशब्देन तदुपस्थापनात्। 'गर्भे एवैतच्छयानो वामदेव एवमुवाच' ( ऐ० उ० २।५ ) इति श्रुत्युपदर्शितमन्त्रवर्णस्य भ्रूणभावेनोपासनायां लिङ्गत्वात्। न चात्र बाल्येन तिष्ठासेदिति स्थितेऽपि मातृभावो नोपलभ्यत इति वाच्यम् 'यथैव क्षुधिता बाला मातरं पर्य्युपासते।' इतिच्छान्दोग्यमन्त्रोक्तेर्नोपासने दृष्टान्तदार्ष्टान्तिकभावेन बाल्येन तिष्ठासेदित्यस्य मातृभावपरत्वप्राप्तेः श्रुतमातृतत्त्वो मातरि बालवत् कामार्थी कृतोपासनस्तत्कृपया त्यक्तैषणो भ्रूणभावेन मातृसमाच्छादितमात्मानं सतोऽनन्यमीशावास्यं जगदिति प्रकारेण मन्यमानो निष्काममुपासीत, ततश्चापह्नुतसर्वभेदो ब्रह्माद्वैतं पश्यन् साक्षात्कृतनिर्विशेषब्रह्मस्वरूपो ब्राह्मणो झटिति भवतीति भ्रूणभावेनोपासनविधिरयमुत्कृष्टाधिकारिविशेषपरो। मध्याधिकारिणां बालभावेनोपासनं यथा ब्रह्मसाक्षात्कारे सहकारि तथेदमुत्तमाधिकारिणाम्। वक्ष्यते-चेदमुपरिष्टात्। अत्राधिकारिभेदेन विधिरूपतायां दृष्टान्तः, 'विध्यादिवत्'। यथा कर्मकाण्डे राजसूयाश्वमेधगोविधौ राजमात्रपक्षाश्रयेण न तु ब्राह्मणाद्याश्रयेण तद्वत्। आदिपदार्थवादादिपरिग्रहः, 'तरति ब्रह्महत्यां तरति पाप्मानं योऽश्वमेधेन यजते' इति तत्रार्थवादः सोऽपि राजपरः, तस्मात् प्रव्रज्यावद् गृहस्थस्याविकारप्रकर्षपक्षे ब्रह्मसाक्षात्कारे सहकारिकारणान्तरं भ्रूणभावेनोपासनमिति, 'अथ मुनिः' इत्यनेन तदेव विधीयते इति सिद्धम् ॥३।४।४७॥

ननु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनैतमेव विदित्वा मुनिर्भवति, एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति, एतद्ध स्म वैतत् पूर्वे विद्वांसः किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ प्रव्रजन्ति" ( बृ० ४।४।२२ ) इत्यादिकं श्रूयते । तदेकवाक्यतयाप्येषणात्रयत्यागानन्तरं भिक्षाचर्य्यचरणं प्रव्रजितानामेवोक्तम्, न चात्र भिक्षाचर्य्यमित्यत्र चर्य्यपदव्यर्थमिति शङ्क्यम् भिक्षा चर्य्या यत्र भिक्षायाश्चर्य्यमाचरणं यत्रेति वा तेन भैक्षयाश्रमं चरन्तीति तदर्थत्वात् उदाहृतश्रुतेर्गृहिपरत्वमयुक्तमित्याक्षेपं निरस्यति—

## कृत्स्नभावात् तु गृहिणोपसंहारात् ॥३।४।४८॥

तु-शब्द आक्षेपव्यवच्छेदद्योतकः । अत्रापि श्रुतौ गृहिणोपसंहारो दृश्यते 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्तीत्युपक्रम्य विदित्वा मुनिर्भवतीत्यन्तेन । ये विविदिषन्ति ते सर्व्व एव मुनयो न भवन्ति,किं तर्हि कश्चिदुत्कृष्टाधिकारीत्येतद्बोधयितुं मुनिर्भवतीत्येकवचननिर्देशः । यज्ञादिकृतां गृहिणां ब्राह्मणानां प्रथमं विविदिषा ततोऽत्ताचराचरग्रहणादित्यत्रोक्तदिशा मातृभावेन ग्रहणं वेदनं पाण्डित्यं चेत्येकएवार्थः। ततश्च तेषु बालभावेनोपासनमपि हेयं मन्यमानः कश्चिदुत्कृष्टोऽधिकारी मौनं नाम भ्रूणभावेनोपासकत्वं तदाश्रय इति मुनिर्भवति । नचैतस्य मुनिभावस्य प्रव्राजिभिः सम्बन्धः, विविदिषावेदन मुनिभावाना मेककर्त्तृकत्व-

श्रुत्या पूर्वेणान्वयादाकाङ्क्षापरिसमाप्तेः । 'नैनं कृताकृते तपतः' इति फलकथने मुनिः परिव्राड् चेति द्विविधब्रह्मविदेतच्छब्देनोच्यते, अन्यथा प्रव्राजिन इत्यारम्भपदे बहुवचनमत्र चैकवचनं विरुध्येत । उभयोरेकफलकत्वं च, 'कृत्स्नभावात्' यथैषणात्रयव्युत्थानं पारिव्राज्ये,तथात्रापि, भिक्षाचर्य्यं च तद्वदेव,इत्थम्याभिमाननिवृत्तेः, स च मदीयेन धनेनेदमाहृतमित्यभिमानस्य त्यागः। विशेषस्त्वेतावान्, गृहस्थब्राह्मणस्य पुत्रोत्पत्त्या पुत्रैषणानिवृत्तिः, ब्रह्मचर्य्यादेव प्रव्रजितानां तु न तथा, किन्तु प्रजोत्पादननिवृत्तिः । व्युत्थानात्मक स्वरूपे तु न कश्चिद् विशेषो वर्त्तते । यदुक्तं भिक्षाचर्य्यमितिबहुव्रीहिसमास इति तन्न सम्यक्, तस्य जघन्यत्वात्, परिव्रजन्तीत्यनेनैवाश्रमान्तरसिद्धौ भैक्षवाश्रमस्य पुनर्विधानस्यानर्थक्यापत्तेश्च। भिक्षेव चर्य्यं=भोज्यं भिक्षाचर्य्यमित्युपमानकर्मधारये भिक्षाया दृष्टान्तत्त्वेन ग्रहणात् पारिव्राज्ये तथाचरणसिद्धेः । जाबालोपनिषदि 'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षणो ब्रह्मभूयायकल्पते' इति दर्शनात् । स्वस्याभ्याभिमानाविषयाहार्य्यत्वेन मुनिपरिव्राजोश्चरणकर्मण एकत्वात् । अत्र चरणं भोजनम् । तस्मात् गृहस्थानामेवोत् कृष्टाधिकारिणो मुनित्वेनोपसंहाराद् प्रणभावेनोपासनं विहितं तेनच परिव्राज इव निर्विशेषब्रह्म साक्षात्कारहेतुकमुक्तिलाभो गृहिणोऽपि भवतीति सिद्धम् ॥३।४।४८॥

नन्वेवं तृतीयविधिबोधितोपासकातिरिक्तानां बालभावादिरू-

माश्रित्योपासकानां फलाश्रवणात्, किं तादृगुपासनं विफलमेवेति शङ्कां निरस्यति—

( मौनाधिकरणम्—१६ )

मौनवदितरेषामप्युपदेशात् ॥३।४।४९॥

'बाल्येन तिष्ठासेत्' इतिविधिवाक्यात् इतरेषाम्' मुनीतरेषां बालभावादिकमाश्रित्योपासनस्य 'मौनवत्' मुनभावेनोपासनस्य यथा सफलत्व तथा सफलत्वमस्ति श्रुत उपदेशात्, अमौनञ्च मौनं च निर्विद्येतिश्रुतेः, यदि केवलं मौनादेव ब्रह्मसाक्षात् कारलाभः केवलं तदेव निर्विद्येत्यश्राविष्यत, येषाममौनेनोपासनं ब्रह्मसाक्षात्कारदशाया तस्यापि तदपहानमित्येतत्परतया द्वयोरेव ग्रहणात्। न च निर्वेदो वैराग्यं तदर्थक धातोः सकर्म्मकर्मकत्वमयुक्तमितिवाच्यम् अत्र त्यागानुकूलज्ञानस्य निर्वेदपदार्थतया सकर्म्मकत्वस्य युक्तत्वात् ऋधातुतधातोरिव तुल्यार्थकत्वेऽपि प्रयोगानुसारेण सकर्म्मकत्वाकर्म्मकत्वसम्भवाच। यदि वा सर्वत्र निर्विद्येति निःशेषेण वेदनानन्तर्यं बोधयेत्, तथापि नास्ति नः सिद्धान्तहानिः, अधिकारिविशेषाश्रितयोरमौनमौनयोर्विज्ञानस्य केवलमौनविज्ञानफले ब्रह्मसाक्षात्कारेऽनुपयोगात्, अयामौननिरवशेषज्ञानरूपोपासनस्यापि फलं यदि मुक्तिफलकब्रह्मसाक्षात्कारः, भवत्येव तदा तदानन्तर्यमत इतरेषामपि मोक्षफलकब्रह्मसाक्षात्कारः फलं किन्तु चिरेणेत्यपकर्षः ॥३।४।४९॥

अत्र मुक्तमबाधकमावेदयति—

## अनाविष्कुर्वन्नन्वयात् ॥३।४।५०॥

बालभावादिमाश्रित्योपासकेषु—'अनाविष्कुर्वन्' य एषणा-त्रयमनाविष्कुर्वन् भवति स एव मौनवत् फलं प्राप्नोति, अन्यस्तु एषणानुकूलरूपादर्शामिष्टफलम्, न तु मोक्षफलकतत्साक्षात्कारम्। अत्र हेतुमाह 'अन्वयात्' एषणात्रयापहानेन प्रागुक्तेन अस्यापि सम्बन्धात्। तदभावे कुतो मुक्तिफलकब्रह्मसाक्षात्कारः। तथापि न वैफल्यं कामनाविषयस्य तदधिकस्यापि भोगस्य लाभसम्भवात् बालभावादिमित्यादिपदान्मातृभावहीनज्ञानरूपस्य पाण्डित्यस्य लाभः ॥३।४।५०॥

नन्वेवं निर्विशेषब्रह्मापरोक्ष्यकारणपरम्पराया वाजसनेयश्रुतेः प्रकारभेदः प्राप्तः, एको हि ब्रह्मजिज्ञासानाम्, स च प्रागुक्ते निर्विशेषे ब्रह्मणि स्वाभिन्नतया श्रवणमननानन्तरं महाशक्तिरूपतादृशा-ब्रह्मकृपाप्रयुक्तसमाधिनिष्ठारूप इति, तदन्यश्च गृहिणां मातृभावेन सविशेषब्रह्मोपासनरूपः, तत्र श्रवणादिसद्भावेऽपि स्वोपास्योपासक-भावयोरेकान्ततः परिहारेण तदुपयोगः, समुद्रतरङ्गदृष्टान्तस्य प्रागुपदर्शितस्योपासकेनानुसरणात्। तत्र समाधिर्निराकारे श्रीदुर्गा-द्याकारे वा ब्रह्मणि चित्तवृत्तिनिरोधः, साकारे चासौ बाह्यपूजा-जपादिसहकृतः, तदुत्तरं जगदम्बायाः कृपा इत्येवंभेदे प्रथम-प्रकारेण सिद्धानामैहिकब्रह्मापरोक्ष्यं नियतं, समाधिनिष्ठायां योगजसाक्षात्कारे बाधविरहात्, सामग्र्यधीनत्वात् कार्याणाम्, यज्ञतपआदिसाधनानां मातृभावेनोपासकानां ह्येवात्मशक्तेः

कैवल्यप्रदकृपाभाजनानां गृहिणां तु ऐहिकं तत् फलं भवति न वेतिसंशयः, तत्राह न भवति, उपासनादिजन्यानामदृष्टफलानामा मुत्रिकत्वनियमादिति प्राप्तेऽभिधीयते—

( ऐहिकाधिकरणम्—१७ )

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥३।४।५१॥

गृहिणा तादृगुपसनादिसञ्जातमातृकृपाया 'ऐहिकमपि' उपासनावच्छेदकजन्मन्यपि ब्रह्मापरोक्षज्ञानं जायते, 'अप्रस्तुत-प्रतिबन्धे' अप्रस्तुते = अनुपस्थिते, प्रतिबन्धे = बाधके। 'अपि' शब्देन आमुत्रिकमपि समुचितम्, प्रमाणमाह 'तद्दर्शनात्' यद्यदुक्तं तेषां सर्वेषां दर्शनात्, स्मृतौ श्रुतौ च दृष्टत्वात्। तथाहि सप्तशत्यां सुरथसमाध्योर्मुन्मय्यां श्रीजगद्धात्रीमूर्त्तौ बाह्योपचारैः कृतपूजनयोर्जपरतयोः समाधिमतोश्च भगवत्याः कृपया, समाधेर्ज्ञानवरलाभो दृश्यते, न च तज्ज्ञानमामुत्रिकम्, सुरथं प्रति वरदानकाले 'मृतश्च भूयः संप्राप्य जन्म देवाद् विवस्वतः' इति विशेषोक्तेः, समाधिवैश्यं प्रति तु 'तव ज्ञानं भविष्यति' इत्यविशेषोक्त्यैहिकज्ञानस्य वररूपतया प्रदान-प्रतीतेः, समाधेः प्रार्थनाया ऐहिकदुःखनिवृत्त्यर्थाया अपूरणे भगवत्या वरदानस्य वैफल्याच्च। नचेदं न ब्रह्मसाक्षात्काररूपं किं तु पुत्रदारादिषु ममतावर्जनहेतुभूतं ज्ञानमिति वाच्यम्, ब्रह्म-साक्षात्कारं विना सङ्गाद् विशिष्टच्युतेरसम्भवात्, सामयिकस्तत्-सङ्गत्यागो ज्ञानान्तरेण भवन्नपि मूलानुच्छेदात् सङ्गेन पुनरभिभव

वारयितुं नैव प्रभवतीति नासौ विच्युतिः, आत्यन्तिकी च्युतिर्हि विशिष्टा च्युतिरिति तदुक्तं सप्तशत्यां 'सोऽपि वैश्यस्ततो ज्ञानं वव्रे निर्विण्णमानसः। ममेत्यहमिति प्राज्ञः सङ्गविच्युतिकारकम्।' ततो भूपाय वरदानानन्तरं देवीवचनम् 'वैश्यवर्य्य त्वया यश्च वरोऽस्मत्तोऽभिवाञ्छितः। तं प्रयच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति।' इति, अत्र संसिद्धिः, सम्यक् सिद्धिः सा च मुक्तेरन्या कापि नास्ति तदर्थकज्ञानस्य निर्विशेषब्रह्मसाक्षात्काररूपताया ध्रौव्याच्च। तस्मात् समाधिवैश्यस्य ब्रह्मसाक्षात्कारात्मकापरोक्षज्ञानमैहिकं जातमिति सिद्धम्। तत्रैव सुरथस्य तादृक् फलाभावस्तु 'अप्रस्तुतप्रतिबन्धे' इत्यत्र प्रमाणम्। विषयराग एव तत् प्रतिबन्धकः। सुरथस्याप्यामुत्रिकं ज्ञानं प्रतीयते, सावर्णि मनुरूपतायां तस्य मुक्तेः स्मृतौ दर्शनात्, 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इत्यादौ कृतात्मान इत्यनेन ब्रह्मसाक्षात्कारनिष्पत्तिबोधनात्, नह्यनुत्पन्नब्रह्मसाक्षात्कारस्य मुक्तिः सम्भवति, तमेव विदित्वातिमृत्युमेतीति श्रुतेः। श्रुतौ दृष्टश्च भृग्वादीनामैहिकफलं ब्रह्मसाक्षात्कारो न बुडिलादीनाम्। तैत्तिरीयके येन तपसा ब्रह्मज्ञानं भृगोः श्रूयते तच्छक्तिरूपदुर्गोपासनमेव, 'तपसा ज्वलन्तीम्' 'कर्म्मफलेषु जुष्टाम्' इति च दुर्गाविशेषणयोर्ऋग्वेद दर्शनात् तपोरूपतया कर्म्मफलाधिष्ठातृस्वरूपेण तस्याः प्राधान्याद् अव्यक्त प्रधानगामीतिन्यायेन 'तपसा ब्रह्म विजिज्ञासस्व' इति भृगु प्रति सामान्यबोधकवरुणवचसः प्रधानगामितया तथा प्रतीतेः। 'तपस्तप्त्वा आनन्दो ब्रह्मेति व्यजानात्,

( तै० ३।५।६ ) इति गृहिणा तपसैहिकब्रह्मसाक्षात्कारस्य प्राप्तत्वेन प्रकृतोपधायकत्वाच्च, ब्रह्मणो देवात्मशक्तितया मातृतया दुर्गादिरूपतायास्तत्तद्रूपयैव मातृभावेनोपासकानां गृहिणा तत्साक्षात्कारस्य चासकृत्प्रतिपादितत्वात् तस्मात्सति-बाध ऐहिकं तत् फलमपीतिसिद्धम् ॥३।४।५१॥

ब्रह्मपरोक्षज्ञाने यथाश्रमभेदेनाधिकारिभेदेन वा साधने प्रकारभेदनियमः, तत्फले मुक्तावपि किमेवम् ? इति जिज्ञासायामाह—

( मुक्तिफलाधिकरणम्—१८ )

## एवं मुक्तिफलानियमस्तदवस्थावधृते-स्तदवस्थावधृतेः ॥३।४।५२॥

अनियम इत्यस्य उत्तरपदार्थेन, एवमित्यस्य सम्बन्धः, घटस्यानधिकरणमित्यादिवत् । मुक्तिरूपे फले सन्यासित्व गृहित्वादिविशेषप्रयुक्त एव नियमो भेदव्यवस्था नास्तीत्यर्थः, तदवस्थावधृते = मुक्ते प्रतिबन्धकनिवृत्तिद्वाराभिव्यक्तस्वरूपा या अवस्था ब्रह्मभावस्तस्या 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादि श्रुत्यावधारणात्, ब्रह्मसाक्षात्कारहेतोविशेषे सत्यपि तत्फले सन्यासिगृहिणोरविशेषस्य श्रुत्या प्रतिपादनात् 'ब्रह्मसंस्थोऽ-मृतत्वमेति' इति श्रुतावविशेषेण श्रवणात् । न च ब्रह्मसंस्थ इति चतुर्थाश्रमिपरमिति वाच्यं 'त्रयो धर्मस्कन्धा—इत्युपक्रम्य

पुण्यलोका भवन्ति' इत्यनन्तरं ब्रह्मसंस्थ इति पदेन प्रकान्तेषु यो ब्रह्मसंस्थस्तस्यामृतत्वं फलमित्यस्य तात्पर्य्यस्य बोधितत्वात्। न हि ये यज्वानस्ते ब्रह्मसंस्था न भवेयुरित्याकारकः कश्चिदस्ति विप्रतिषेधः, न वा नैष्ठिकादीनामस्ति ब्रह्मसंस्थत्वे किञ्चिद् बाधकम्। प्रत्युत श्रुतिलिङ्गादवगम्यते सनत्कुमारादीनां तथात्वम्। स्मृतिरपीममर्थं प्रमाणयति 'ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा। एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः। सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः। यथोक्तकारिणं विप्रं नयन्ति परमां गतिम्' इत्यविशेषेण परमगतिप्रदर्शनात्। तथा च य एव ब्रह्मसंस्थस्तस्यैवामृतत्वमित्येव श्रुत्यर्थः, परिव्राज एव ब्रह्मसंस्थत्वमिति न कश्चिन्नियमः, अत एव गृहस्थानामुद्दालकोपस्त्यादीनामपि ब्रह्मसंस्थत्वं गम्यते। श्रूयते च भृग्वादीनाम्, नचेयं स्मृतिः क्रमगृहीताश्रमचतुष्टयस्य समुच्चितफलं ज्ञापयति न प्रत्येकम्, इतिवाच्यम्, नैष्ठिकब्रह्मचारिणः 'एवं चरति यो विप्रो ब्रह्मचर्य्यमविप्लुतः। स गच्छत्युत्तमं स्थानं नचेह जायते पुनः इति' परमगतिस्मृत्येकवाक्यतया प्रत्येकमेव तज्ज्ञानजनकत्वसिद्धेः॥ यद्वा पूर्वाधिकरणसमयमुपसंहरति,—एवमिति, तदर्थश्च, 'एवम्' गृहिणोऽपि ऐहिकब्रह्मापरोक्ष्यज्ञाने सति- मुक्तिफलानियमः,—प्रव्रज्यायामेव मुक्तिः फलं न गृहिणामितिनियमो न, 'तदवस्थावधृतेः', इत्यस्य प्रागुक्त एवार्थः। तस्मान्नास्ति मुक्तौ सन्न्यासिगृहिणोः कश्चिद्

विशेष इति स्थितम् । अन्तिमपदस्य द्विरावृत्तिरध्यायसमाप्तिद्योतनार्था ॥३।४।५२॥

इति ब्रह्मसूत्रशक्तिभाष्ये पुरुषार्थसाधनोपदेशाख्ये तृतीयाध्याये साधनविचारो नाम चतुर्थ पाद ।

समाप्तश्चायमुत्तरमीमासाख्यब्रह्मसूत्र शक्तिभाष्ये तृतीयोऽध्याय ॥

# ब्रह्मसूत्रस्य

( उत्तरमीमांसायाः )

# शाङ्करभाष्ये

---

## चतुर्थाध्याये प्रथमः पादः ।

निरूपणप्रकारीभूतफलावच्छेदान्तर्गतसाधनविचारोऽवसितप्रायः । फलाश्रयविचारे तृतीयाध्यायान्तिमभागादुपक्रान्तेऽपि बलवज्जिज्ञासया साधनविचारशेषोऽत्र प्रस्तूयते—

( आवृत्त्यधिकरणम्—१ )

**आवृत्तिरसकृदुपदेशात् । ४।१।१ ।**

'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' ( छा० ८।७।१ ) '
'ब्रह्मविदाप्नोति परम्' ( तै० २।१ ) इति, 'तमेव विदित्वाति-मृत्युमेति' ( श्वेता० ३।८ ) इति, 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः' ( बृ० ४।४।२१ ) इति चैवमादिश्रुतिप्राप्तस्य

ब्रह्मवेदनस्यावृत्तिरनुष्ठेया न वा ? इति संशये प्रयाजादिवत् सकृदेव तत् कर्तव्यं सकृत् कृते कृतः शास्त्रार्थ इति न्यायात् नावृत्तिरनुष्ठेयेति प्राप्तेऽभिधीयते आवृत्तिरित्यादि। 'आवृत्तिः' अभ्यासः, अनुष्ठेया, कुतः ? 'असकृदुपदेशात्' आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति दर्शनरूपवेदनस्य श्रवणमनननिदिध्यासनाना वेदनस्वरूपाणां च आवृत्त्यैवोपदेशात्। यदि सकृत् कृते कृतः शास्त्रार्थ इति न्यायेन प्रयाजादिवत् सकृदनुष्ठेयमेवत् स्यात् दर्शनश्रवणादिरूपेण बहुशोऽनुष्ठेयतया तदुपदेशो न स्यादितिभावः ॥४।१।१॥

ननु नायमसकृदुपदेशो वेदनत्वेन, किन्तु दर्शनत्वादिना, तेषामेकैकस्य प्रयाजानुयाजवन्मिथोभिन्नस्य सकृत्सकृदनुष्ठानम्। दर्शनं सकृत्, श्रवणं सकृदिति क्रमेण नत्वावृत्तिरित्याशङ्कां निरस्यति—

## लिङ्गाच्च । ४।१।२ ।

'लिङ्गात्' 'तत्वमसि' महावाक्यस्य नवकृत्व श्वेतकेतोः श्रवणरूपश्रौतज्ञापकात्, आवृत्तिरनुष्ठेया—यावद् ब्रह्मसाक्षात्कारो निर्विचिकित्सो नोत्पद्यते तावदेव वेदनावृत्तिरनुष्ठेयेति सिद्धान्तः । चकारः पूर्वहेत्वपेक्षसमुच्चयद्योतकः ॥ ४।१।२ ॥

वेदनस्यावृत्तिं प्रसाध्य वेदनविषयं तत्त्वमसीति श्रुत्यर्थं परिष्कुर्वन्नाह—

( आत्मत्वोपासनाधिकरणम्—२ )

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ।४।१।३।

योऽयं वेदनविषयः स किमुपासितुरन्यस्तस्यात्मा वा ? इति

संशयेऽन्य इति प्राप्तमन्वर्थ्यान्यधिकरणादौ तथा प्रतिपत्तेरेवं प्राप्तेऽभिधीयते—'आत्मेति तूपगच्छन्ति' 'तु' शब्दः पूर्वपक्षव्यवच्छेदार्थः, 'आत्मेति' उपासितुः सत्तावावच्छिन्नप्रतिबिम्बचैतन्यस्य यत् स्वरूपं स एव वेदनतयोक्तस्य उपासनस्य विषय इत्ययं सिद्धान्तः। तत्स्वरूपं परमात्मैव, आरम्भणाधिकरणादौ स्थापितपूर्वश्चायं पक्षः। उपासनप्रकरणमिदमिति कृत्वा विशेषाभिधित्सया चात्र पुनरुत्थापितः। विशेषमाह 'उपगच्छन्ति' जाबाला इतिशेषः, उप गच्छन्ति = उपासते, 'त्वं वा अहमस्मि भगवो देवतेऽहं वा त्वमसि देवते' इति। अत एव 'ग्राहयन्ति च' तत् त्वमसीति विधया गुरुमुखेन शिष्यमिममर्थं च, छन्दोगा—इति शेषः, तत्पदार्थत्वंपदार्थयोर्भेदे सामानाधिकरण्यप्रयोगो न स्यादर्थान्तरकल्पने लक्षणाप्रसङ्गात्, इममेव सूत्रकृदाशयमभिप्रेत्य तत्पदार्थत्वंपदार्थौ पुरस्तादशोधयाम। जाबालानामुपासनश्रुत्या मातृभावेनोपासनं भूयाभावभाश्रयतो भेदाभावप्रतीत्या सूपपादितम्। ननु, अपरिच्छिन्ने चिदचिदात्मके ब्रह्मणि परिच्छिन्नचिदचिदात्मकजीवभेदस्य मृदि घटभेदवत् प्रसाधितपूर्वतया जाबालश्रुतिः कथमनुबध्यते इति चेन्न सामान्यरूपायां मृदि घटभेदसत्त्वेऽपि घटघटिकायां मृदि तद्भेदासत्त्वस्यैव उपासितुः सत्तावावच्छेदेन ब्रह्मणि भेदासत्त्वेन जाबालोपासनस्यानुगतेरव्याहतत्वादिति संक्षेपः ॥ ४।१।३ ॥

ननु 'या प्राणेन सम्भवत्यदितिर्देवतामयी गुहां। प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत, एतद्वै तत्' इति ( क ०४ वल्ली ७ )

काठकमन्त्रवर्णस्य 'कृत्वा मूर्तिं महीमयीम् । अर्हणां चक्रतुस्तस्याः' इति सप्तशतीमन्त्रव्याख्यातायां ब्रह्मसाक्षात्कारफलायामुपासनायामनुपयोगः प्रसज्यत इति चेत् कोऽस्यार्थो मन्त्रवर्णस्य, कथं तस्य तादृशोपासनोपयोगित्वं, कथं वानुपयोगः प्रसज्यत इति वक्तव्यम्; तदुच्यते, अदितिः अखण्डनीया नित्या महाशक्तिः 'ग्रहाहितम्' इति मन्त्रवर्णान्तरात् गुहां हृदयाकाशं प्रविश्य तिष्ठन्ती देवतामयी देवतेजः शरीरा प्राणेन सम्भवति संसृज्यते स्वसृष्टं प्राणमादाय तस्मिन् शरीरे तेन सह तिष्ठति, सा भूतेभि· पृथिव्यादिभिर्व्यजायत जलादियुक्तमृदा निर्मिता प्रादुर्भूता, इतिमन्त्रार्थः, तद्विवरणपरायां सप्तशत्यां 'नित्यैव सा जगन्मूर्तिः' इति 'तस्याः शङ्गो भुजं प्राप्य पपात नृपनन्दन' इति, 'चितिरूपेण या कृत्स्नमेतद् व्याप्य स्थिता जगत्' इति, 'जनस्य हृदिसंस्थिते' इति 'ततः समस्तदेवानां तेजोराशिसमुद्भवाम्' इति चोक्ता या जगन्माता 'दुर्गे स्मृता' इत्यादिना स्तुता, तस्याः 'कृत्वा मूर्तिं महीमयीम्' इत्यत्र भूतेभिर्व्यजायतेत्यस्य विवरणम्, अर्हणां चक्रतुरित्यनेनोपासनञ्च लभ्यते, इत्युपासनीयायाः महीमय्या मूर्तेः प्रत्यगात्मनो भिन्नत्वात्, तदुपासनं न ब्रह्मसाक्षात्कारफलकमित्यनुपयोगः, नच माभूदिदमात्मोपासनं मनो ब्रह्मेत्युपासीतेत्यादिवत् प्रतीकोपासनमेव भवत्विति वाच्यं, प्रतीकोपासनेन ब्रह्मसाक्षात्कारासम्भवात् 'सन्दर्शनार्चमन्वायाः' इति 'प्रत्यक्षं प्राङ्चण्डिका' इति च मृन्मयमूर्तिपूजायास्तत्फलकत्वप्रतिपादनादित्तीमां शङ्कां परिहरति—

( प्रतीकाधिकरणम्---३ )

न प्रतीकेन हि सः । ४।१।४ ।

'न' इयं शङ्का न युक्ता, हि यतः, 'प्रतीकेन' प्रतीकावच्छेदेन 'सः' परमात्मा उपास्यते, न तु प्रतीकः=प्रतिमा जडा प्रतिकृतिरुपास्यते। यद्वा शङ्कोत्तरं नकारविरहेऽपि युज्यते,---उत्तरं पठतीत्यनन्तरं 'सा च प्रशासनात्' ( ब्र० सू० १।३।११ ) इत्यादिसूत्रेषु शारीरकभाष्यव्याख्यातेषु नकारविरहदर्शनात्। तथा च सः' परमात्मा 'प्रतीके' प्रतिमायां 'न' नास्ति, इति 'न' किन्त्वस्त्येव हि यतः, अतः प्रतीके तदुपासनं घटते, न तु प्रतीक उपास्यते। अत' प्रतीके परमात्मोपासनं प्रत्यगात्माभेददर्शनपूर्वकं 'देवो भूत्वा देवं यजेत्' इति श्रुत्यनुगतम्, तत्तदायुक्तमर्हणं ब्रह्मसाक्षात्कारफलकमेवेति न काचिदनुपपत्तिः। यदि च प्रत्यगात्मनो बहिः प्रतिमायामसत्त्वमित्युच्यते तदपि न युक्तं 'यावानयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इति श्रुते प्रतिमायामपि तत्सत्त्वस्यानपायात्, प्रतिष्ठामन्त्रशक्त्या तदुपलब्धेश्च।' ननु प्रतीकशब्दे प्रतिमा नोपादातुं शक्यते 'न तस्य प्रतिमा अस्ति' (श्वेता०४।१९) इति श्रुत्या परमात्मनः प्रतिमायाः प्रतिषिद्धत्वादितिचेन्न, भक्तानुग्रहेण गृहीतशरीरस्य तस्य प्रतिमायाः प्रतिषेधविरहात्, निराकारस्य प्रतिमायास्तत्र प्रतिषिद्धत्वात्। ननु कुत एतत् कल्पनमिति चेत्, निराकारस्यैव तस्य पूर्वोत्तरमन्त्रपर्यालोचनया प्राप्त्या तथा प्रतीतेः। 'नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत्। न तस्य प्रतिमा अस्ति यस्य नाम महद्द यशः' ( श्वे० ४।१६) इत्यत्र

पूर्णो मन्त्रः । 'नसन्न चासन्' इति च पूर्वमन्त्रान्वादेशादद्वैतमित्याम्नातम् । अव्यवहितोत्तरमन्त्रः, 'न सदृशे तिष्ठति रूपमस्य, न चक्षुषा पश्यति कश्चनैनम्' इत्यत्राप्येवन्मन्त्रान्वादेशादेनमिति । एतन्मन्त्रस्य ऊर्द्ध्वतिर्यक्त्वादिपरिग्रहराहित्योपदेशेन, महतो यशसो नामत्वाख्यानेन च निराकारत्वस्य प्राप्तेः । तदुत्तरमन्त्रे च 'रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्' इत्यनुग्रहीतुस्तस्यैवानुकूलमुखस्वरूपावयवकथनेन साकारत्वस्य दर्शितत्वाच्च । न च निराकारस्य प्रतिमाया अप्रसक्तस्यैव प्रतिषेधो नोपपद्यते साकारत्वप्राप्त्यैव प्रसक्तायाः प्रतिमाया निषेध इति वाच्यं 'न तस्य प्रतिमा' इति तत्पदार्थस्योत्तरपादे 'यस्य नाम महद्यशः' इत्यनेन साकारपररुद्रादिनामव्यावर्तनेन निराकारपरमात्मनः प्रतिमाप्रतिषेधस्य स्पष्टीकृतत्वात् । निराकारस्यापि श्रुतिस्मृत्यनुक्तपिण्डादिरूपकाल्पनिकप्रतिमायाः सम्भवेन तन्निरासस्य युक्तत्वाच्च । प्रतिमाधिष्ठितसाकारब्रह्मो·पासनया निर्विशेषब्रह्मसाक्षात्कारस्याधिकारिविशेषेण सम्भवस्य खट्वाङ्गविष्णुचित्तिकारकज्ञानवरप्राप्तिबोधकसमाधिवैश्यवृत्तान्तेन सप्तशत्या सूचितत्वात् सर्वसामञ्जस्यम् । अत एव 'कासीत् प्रमा किं प्रतिमा किं निदानम्' (ऋ०८ मण्डल १८ सूक्त ३ मन्त्रः) इति, 'संवर्चसा पयसा सन्तनूभिरगन्महि मनसा······संशिवेन' (यजुर्माध्यन्दनीयेऽष्टमेऽध्याये १६ मन्त्रः) इति 'सहस्रस्य प्रतिमां विश्वरूपम्' ( यजुः मा० १३ अ० ४१ मन्त्र. ) इति 'एह्यश्मानमातिष्ठ अश्मा भवतु ते तनुः' ( अथर्व० काण्ड ४ अनुवाके ४

मन्त्र. ) इत्यादयः प्रतिमातन्निर्माणद्रव्यतदधिष्ठानप्रार्थनप्रतिपादकमन्त्रवर्णा न व्याहन्यन्ते। 'अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मेऽयश्च मे श्यामञ्च मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्पन्ताम्' ( यजु० मा० १८।१३ ) इत्यस्य यजुर्मन्त्रस्यानुवर्तिनी 'शैली दारुमयी लौही लेप्या लेख्या च सैकती। मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता' इति ( भाग० ११ स्कन्ध २७ अ० १ श्लोकः ) स्मृतिश्चात्र प्रमाणं वरीवर्ति। तस्मात् प्रतिमायामपि तदुपासनस्य ब्रह्मसाक्षात्कारजनकत्वमुपासकाद्युत्कर्षेण भवतीति सिद्धम्। ४।१।४।

नन्वेवमपि 'मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेति' ( छा० ५।१८।१ ) 'आदित्यो ब्रह्मेत्यादेशः' ( ५।१६।१ )। इत्यादौ यत्प्रतीकस्योपासनं श्रूयते तत्र संशय्यते ब्रह्मणि मन आदिदृष्ट्या मनआदिषु ब्रह्मदृष्ट्या वोपासनं विधीयत इति ब्रह्मपदं प्रत्यगात्मपरं परमात्मपरं वेति चाकारद्वयेन,—तत्र प्रथमे ब्रह्मण उपास्यतया श्रुतिस्मृतिप्रसिद्धत्वाद्-ब्रह्मणि मनआदिदृष्ट्योपासन प्राप्तम्, द्वितीये च ब्रह्मपदं प्रत्यगात्मपरम् तस्य वस्तुतो ब्रह्मानन्यत्वेनोपास्यत्वसत्त्वात् उपासीतेति कर्तृतयोपस्थितिनैयत्याच्च इत्येवं प्राप्तेऽभिधीयते—

( ब्रह्मदृष्ट्यधिकरणम्—४)

## ब्रह्मदृष्टिरुत्कर्षात् ४।१।५

'उत्कर्षात्' ब्रह्मणो मनआदिभ्यः प्रकर्षादुपासनार्थं तेषु ब्रह्म-

दृष्टिर्विधेया, भवति हि मन्त्रिणमुपासीनस्य तत्र राजदृष्टिः, न तु राजानमुपासीनस्य तत्र मन्त्रिदृष्टिः, अतएव न प्रत्यगात्मपरत्वं ब्रह्मपदस्य, न ह्युपासितुः स्वात्मन्युपास्यत्वबुद्धिर्ब्रह्मदृष्टिमन्तरेणोत्पद्यते तस्माद् ब्रह्मैव प्रथमोपस्थितम्, उत्कर्षात्। तत्तच्छ्रुतिपूपास्तिक्रियायां कर्म्मतया मनआदीनां, तत्क्रियाविशेषणभूतेतिशब्दार्थे च ब्रह्मपदार्थस्यान्वयबोधस्य औत्पत्तिकत्वेन मनआदिरूपेण ब्रह्मोपास्तिबोधकताया अयुक्तत्वाच्च, न हि तण्डुलपिष्टोदकं गोक्षीरमिति पिबतीत्यनेन वाक्येन पानकर्म्मताप्रत्ययो गोक्षीरे भवति। तस्मात् मनआदेरेव ब्रह्मदृष्ट्यैवोपास्यत्वं न मनआदिदृष्ट्या ब्रह्मणो नापि प्रत्यगात्मदृष्ट्या मनआदीनामिति सिद्धम्। ४।१।५।

दृष्टिप्रसङ्गादाह—

( आदित्यादिमत्यधिकरणम्—५ )

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ४।१।६

'य एवासौ तपति तमुद्गीथमुपासीत' ( छा० १।३।१ ) इत्यादिषु कर्माङ्गावबद्धेषूपासनेषु भवति संशयः—किमुद्गीथादौ कर्माङ्ग आदित्यादिदृष्टिर्विधीयते उतादित्यादिषूद्गीथादिदृष्टिः ? शब्दात्मकस्योद्गीथस्य तेजोमण्डलात्मकादित्यस्य च जडतयोत्कर्षापकर्षयोरनिर्णयात्। अत्राह—कर्माङ्गतयोद्गीथादेरुत्कर्षादुद्गीथादिदृष्टिरादित्ये विधीयत इति प्राप्तेऽभिधीयते, 'अङ्गे' उद्गीथादौ, 'आदित्यादिमतयः' आदित्यादिदृष्टयो विधीयन्ते, तस्य 'उपपत्तेः'

देवत्वात्, महाभावाद्वोत्कर्षस्योपपत्तेः, तस्मिन् फलदातृत्वसत्त्वादिति भावः, आदिपदात् सामादिपरिग्रहः । श्रुत्यन्तरसमन्वयार्थं ॥४।१।६॥

उपासनस्य प्रकृतत्वात्तदुपपादकमङ्गमाश्रित्य विचार्य्यते—

( आसीनाधिकरणम्—६ )

**आसीनः सम्भवात् ४।१।७ ।**

उपासने गतिस्थित्यासनानामनियमो विशेषानभिधानादिति प्राप्ते 'आसीन.' उपासीत 'सम्भवात्' एकाग्रतायाः सम्भवात् स्थितिगत्योः प्रयत्नापेक्षतया चित्तविक्षेपादितिभावः ॥४।१।७॥

ननु पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्कदर्शनादितिस्मृतिस्तिष्ठतोऽप्युपासनं बोधयतीति तदुपासनाद् वैलक्षण्यं दर्शयति—

**ध्यानाच्च । ४।१।८ ।**

निदिध्यासितव्य इति ध्यानविधेश्च । तत्र जपः प्रधानं ध्यानं तस्याङ्गम, अत्र ध्यानमेव दर्शनोपायतया विधीयते, तच्चेदमासनमन्तरेण सम्भवति पूर्वहेत्वपेक्षसमुच्चयार्थश्चकार उत्तरत्रापेक्ष्यम् । ४।१।८ ।

ननु प्रातःसन्ध्यायां जपरूपे सावित्र्युपासनेऽप्यादौ ध्यानम्, 'उद्यन्तमस्तं यान्तमादित्यं ध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते' इति तैत्तिरीयश्रुतेः, नचोक्तमेवाङ्गं तत्, प्रधानन्तु जप इति वाच्यम्, अङ्गप्रधानयोरत्र विशेषाभावाद्-ध्यानं यथासीनवत्तिष्ठतोऽपि सिध्यति तस्यासीनत्वे लिङ्गत्वमनुपपन्नं व्यभिचारादित्याशङ्कायामाह—

## अचलत्वं चापेक्ष्य ॥ ४।१।९ ॥

'ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षम्' ( छा० ७।६।१ ) इत्यादिश्रुतिप्रसिद्धध्यानोत्प्रेक्षा पृथिव्यादिषु 'अचलत्वम्' निश्चलत्वम् 'अपेक्ष्य', तथा च ध्यातुरचलत्वमासनेनैव सम्पद्यते । एतेनैतदुक्तं भवति, निदिध्यासनं हि जपाद्धयानाद् विलक्षणं तदेवासीनत्वस्य लिङ्ग ध्यायतीवेत्यादिश्रुतौ यद् ध्यानमुत्प्रेक्षितं तादृशं हि निदिध्यासनमितिभाव. ॥४।१।९॥

अत्रार्थे स्मृतिमपि प्रमाणयति—

## स्मरन्ति च ॥४।१।१०॥

धर्मशास्त्रप्रयोजका 'स्मरन्ति' स्मृत्या विशेषमभिदधति तथाच कात्यायनः—'तिष्ठन्नासीनः प्रह्वो वा नियमो यत्र नेदृश । तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठता ।' प्रात सन्ध्यायां सावित्र्युपस्थानं विशेषविधानात् तिष्ठन्तुतिष्ठेदन्यत्र त्वासीन एव । निदिध्यासनविधौ प्रयुञ्जीतेत्यनेनोपक्रम्य, शुचे देशे प्रतिष्ठाप्य स्थिरमासनमात्मन इत्यादिकं गीता, योगशास्त्रञ्च यमनियमासनादिकमुपदिशतः ॥ ४।१।१० ॥

आसननियमवद्देशस्यापि कश्चिन्नियमो वर्त्तते न वेति संशये देशविशेषाश्रयणमित्यस्ति नियमः शुचौ देशे प्रतिष्ठाप्येति प्रागुक्त स्मृते, समे शुचौ शर्करावह्निवालुकाविवर्जिते इत्यादिश्रुतेश्चेति प्राप्तेऽभिधीयते—

( एकाग्रताधिकरणम्—७ )

यत्रैकाग्रता तत्राविशेषात् ॥ ४।१।११ ॥

'यत्र' देशे चित्तस्य 'एकाग्रता' स्यात् तत्रोपासीत, 'अविशेषात्' देशस्य विशेषाश्रितनियमाभावात्। शुचित्वादीनामुपासकविशेषविश्रान्तत्वेनानियततरत्वात्, यथा वैष्णवानां श्मशानमशुचि, शैवशाक्तयोः शुचि—श्मशानस्थाने गमनमेव वैष्णवानामकरणीयम्, कुतस्तद्देशस्थित्या चित्तैकाग्र्यम्, भवति च तत्र शाक्तशैवयोश्चित्तैकाग्र्यमित्येवं देशस्य स्वरूपतो नास्ति कश्चिद् विशेषः, यो हि यस्मिंश्चित्तप्रसादमनुभवेत् स तं देशमधितिष्ठेत्। यत्राबाधितचित्तैकाग्र्यः स्यात् तत्रासीन उपासीत, अत एव श्रूयते—'मनोऽनुकूले······प्रयोजयेत्' ( श्वेता० २।१० ) इति, तत्र देशस्य विशेषणान्तराणि चित्तैकाग्रतोपयोगितयोपपादनीयानि ॥ ४।१।११ ॥

अथ यावन्न ब्रह्मसाक्षात्कारनिष्पत्तिस्तावदेव श्रवणादीन्यावर्त्तनीयानीति प्रागभ्युपैमः किं तु कर्म्मप्रधानममुत्र फलदं यत् तावदुपासनं तत् किमेकाह एवानुष्ठेयमाहोस्विदाप्रायणात् प्रत्यहमनुष्ठेयमिति संशये सकृत् कृते कृतः शास्त्रार्थ इति प्रागुक्तन्यायादेकाह एवानुष्ठेयमिति प्राप्तेऽभिधीयते—

( आप्रायणाधिकरणम्—८ )

आप्रायणात्तत्रापि हि दृष्टम् ॥४।१।१२॥

'आप्रायणात्' आमरणात्, प्रत्यहमेवानुष्ठेयम्, 'हि' यतः

'तत्रापि' उपासनाधिकाराद्याप्रायणमन्तरा यः काल तस्मिन् प्रत्यहं तदनुष्ठानेऽपि, 'लिङ्गम्' ज्ञापकं, श्रुतिवाक्यं 'दृष्टम्' 'स खल्वेव यावदायुषं ब्रह्म वर्त्तयन् लोकमभिसम्पद्यते' ( छा० ८।१५।१ ) इत्याकारेण प्रयत्नं भवतीति शेष. ॥ ४।१।१२ ॥

साधनविचारशेषं समाप्य फलविचार आरभ्यते—

( तदधिगमाधिकरणम्—९ )

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ४।१।१३ ॥

'तदधिगमे' ब्रह्मविद्याप्राप्तौ 'उत्तरपूर्वाघयोरश्लेषविनाशौ' 'उत्तराघस्य = अनन्तरोत्पन्नदुरितापूर्वजननयोग्यकर्मणः अश्लेष = असम्बन्ध, पूर्वाघस्य = पूर्वकृतदुरितापूर्वस्य विनाशो भवति, कुतः ? 'तद्व्यपदेशात्' तत्प्रतिपादकश्रुतेः। तत्र प्रथम पक्षे व्यपदेश —"तद् यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवं विदि पापकर्म्म न श्लिश्यते" ( छा० ४।१४।३ ) इति 'तस्यैव स्यात् पदवित्तं विदित्वा न कर्म्मणा लिप्यते पापकेनेति' (बृ० ४।४।२३) इति, द्वितीये च 'तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मान प्रदूयन्ते' ( छा० ५।२४।३ ) इति। अथवा इमं व्यपदेशमाश्रित्य भवति संशय –एतानि श्रुतिवाक्यानि विद्यास्तुतिमात्ररूपाणि वा फलबोधकानि वा ? तत्र स्तुतिमात्ररूपाणीति प्राप्तम, 'ब्रह्मविदाप्नोति परम्' इत्यादौ विद्यायाः पृथक् फलश्रवणात्, 'न हि कर्म्म क्षीयते' इति गौतमेन

विचिकित्साकोटौ 'नामुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि' इति च सिद्धान्तरूपतयान्यत्र स्मृतत्वाच्चेति प्राप्ते निर्णयसूत्रमिदम्, 'स्तुतिमात्ररूपाणि, निरर्थकत्वप्रसङ्गात्, विचारार्हश्रुतिभिरपहतपाप्मस्वरूपब्रह्मभावस्य दर्शितत्वेन ब्रह्मविद्यया ब्रह्मभावप्राप्तिमभ्युपगन्तॄणां तासु स्तुतिमात्रत्ववादस्य व्याहतत्वाच्च। श्रुतिस्मृतिविरोधे श्रुतेर्बलीयस्तयानाप्तब्रह्मविद्यपरतया स्मृतेः सङ्कोचेन सर्वेषामञ्जस्यात्।

वस्तुतः अघशब्दोऽघतज्जननयोग्यप्रवृत्तिपरः कार्य्यकारणयोरनन्यत्वात्, अश्लेषः सम्बन्धाभावः, विनाशः पुनरुत्पत्तिरहितातीतावस्था उत्तरपूर्वयोरघयोस्तादृशावश्लेषविनाशौ भवतः। अत एवास्य अनिर्विशेषब्रह्मसाक्षात्कारस्य प्राणापसरणेऽप्युत्क्रान्त्यभाववतो लिङ्गदेहविलयादुत्तराघतत्प्रवृत्तिसम्बन्धानुत्पादः, पूर्वाघतत्प्रवृत्त्योश्च समूलविनाशः, किञ्च जीवतोऽपि तस्योत्तराघसम्बन्धो न भवति, परिच्छिन्नेऽहन्तानिवृत्तेः। पूर्वं यदघं तज्जननयोग्या च राजसी तामसी च प्रवृत्तिः, तत् सर्वं पुनरनुत्पादायोद्रिक्तसत्त्वायां स्वयोनौ शाम्यति, अलब्धतादृशब्रह्मसाक्षात्कारस्यापि लब्धतद्विद्याप्रकर्षस्यैवमेवोत्तरपूर्वाघयोरश्लेषविनाशौ भवतः, विशेषस्त्वेतावान्— तेषां लिङ्गदेहविलयो मरणदशायां न भवति, तथापि ब्रह्मविद्योदयविशुद्धसत्त्वायां बुद्धावभिभूतरजस्तमस्कायामघप्रवृत्तिसम्बन्धस्य नोत्पादः, पूर्वाघतत्प्रवृत्त्योश्च पुनरनुत्पत्त्यै मरणदशायां वा प्रयतोऽर्धपथे वातीतावस्था भवति। अतएव ब्रह्मविदोऽप्युपहतोच्छिष्टजलपानप्रवृत्तिर्नाभूत्, उच्छिष्टकुल्माषभोजनप्रवृत्तिश्च प्राणात्यय-

सम्भावनाकालीनतया नाघजननीति तत्सम्बन्धसत्त्वेऽपि नायं सिद्धान्तो भज्यते। तथा च सर्वात्रानुमतिहेतोर्नानुपपत्तिरिति ध्येयम् ॥४।१।१३॥

अथयोरश्लेषविनाशावुक्त्वा पुण्यस्य तावतिदिशति—

( इतराधिकरणम् १० )

## इतरस्याप्येवमसंश्लेषः पाते तु ॥४।१।१४॥

'इतरस्यापि' पुण्यस्यापि, अपिः समुच्चये, 'एवम्' अश्लेषविनाशौ भवतः। तत्राश्लेषे विशेषमाह—'असंश्लेषः पाते तु'–'तु' किन्तु 'पाते' लिङ्गशरीरपातदशायाम्, पुण्यस्य 'असंश्लेषः' सम्यक् सम्बन्धाभावः। उत्क्रान्तिकाले लिङ्गशरीरस्याविलयाद् तद्रिक्तसत्त्वायामपि बुद्धौ सात्त्विकवृत्तिरूपस्य पुण्यस्य धर्माख्यस्याश्लेषासम्भव इत्याशङ्कानिरासायातिदेशः। एतेनैतदुक्तं भवति—स्वर्गादिभोगजनकं यत् पूर्वपुण्यं तद् ब्रह्मविद्याप्रकर्षेण लिङ्गशरीरसत्त्वेऽपि विनश्यति नक्षत्रप्रभेव सूर्योदये, ब्रह्मज्ञानरूपसत्त्ववृत्तौ भोगहेतुपुण्यवृत्तेरभिभावकतया युक्तत्वात्, उत्तरकालीनतीर्थदर्शनादिजनितस्य पुण्यस्यापि तथैव सम्बन्धाभाव, आतप इव दीपप्रभायाः, ब्रह्मोपासनजनितपुण्यं जन्यजनकभावेन महाशक्तिकरुणारूपं तु स्निग्धत एव जनकतया ब्रह्मज्ञानस्य तदनभिभावकत्वात्, यत.पुण्यस्य सम्यक् सम्बन्धाभावस्तदानीं न घटते, इहैव लब्धनिर्विशेषब्रह्मसाक्षात्कारस्य स्थूलदेहपातदशायां लिङ्गशरीरस्यासत्त्वात्, तदवच्छिन्नमहाशक्तिकृपया सार्द्धं सत्त्ववृत्तिरूपतत्पुण्यस्यापि लयः। एतदभिप्रायेण

'उभे उ हैवैष एते तरति' ( बृ० ४।४।२२ ) इति व्यपदिश्यते। ममुक्षिभाजामपि लिङ्गशरीरपातदशायामेव संश्लेषाभावः; सत्तातस्तु नोत्क्रान्तिदशायाम्। तस्मात् पुण्यस्याप्यसंश्लेषः पाते तत्त्वपविलयवदिति स्थितम् ॥४।१।१४॥

अत्र विशेषमाह—

( अनारब्धकार्य्याधिकरणम्—११ )

**अनारब्धकार्य्ये तु पूर्वे तदवधेः ॥४।१।१५॥**

उपदेशेन पूर्वाघस्य विनाश इत्यतिदेशेन च पूर्वपुण्यस्य विनाश इति प्राप्त्या भवति संशयः प्रारब्धकार्य्ये अपि पापपुण्ये विनश्यतो न वा ? इति ; तत्र पूर्वपक्षः, 'क्षीयन्ते चास्य कर्म्माणि' इति कर्म्मणां क्षयस्याविशेषेण श्रुतेः, ते अपि विनश्यत एव। इति प्राप्तेऽभिधीयते—'अनारब्धकार्य्ये' इति। 'अनारब्धकार्य्ये' अप्रारब्धफले, 'तु' एव 'पूर्वे' ब्रह्मविद्योत्पत्तेः पूर्वकृते पापपुण्ये विनश्यतः। न तु प्रारब्धकार्य्ये, 'तदवधेः' तयोरवधिश्रवणात् 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' ( छा० ६।१४।२ ) इति। प्रारब्धकार्य्यकर्म्मणां तु भोगादेव क्षयः। नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपीति स्मरणं प्रारब्धविषयम्, कल्पकोटिशतैरपीत्य-सम्भवद्योतनाय, एतच्च ब्रह्मवित्तदितरसाधारणम्, कर्म्मान्तरच्चाकृत प्रायश्चित्तादेर्ब्रह्मविदितरस्य। नचैवं वाक्यभेदः, सामान्यवाचिनः कर्म्मपदस्य प्रारब्धकार्य्यकर्म्मसामान्यब्रह्मविदितरवृत्तिप्रारब्धकार्य्येतरप्रायश्चित्तादिप्रागभावाभावविशिष्टकर्म्मान्यतररूपविशेषपरत्वेन

वाक्यभेदाभावात्। एतादृशसङ्कोचे श्रुतिरेव मानम्। ब्रह्मविदोऽपि प्रारब्धकार्य्यस्य मरणावधित्वे, पारिशेष्यात् कर्म्मान्तरस्य विद्यया नाशे च श्रुतिरुपदर्शिता प्रायश्चित्तेन पापक्षये च 'पुनस्तोमेनेष्ट्वा पुन' सवनमायाति' इति 'तरति पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्यादयः श्रुतयः प्रमाणभूता द्रष्टव्याः। प्रासङ्गिकं यत्किञ्चिदेतदिति विवेकः॥ ४।१।१५॥

नित्यनैमित्तिककर्म्मापवादमाह—

( अग्निहोत्राद्यधिकरणम्—१२ )

## अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात् ॥४।१।१६॥

पुण्यस्याप्यसंश्लेषविनाशौ विद्याबलादुक्तौ पकान्तरातीतसूत्रे। विनाशे 'क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे' ( मु० २।२।८ ) इत्युत्सर्गश्रुतिरस्ति, 'यावज्जीवमग्निहोत्रं जुहोति' इति च विरुद्धा श्रुतिः, अत्र संशयः स्वाश्रमधर्म्माणामप्यग्निहोत्रादीनां सुकृतफलस्यासंश्लेषविनाशौ भवतो न वा ? इति, इहातिदेशात् सर्वापेक्षाधिकरणेन तदपेक्षत्वप्रतिपादनाच्च कोटिद्वयोपस्थितेः ; सुकृतत्वसामान्यात् तत्फलस्यासंश्लेषविनाशौ भवतः, अनधिगतविद्यस्य तदकरणजन्यप्रत्यवायेनाभीष्टविद्याप्राप्तिप्रतिबन्धात् सर्वापेक्षोपपत्तेः इति प्राप्तेऽभिधीयते, अग्निहोत्रादि त्विति, तुशब्दः काम्यव्यवच्छेदाय। 'अग्निहोत्रादि' अग्निहोत्रादिकर्म्मानुष्ठानं, 'तत्कार्य्यायैव' तत्=मुक्तिफलकब्रह्मकृपाहेतुविद्यारूपं यत् कार्य्यं तदर्थमेव अनुष्ठीयते न तु

मुक्तिप्रतिबन्धकस्वर्गादिफलाय । तदर्थं यदि सुकृतसंश्लेषविनाशाभावौ, तत एव तस्य प्रकृतोपयोगः, अत्र हेतुः, 'तद्दर्शनात्' इति, वेदनसाधनत्वदर्शनात्, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिश्रुतेः । नच वेदनात् पूर्वं तदनुष्ठानमुत्पन्ने च वेदने निरर्थकमेव तदनुष्ठानमिति नास्त्येव संशयावकाश इति वाच्यम्, यावज्जीवश्रुतेः, विद्यापरिपालनेन वा तत्परिपाकसाधनेन वा सार्थकत्वाच्च ब्रीह्यादीनां वर्षवत् । यथावर्षं ब्रीह्यादेरङ्कुरोत्पत्तौ स्थितौ परिपक्वतायां च हेतुस्तथाग्निहोत्रादिकं विद्याया इति ध्येयम् ॥४।१।१६॥

तर्हि कतरस्य पुण्यस्याश्लेषविनाशाविति जिज्ञासायामाह—

अतोऽन्यापि ह्येकेषामुभयोः ॥४।१।१७॥

'अत' अग्निहोत्रादेर्नित्यात् कर्मण 'अन्यापि' भिन्नापि अनित्याक्षुद्रफला च साधुकृत्या वर्त्तते तदश्लेषविनाशाविति भावः' 'हि' तथाहि 'एकेषां' शाट्यायनशाखिनाम्, आम्नानम्—'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्याम्' इति, एतद् उभयोर्जैमिनि बादरायणयोराचार्य्ययोर्मतम् ॥४।१।१७॥

मुमुक्षुणा गृहस्थेनाग्निहोत्रादिकं नित्यं कर्मानुष्ठेयमित्युक्तम्, तत्तु द्विविधम्, अङ्गाश्रितविद्यासंयुक्तं तदसंयुक्तं च 'य एवं विद्वान् यजति' इति, 'य एवं विद्वान् जुहोति' इति, 'य एवं विद्वाञ्छंसति' इत्यत्र च तद्विद्यासंयोगस्य 'तेनोभौ कुरुतो यश्चैवं वेद यश्च न वेद' इत्यत्र तदसंयुक्तस्यापि श्रवणात्, एवं स्थितेऽङ्गाश्रित-

विद्यासयुक्तमग्निहोत्रादिकं ब्रह्मविद्यया सहैककार्य्यतयैव किमनु ष्ठेयम्, उत तदसयुक्तमपीति संशये, विद्यया सहैककार्य्यत्वमङ्गाश्रित विद्यासयुक्तस्य कर्म्मण एव युक्त विद्येति समाख्यया तस्य लाभादिति प्राप्तेऽभिधीयते—

( विद्याज्ञानसाधनत्वाधिकरण विद्या-

सयोगाधिकरण वा—१३ )

यदेव विद्ययेति हि ॥४।१।१८॥

अङ्गाश्रितविद्यासयोगविरहितमपि नित्य कर्म ब्रह्मविद्यार्थ त्वादनुष्ठेय 'ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यविशेषश्रवणात 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तर भवति' इतिश्रुत्या च विद्वदविद्वत्कर्तृकत्वाविशेषेण कृतिविषयतया यज्ञ मात्रस्य प्राप्ते, 'तेनो भौ कुरुतो यश्चैव वेद यश्च न वेद' इति विद्वद विद्वत्कर्तृकयो कर्म्मणोरेकस्य वीर्य्यवत्तरत्वमिति प्रकर्षेऽप्यन्य स्यापि वीर्य्यवत्त्वज्ञापनेन फलजनने तुल्यत्वप्रतीतेश्च । अन्यथा वीर्य्यवत्त्वमेव व्याहन्येत । तस्मात्, अङ्गाश्रितविद्यासयोगरहित मप्यग्निहोत्रादिकमनुष्ठेयमिति सिद्धम् ॥४।१।१८॥

'अनारब्धकार्य्ये' ( ब्र० सू० ४।१।१५ ) इति सूत्रेणानारब्ध कार्य्ययोरश्लेषविनाशावुपसहृतौ, उक्तश्च तदवधि, तत्रावधिश्रुति 'यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इति, विमोक्ष खलु देहपात, अथ कथ तस्यावधित्वमितिचिन्तायामाह—

( इतरक्षपणाधिकरणम्—१४ )

## भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥४।१।१९॥

'इतरे' प्रारब्धकार्य्ये पापपुण्ये—'भोगेन' तद्देहावच्छिन्न-स्मृत्याद्यवच्छेदकदेहावच्छेदेन यावदायुः 'भोगेन क्षपयित्वा' भोगादेव विनाश्य, सम्पद्यते—सत्सम्पन्नो भवति 'ब्रह्म सन् ब्रह्मा-प्येति' इति श्रुतेः। भोगेन क्षपणादेव तस्यावधित्वं घटते, प्रारब्धेनैव देहो धार्य्यते तत्क्षपणाद्देहपात इति भावः। अज्ञानरूपमूलाभावाद् विचारितपूर्वयोग्यताभावाद् वा न पुनरावृत्तिः। वसिष्ठादी-नामाधिकारिकपुरुषाणां देहान्तरमपि तद्देहावच्छिन्नस्मृत्या-वच्छेदकमिति नैकदेहपातेन तेषां प्रारब्धकार्य्यकर्मक्षयः, यावदधिकारं तत् स्थितेरित्युक्तम्।

तदयं निर्गलितोऽर्थः, त्रिधा खलु मुक्तयः, जीवन्मुक्तिः, कैवल्यम्, क्रममुक्तिश्चेति, तत्र जीवन्मुक्तिः सन्न्यासिनां निदिध्या-सनपरिपाकजनितमहाशक्तिकृपया निर्विशेषतत्स्वरूपसाक्षात्कारः, अस्मिन् कृपालाभे परिव्रज्योचितधर्म्मानुष्ठानं सहकारि। गृहिणां निराकारे दुर्गादिरूपे वा मातृभावादिना बालभावादिनाश्रित्य सविशेषमुपासीनानां मन्त्रादिमहिम्ना सविशेषतत्साक्षात्कारा-नन्तरं तदीयकृपयैव निर्विशेषतत्स्वरूपसाक्षात्कारः, वनिनां ब्रह्म-चारिणाञ्चानयोरेकतरदिशा प्रवर्तमानानां तत्साक्षात्कारश्च जीवन्मुक्तिरुच्यते, सन्न्यासिनां निर्विशेषब्रह्मसाक्षात्कारे, गृहिणां सविशेषब्रह्मसाक्षात्कारे च प्रदर्शितक्रमः प्रायिकः क्वचिद्वैपरीत्यमपि।

जीवन्मुक्तस्य तत्स्थूलदेहावच्छिन्नसमृत्यवच्छेदकस्थूलदेहपातात् कैवल्यम् । लिङ्गदेहलयश्च तत्क्षणे तदव्यवहितपूर्वक्षणे वा । तत्र सन्न्यासिनां ब्रह्मसाक्षात्कारोत्तरं दैहिकसंस्कारवशादनुष्ठितस्याश्रमधर्मस्य चाश्लेषो ममत्वबुद्ध्यविषयत्वेनेत्यर्थात्, तद्देहपातदशायां लिङ्गशरीरोपादाने सत्त्वरजस्तमोलक्षणे लिङ्गशरीरेण सह तस्य विलयः । गृहिणां तु ब्रह्मसाक्षात्कारोत्तरभवानां सुकृतदुष्कृतानां तथैवाश्लेषः, लिङ्गशरीरलयस्थानसत्त्वरजस्तमोद्वारैव प्रियजनेषु सुकृतानां गतिरप्रियेषु च दुष्कृतानां गतिरिति विशेषः, 'तस्य पुत्रा दायमुपगच्छन्ति सुहृदः साधुकृत्याम्' इति श्रुतौ तदानीं दायाधिकारितायाः पुत्रेषु कथनात् । सन्न्यासिनान्तु प्रव्रज्याकाल एव स्वत्वनिवृत्त्या दायासम्भवात् 'प्रियेषु सुकृतं स्वेषु' इति स्मृत्युक्तेश्च सन्न्यासिपरत्वात् । क्रममुक्तिश्च द्विविधा मुख्या गौणी च तत्र मुख्या देवयानेन गतस्य स्वर्गलोके निर्विशेषब्रह्मसाक्षात्कारेऽपुनरावृत्तये सत्संपत्तिः, अर्द्धपथ एव सुकृतदुष्कृतयोर्लिङ्गशरीराग्निध्वान्तिः सत्सम्पत्तेः प्रागेव लिङ्गशरीरलयश्च । गौणी मुक्तिस्त्वाकल्पं ब्रह्मलोकवासः । इतिश्रुतिदर्शिता सरणिः, मुक्तिफलाधिकरणन्तु जीवन्मुक्तिकैवल्यपरमित्यवधेयम् ॥४।१।१९॥

इति ब्रह्मसूत्रशक्तिभाष्ये फलोपदेशाख्ये
चतुर्थाध्याये जीवन्मुक्तिनिरूपणं
नाम प्रथमः पादः ।

## चतुर्थाध्याये द्वितीयः पादः ।

प्रथमपादान्तिमसूत्रे ब्रह्मविदः सत्सम्पत्तिरुक्ता । तत्रोत्क्रान्त-प्राणोऽनुत्क्रान्तापसृतप्राणश्चेति द्वैविध्यं ब्रह्मविदः । तत्र प्रथममुत्क्रान्तिक्रममाह—

( वागधिकरणम्—१ )

**वाङ्मनसि सम्पद्यते दर्शनाच्छब्दाच्च ॥४।२।१॥**

'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' (छा० ६।८।६) इति श्रूयते, अत्र संशयः, किमिह वागिन्द्रियस्य मनसि सम्पत्तिराम्नायते कि वा वचनस्य ? वाक्छब्दस्य वागिन्द्रियवत् 'वाग् वा इदं सर्वं भूतम्' (छा० ३।१२।१) इत्यादिश्रुतौ वचनेऽपिप्रयोगदर्शनादिति। वचनस्य सम्पत्तिरिहोच्यते, धर्मिरूपस्य वागिन्द्रियस्याप्रकृतिभूते मनसि विलयेन तद्भावापत्तिरूपसम्पत्तेरसम्भवात् । धर्मरूपस्य वचनस्य त्वप्रकृतिभूतेऽपि विलयसम्भवात् वह्नौष्ण्यस्येव जले इति प्राप्तेऽभिधीयते,—'वाङ्मनसि सम्पद्यते' इति वागिन्द्रियं मनसि सम्पद्यते स्वव्यापारं विहाय संयुज्यते इत्यर्थः, युक्तश्चाप्रकृतौ संयोग । विलयेन तद्भावापत्तिरूपसम्पत्तिस्तु न विवक्षिता । वाक्पदं कुतो

न वचनपरमिति तत्राह 'दर्शनात्' मनः प्राणसमभिव्याहारदर्शनात् 'अयमात्मा वाङ्मयो मनोमयः प्राणमयः' ( बृ० १।५।३-५ ) इत्यादौ ; तथाच समानरूपाः सहचरा भवन्तीति न्यायेन मनः प्राणरूपयोः सहचरयोर्धर्म्मिरूपत्वाद् वाचोऽपि तद्रूपताया युक्तत्वात्। बलीयो हेत्वन्तरमाह—'शब्दाच्च' वाङ्मनसि सम्पद्यते इति श्रुतेश्च, मुख्यवृत्त्या वागिन्द्रियस्योपस्थापनादितिभावः ॥४।२।१॥

श्रुत्यर्थं परिष्कुर्वन्नाह—

## अत एव च सर्वाण्यनु ॥४।२।२॥

'अत एव' शब्दादेव, चकारेण मनसीत्यस्य, विपरिणतवचनस्य सम्पद्यत इत्यस्य चानुकर्षः। 'अनु' निर्व्यापाराया वाचो मनसि संयोगेन सह 'सर्वाणि' वाग्व्यतिरिक्तानि नवेन्द्रियाणीत्यर्थः, मनसि सम्पद्यन्ते स्वव्यापारं विहाय मनसि संयुज्यन्ते, अत्र शब्दो यथा 'तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः' (प्र० ३।९) इति श्रुतिः, विगतोष्मदेहो जीवो मनसि संयुक्तैरिन्द्रियैः सह देहान्तरं प्राप्नोतीति तदर्थः। तदेव युक्तं 'सह कर्म्मणैति लिङ्गं मनो यत्र निषक्तमस्य' इति श्रुतेः, तृणजलायुकश्रुतेश्च देहान्तरप्राप्तिरवधेया। विवृतमिदं पुरस्तात्। वाङ्मनसीति श्रुतिश्च सर्वेन्द्रियोपलक्षणार्था श्रुत्यन्तरादित्यावेदयितुं पृथगिदं सूत्रमिति बोध्यम् ॥४।२।२॥

नन्वेवं स्वस्ववृत्तिविरहितानां बहिरिन्द्रियाणां मनसि संयोग एव किमुत्क्रान्तिर्यतस्तदनन्तरं देहान्तरप्राप्तिरुच्यते इत्याशङ्कां

परिहृत्तं नेयमुत्क्रान्तिरपितु तत्क्रमोऽयमान्तरालिकमवस्थान्तरं त्वस्तीत्याशयेनाह—

( मनोऽधिकरणम्—२ )

**तन्मन उत्तरात् ॥४।२।३॥**

'तत्' संयुक्तेन्द्रियकं 'मन.' प्राणे सम्पद्यते सम्बध्यते, कुतः उत्तरात् 'मनः प्राणे' इत्युत्तरशब्दात्, वाङ्मनसि सम्पद्यत इति पूर्वः शब्दः तदपेक्षमस्योत्तरत्वम्। सम्पद्यत इति शब्दमात्रस्यात्रानुकर्षः नतु तदर्थस्य, यतः, प्राणशब्दोऽन्यत्र क्वचित् क्वचिद् वृत्त्यर्थकोऽप्यत्र श्रुहितस्त्वपरः, प्राणस्य प्रज्ञात्मता श्रुतेस्तथात्वेच मनसः साहंकारस्य, तत्र लयसंभवादत्र सम्पत्तिस्तद्भावापत्तिः। प्रज्ञानादिरूप-वृत्तिविलय एव मनसः प्राणभावापत्तिरिति बोध्यम् ॥४।२।३॥

अन्यत्र वक्तुं प्राणस्तेजसीति शब्द व्याचष्टे—

( अध्यक्षाधिकरणम्—३ )

**सोऽध्यक्षे तदुपगमादिभ्यः ॥४।२।४॥**

'सः' प्राणः, 'अध्यक्षे' जीवात्मनि सम्पद्यते सम्बध्यते, कुत उपगमे:, एवम् ? 'तदुपगमादिभ्य.' उपगमोत्क्रमणावस्थानश्रुतिभ्यः, श्रुतिस्तावत्—'एवमेवात्मानमन्तकाले सर्वे प्राणा अभिसमायान्ति यत्रैतदूर्ध्वोच्छ्वासी भवति' इति, उत्क्रमणे—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ०४।४।२) इति, अवस्थाने च—'सविज्ञानो भवति' इति विज्ञायतेऽनेनेति विज्ञानं प्रज्ञा, तत्सहितस्तल्लक्षणपञ्चवृत्तिप्राणादिसहितो भवति—तेभ्यो ज्ञायते प्राणोऽध्यक्षे सम्पद्यत इति तदर्थः।

नचैवं प्राणस्तेजसीति दर्शितश्रुतिविरोध इति वाच्यम्, अनुगमादिश्रुत्यनुरोधेन तेजसीत्यस्य देहौष्ण्यवत्तेज सम्बन्धोपलक्षिताध्यक्षार्थकत्वाद्वक्ष्यमाणप्रमाणाच्च ॥४।२।४॥

तत् प्रमाणमाह—

## भूतेषु तच्छ्रुतेः ॥४।२।५॥

'भूतेषु' पृथिव्यादिषु, तच्छ्रुतेः तत्सम्बन्धश्रुतेः, 'पृथिवीमय आपोमयस्तेजोमय', इति रासरत्तो जीवस्य पृथिव्यादिमयत्व श्रवणात्तेजस्त्व नानुपपन्नम्। अतएव तेज सम्बन्धोपलक्षिताध्यक्षस्य परमात्मस्वरूपाया परस्या देवताया सम्पत्तिरिति समुदितार्थो निरवद्य ॥४।२।५॥

नन्वेवमपि पृथिव्यादिमयत्वेन श्रुतस्याध्यक्षस्य तेजोमात्रत्वेनोपादानमयुक्तमित्याशङ्क्याह—

## नैकस्मिन् दर्शयतो हि ॥४।२।६॥

'एकस्मिन्' भूते 'न' जीवात्मसम्बन्ध उत्क्रान्तिसमरण-काले न भवति, किन्त्वनेकभूतसम्बन्ध, 'हि' तथाहि 'दर्शयत' 'आप पुरुषवचस' (छा०५।३।३) इत्यादिश्रुतौ प्रश्नप्रतिवचने इति शेष। तत्र यथैकस्य भूतस्यापा ग्रहणेन भूतत्रयग्रहण त्रिवृत्कृतत्वात्तथात्रापि तेजोमात्रग्रहणेनैव पृथिव्यादिग्रहणात्, अत्र तेज-पदस्य त्रिवृत्कृततेज परत्वेन 'पृथिवीमय आपोमय' इत्यादौ चात्रिवृत्कृतपृथिव्यादिपरत्वेनोभयोरेकार्थत्वात्। यद्वा 'दर्शयत' श्रुतिस्मृती ज्ञापयत, श्रुति त्रिवृत्करणश्रुति, स्मृतिर्मन्वादीनाम्।

भूतसम्पृक्तस्य लोकान्तरगमनं यत् श्रुतिस्मृत्युक्तं, तस्य विचारः कृतपूर्वो वेदितव्यः । तस्मात्तेजसीतिश्रुतिस्थतेजःपदं पृथिवीमयादि-शब्दसमानार्थकमेवेत्युपपन्नम् ॥४।२।६॥

अथान्यदत्र चिन्त्यते प्रणालीयं विद्वदविदुषोः समाना न वेति, न समाना गतिभेदादिति प्राप्तेऽभिधीयते—

( आसृत्युपक्रमाधिकरणम्—४ )

## समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य ॥४।२।७॥

'समाना' प्रायणप्रणाली विद्वदविदुषोः, अत्राभिविधिमाह 'आसृत्युपक्रमात्' । सृतिः देवयानादिका गतिस्तस्या उपक्रम आरम्भदशा वक्ष्यमाणप्रकारा, प्राणात्ययप्रागवस्थेति स्थूलार्थः, तमवधिं कृत्वा प्रायो मनःसम्पत्तिमभिव्याप्येत्यर्थः । अनन्तरं विशेषमाह—अमृतत्वञ्चेति चकारस्त्वर्थः । 'अनुपोष्य' लिङ्गदेह-मनभ्युष्य अपसृतप्राणानां विदुषां तु 'अमृतत्वं' तदानीमेव कैवल्यम् । एतेनैतदुक्तं भवति, द्विविधाः खलु विद्वांसो भवन्ति, एके इहैव साक्षात्कृतनिर्विशेषब्रह्माणः, परे चेहालब्धतत्साक्षात्कारा अपि तद्भावभावितचित्ताः ध्यायिनः सन्यासिनो मातृभावा-दिनोपासका गृहस्थाश्च । तत्राद्यानां लिङ्गदेहपातानन्तरक्षणे वा तत्क्षणे वा मरणं भवति, तथा च तेषां मरणं लिङ्गदेह-मध्युष्य न घटते, मरणं हि स्थूलदेहप्राणयोर्विजातीयसंयोगचरम-ध्वंसः, ननु क इमे प्राणाः ? येषां स्थूलशरीरेण विजातीयसंयोग-चरमध्वंसो मरणमित्युक्तमितिचेत्, उच्यते—प्राणा हीमे वायुभेदाः,

चुद्धितत्त्वलक्षणमुख्यप्राणस्य ये जीवनयोनियत्नरूपाः पञ्च प्राणादिवृत्तयस्तत्प्रवर्त्तिताः शारीरवायुभेदाः निःसरन्तः प्रविशन्तो वाह्यवायुना संसृज्यन्ते इत्युक्तमधस्तात्, इन्द्रियेषु प्राणशब्दस्य यथा गौणी वृत्तिस्तथा तादृशेषु शारीरवायुभेदेष्वपि। एवं च पाणवृत्तिसञ्चालितशारीरवायुरध्यात्मवायुनामात्र प्राणपदार्थ इति। अतस्तेषां विदुषामुत्क्रान्तिर्गतिश्च न स्तः। द्वितीयानामुत्क्रान्तिगती वर्त्तेते। तद्विवृतिः पादेऽस्मिन्नुपक्रान्ता। तत्राप्यस्ति विद्वदविदुषो-र्विशेषः। 'शतञ्चैका हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका। तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति श्रुते। मूर्द्धाभिनिःसृतनाड्योत्क्रान्तिभाजां विदुषां च द्वौ भेदौ, एके मुख्यमुक्तिं देवयानगतिक्रमेण भजन्ते, अपरे च गौणीं मुक्तिमित्युक्त-मधस्तात्। सृत्युपक्रमादधिर्मरणप्रणाली तु सर्वेषां समाना तदनन्तरमेव विशेषः। तत्र सूक्ष्मभूतानुगत्या गमनमित्यंशोऽपि सर्वेषामुत्क्रान्तिभाजां साम्यमित्येतदग्रे स्फुट भविष्यति ॥४।२।७॥

आसृत्युपक्रमादिति यदुक्त तत् परिष्कर्त्तुं विचार्य्यते—

( संसारव्यपदेशाधिकरणम्—५ )

## तदापीतेः संसारव्यपदेशात् ॥४।२।८॥

नन्वेवं 'तेजः परस्यां देवतायाम्' इति श्रुतिः, सेन्द्रियमनः-प्राणस्य तेजःपदप्रतिपाद्यभूतग्रामसम्बन्धवतोऽध्यक्षस्य परस्यां देवतायां विद्वदविद्वत्साधारणीं सम्पत्तिं प्रतिपादयति विशेषा-नभिधानात्। इयं सम्पत्तिः सर्वेषां मुक्तिहेतुर्नवेति संशयः, सर्व-

प्रकृतिभूतायां परदेवतायां लिङ्गदेहविलयात् मुक्तिर्भवतीत्येकस्याः ब्रह्मज्ञानाभावाच्च न भवतीत्यपरस्याः कोटेरुपस्थितेः । तत्र मुक्तिर्भवतीति प्राप्तं लिङ्गदेहविलये उपाधिविगमेन प्रतिबिम्बचैतन्यरूपस्य जीवस्य बिम्बरूपेण पर्य्यवसिततया मुक्तस्वाभाव्यस्यावाधितत्वात् । इत्येवं प्राप्तेऽभिधीयते 'तदाऽपीतेः' इति 'तदा' मरणदशायाम् 'अपीतेः' परदेवताप्ययात्परं 'संसारव्यपदेशात्' शाखान्तरे संसारश्रुतेः, 'एनमेते प्राणा अभिसमायान्तीत्युपक्रम्य आत्मा निष्क्रामतीत्यनन्तरं 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा उत्क्रामन्ति सविज्ञानो भवति' इत्यन्तरोपदिश्य 'तद् यथा पेशस्कारी पेशसोमात्रामुपादायान्यन्नवतरं कल्याणतर रूपं तनुत एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते' इति ( बृ० ४।४।१-४ ) 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः' ( क० २।५।७ ) इति चैवमादेः । मुक्त्यनन्तरं संसारासम्भवात् यदि सर्वेषां मुक्तिः, कस्य संसारः स्यात् ? अतः सुषुप्तौ यथा 'स्वमपीतो भवति' इति श्रुतेः स्वाप्ययानन्तरं पुनः प्रबोधो न विलयान् मुक्तिस्तद्वत् । मुक्तौ लिङ्गदेहस्यात्यन्तिकलयः प्रदर्शितपूर्वः, मरणे तु विलुप्तवृत्तिकानामिन्द्रियादीनां कूर्म्मदेहे तदीयाङ्गानामिव तिरोभावमात्रमहाणीति न तयोः साम्यमिति मुक्तिहेतुविद्यावतस्तु नैवंगतिरिति च ध्येयम् ॥४।२।८॥

ननु सेन्द्रियादेस्तेजसो लिङ्गदेहरूपस्य विलयाभावे उत्क्रमणं कथं च प्रत्यक्षीभवतीति भ्रान्त्याशङ्कामपाकरोति—

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥४।२।९॥

प्रयतो जीवस्याश्रयभूतं सपरिकरं तेजः 'प्रमाणतः' परिमाणतः 'च' कारात् स्वरूपतः इत्यर्थलाभः, परिमाणतः क्षुद्रं स्वरूपतश्चादृश्यमित्यर्थः नाडीभ्य उत्क्रमणश्रवणात् स्थूलदेहान्निर्गच्छतो दर्शनाभावेन च 'तथोपलब्धेः' सौक्ष्म्योपलब्धेः ॥४।२।९॥

सौक्ष्म्ये साधकान्तरमाह—

## नोपमर्देनातः ॥४।२।१०॥

'अतः' सूक्ष्मत्वात्, 'उपमर्देन' स्थूलदेहस्य मुद्गरपातादिना मर्दनेन दलनेन लिङ्गदेहस्य 'न' नोपमर्दः ॥४।२।१०॥

तस्यो लिङ्गदेहसम्बन्धे प्रमाणमाह—

## अस्यैव चोपपत्तेरेष ऊष्मा ॥४।२।११॥

'एषः' जीवद्देहेऽनुभूयमान 'ऊष्मा' उष्णत्वम्, 'अस्यैव' लिङ्गदेहस्यैव न तु स्थूलदेहस्य, अत्र हेतुः 'उपपत्तेः' अन्वयव्यतिरेकानुविधानरूपयुक्तेः श्रुत्यनुगमस्योपपत्तेश्च। मृतदेहे उष्मणोऽसत्त्वात्, 'उष्ण एव जीविष्यञ्छीतो मरिष्यन्' इति श्रुतेः, नचैवमुत्क्रमणदशायां सन्तप्तवायोरिव लिङ्गशरीरस्योष्मणः स्पार्शनप्रत्यक्षापत्तिरिति वाच्यम्, विषयतया लिङ्गशरीरोष्मस्पार्शनं प्रति स्थूलशरीरावच्छेदेन त्वक्सन्निकर्षस्य हेतुत्वेन तदापत्तेरुद्धारात् ॥४।२।११॥

एवं प्रकृतस्य लिङ्गशरीरस्योत्क्रान्तिविचारविशेषोऽमृतत्वश्रानुपोष्येयुक्तसिद्धान्ते विप्रतिपत्तिं निरसितुमुपन्यस्यते—

( प्रतिषेधाधिकरणम्—६ )

## प्रतिषेधादितिचेत्, न शारीरात् ॥४।२।१२॥

'न तस्य प्राणा उत्क्रामन्ति' इति श्रुतिः, किं शारीरात् प्राणानामुत्क्रान्तिं प्रतिषेधन्ती शारीरे तस्य संश्लेषं बोधयति उत ब्रह्मणि साहित्यमाहेति संशयः, संश्लेषं बोधयतीति प्राप्तम्, [illegible] कथमेतत् ? तस्य प्राणा इति प्राणेषु शारीरसम्बन्धप्रस्याने [illegible] काङ्क्षासमाप्तेः, विवक्षां विनोत्सर्गतः षष्ठ्याः क्रियान्वयि[illegible] भावाच्चोत्क्रमणप्रतिषेधोऽयं शारीरादेव योग्यत्वात् तस्योप[illegible]', द्वारसिम्युक्ते पिधेहीत्यस्येवेति चेन्न 'योऽकामो निष्काम आप्तका[illegible] आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इति माध्यन्दिनोपनिषदि, अकामाप्तकामादिरूपेणोक्ताच्छारीरादुत्क्रमणं प्रतिषिध्य तत्र समवनयनाख्यया संश्लेषविशेषस्यावबोधनात्तदेक-वाक्यत्वार्थं तस्येति षष्ठ्यर्थस्यापादानत्वलक्षणसम्बन्धस्य, तन्मे निगदतः श्रुतिस्थानादिवदभ्युपगन्तव्यत्वात्। इत्यभिप्रेत्याह—प्रतिषेधादिति शारीरादुत्क्रमणप्रतिषेधात् प्राणैः संश्लिष्टस्यैव शारीरस्योत्क्रान्तिः सर्वेषां भवति, तत्रापि विद्वदविद्वद्भेदो नास्ति, 'इतिचेत्', यदुच्येत तन्नोत्तरम्, 'न शारीरात्' नायं प्रतिषेधः शारीरात् किन्तु शरीरादेव। अथ दर्शिता माध्यन्दिनश्रुतिरेव शरीरादुत्क्रमणं बाधत इति वाच्यम् ब्रह्महत्यादितरणकामो राजाश्वमेधेन यजेतेत्यादौ शरीरधर्मैरान्वयेन कामनायाः सामानाधिकरण्यवदव्याप्यवच्छेदकत्वसम्बन्धेन शरीरस्याप्तकामत्वादिसम्भवात्। 'अत्रैव समवनीयन्ते' इत्यनेन शब्दस्य पुरुषपरत्वे आसर्गं यानादिकालं वा शारीरे संश्लिष्टानां

प्राणानामनुत्क्रमणेनैव सम्श्लेषसिद्धौ समवनीयन्त इत्यस्य पुनरुक्तस्यापत्तेश्च । तस्मादिदं पदं कार्य्याकारेण प्रत्यक्षभूतं ब्रह्मपर गृहीतराजभूमिके गणदासाख्यशैलूषेऽयं गणदास इति विदुषः प्रयोगवत्तदुपपत्तौ', तत्र प्राणानां समवनयनञ्च विलयरूप, कलाशब्दबोधितप्राणानां पुरुषपदबोधिते सर्वयोनौ तत्र 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' इत्येतेन श्रुत्यन्तरेण लयप्रतिपादनात् । तस्मात् शारीरात् प्राणानां 'लिङ्गशरीरपर्य्यवसितानामुत्क्रमणं नास्ति, लयश्च तेषां ब्रह्मण्येवेति जीवन्मुक्तपक्षे, न तु शारीरात्तेषामनुत्क्रमणेन तत्र संश्लेष इति सिद्धम् ४।२।१२।

अलं वा शरीरादनुत्क्रमणस्थापनार्थं युक्त्युपन्यासेन—

स्पष्टो ह्येकेषाम् ४।२।१३।

'हि' यत', 'एकेषाम्' काण्वानां 'यत्रायं पुरुषो म्रियत उदस्मात् प्राणाः क्रामन्त्याहो नेति' इत्यार्तभागप्रश्ने नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' (बृ० ३।२।११ ) इति श्रुतौ 'स्पष्टः' स्फुट एव देहादुत्क्रमणप्रतिषेधः। ब्राह्मणमिदं याज्ञवल्क्यस्य ब्रह्मिष्ठतास्थापकाख्यायान्तर्गतमित्यार्तभागप्रश्नबोधितो ब्रह्मसाक्षात्कारसम्पन्न पुरुषः शरीरपरः, 'यथा सतः पुरुषात् केशलोमानि' ( मु० १।१।७ ) इति श्रुति प्रसिद्धेः, 'मृत शेते' इत्यन्तेनान्वितोऽयं नात्मपरः, तस्मात्प्राणानामुत्क्रमणं नवेति प्रश्नेऽनुत्क्रमणमाह याज्ञवल्क्यः अत्र-स्थित-

अगो मृत इति विरोधं परिहरन् सूते 'अत्रैव समवनीयन्ते 'अनुत्क्रामन्तोऽपि प्राणा ब्रह्मणि विलीयन्ते इति तदर्थः। अत्र स-शब्दपरामृष्टस्य पुरुषपदार्थशरीरस्योच्छ्वयनमाध्मानं मरणं शयनञ्चेति समुदितार्थः तस्माच्छरीरादेवानुत्क्रमणं ब्रह्मणि लयश्च प्राणानामिति सपरिकरप्राणलक्षणं लिङ्गशरीरमनधितिष्ठतः प्रागुक्तरूपमरणादेव कैवल्यमिति सिद्धान्तो नानुपपन्न इति सिद्धम् ४।२।१३।

अत्रार्थे स्मृतिमपि प्रमाणयति

## स्मर्य्यते च ।४।२।१४।

महाभारते स्मर्य्यते मुक्तानामुत्क्रान्तिगत्योरभावः, 'सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः। देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिण इत्याचार्य्याः। विरुद्धस्मृतयश्च जीवदशानुत्पन्नब्रह्मसाक्षात्कारविद्वद्विषयतया स्थूलदेहेनैव गगनोत्पतनादिशक्तिमद्योगिपरतया च समाधेयाः ।४।२।१४।

प्रासङ्गिकं समाप्य प्राकरणिकं चिन्त्यते—

( वागादिलयाधिकरणम्—७ )

## तानि परे तथा ह्याह ।४।२।१५।

'तानि' वागादीन्द्रियमनःप्राणभूतानि 'परे' ब्रह्मणि लीयन्ते 'तथाह्याह' तेजः परस्यां देवतायामिति, नहि महाशक्तिरूपाद् ब्रह्मणोऽन्या परा देवता काचिदस्ति। नचेयं श्रुतिर्विद्वद्विद्वत्साधारणगतिप्रतिपादिकेतिवाच्यम्, आसृत्युपक्रमादित्यनेन इतो

चरत्वात् । 'एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' ( प्रश्न० ६।५ ) इति च श्रुते। ननु 'गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु' ( मुण्ड० ३।२।७ ) इत्यादिश्रुतयोऽन्यत्र लयमामनन्तीति चेन्नैष दोषः, तत्तत्प्रकृतिभूतपृथिव्यादिभावेन ब्रह्मण एव कारणत्वात् चिदचिद्विग्रहात्मके तस्मिन् विलयस्यैव 'गताः कलाः' इत्यादि श्रुत्यापि बोधनादित्यर्थः ॥४।२।१५॥

अथ पूर्वोपदर्शितश्रुतिप्राप्तकलाप्रलयो विचार्यते—

( अविभागाधिकरणम्—८ )

## अविभागो वचनात् ४।२।१६

दृश्यते हि ससंस्कारः प्रलयः स्वापादौ, तदयं प्राणादिलक्षणानां कलानां प्रलयः ससंस्कारो न वेति संशये ससंस्कार एवेति मन्यते दृष्टानुसारित्वात् कल्पनाया इत्येवं प्राप्तावुच्यते अविभागो वचनादिति–अविभागः निःसंस्कारप्रलयः, 'भिद्येते तासां नामरूपे, पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति' ( प्र० ६।५ ) इतिकलाप्रलयवचनानन्तरम्, 'वचनात्' 'न स पुनरावर्तते' इति मुक्तपुरुषविषयवचनात्, संसारिणामुत्क्रान्तानां सुषुप्तिदशायामिव ससंस्कारः प्रलयः, मुक्तानां च निःसंस्कारः, अन्यथा तस्यापि संसारः स्यादितिभावः ॥४।२।१६॥

उत्क्रान्तिप्रसङ्गागतं जीवतो निर्विशेषब्रह्मसाक्षात्कारफलविचारं विधाय द्वितीयप्रकारब्रह्मविद्विषयो विचारः प्रस्तूयते—

( तदोकोऽधिकरणम्—९ )

**तदोकोऽग्रज्वलनं तत् प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेष-
गत्यनुस्मृतियोगाच्च हार्दानुगृहीतः
शताधिकया ॥४।२।१७॥**

निर्गुणविदुषोर्गमनप्रणाली 'समानाचासृत्युपक्रमात्' ( ब्र० सू० ४।२।७ ) इत्यत्रोक्ता । तत्र द्वितीयप्रकारविदुषश्चाविदुषश्च साम्यं विशेषश्चोपदर्शयन् समन्वयमुपपादयति तदोक इति तस्य = शारीरस्य, ओक = आयतनं हृदयं, तस्य यद् अग्रं सम्मुखभागस्तस्य ज्वलनं प्रद्योतनम् आलोकवत् प्रकाश , भवतीति-शेषः, 'तत् प्रकाशितद्वार' तेन ज्वलनेन प्रकाशिता द्वा = उद्भासित द्वारं चक्षुरादि, तस्या द्वारः = तस्माद् द्वारात्, विद्वांश्च निःसरत्यविद्वांश्चेति वाक्यशेषः, तथाचैतत्पर्यन्ताऽत्र पक्षे सृत्युपक्रमाभिव्याप्तिरित्युक्तं भवति । प्राणे मन सम्पत्तेरूर्द्ध्वं द्वितीयप्रकारविदुषोऽविद्वत्समत्वे प्रथमविदुषश्च तथात्वाभावेऽपि सृत्युपक्रमाभिव्याप्तेर्द्विविधविद्वदविद्वत्साधारण्यमव्याहतमिति बोध्यम् । अनन्तरं विदुषोऽस्य विशेषमाह 'विद्या सामर्थ्यात्' = विद्यारूपाया महाशक्तेः कृपया, 'तच्छेषगत्यनुस्मृतियोगाच्च' विद्याशेषभूता या गतिः मूर्द्धन्यनाडीसम्बद्धा, तस्या अनुस्मृति-योगात् पुनःपुनरनुशीलनजनितदृढसंस्कारेण सद्यः समुद्बुद्धेन जन्यमाना स्मृतिरनुस्मृति तद्योगात् हार्दानुगृहीत' हृदयालम्बनेन निराकारमहसा 'हृदयम्' इत्यक्षरार्थेन मायाबीजदुर्गाबीजात्मना

प्रागुपदर्शितसमुद्वारेण दुर्गाचाकारेण वा अनुगृहीतः विद्वान् शताधिकया सुषुम्नानाड्या निःसरति । अविद्वांश्च द्वारान्तरेभ्यः । अत्रार्थे प्रमाणभूता श्रुतिः, 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः' ( बृ० ४।४।२ ) इति । 'शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनि मृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' (छा० ९।६।६) इति च ॥४।२।१७॥

उत्क्रान्तस्य गतिप्रकारमाह—

( रश्म्यधिकरणम्—१० )

## रश्म्यनुसारी ॥४।२।१८॥

मूर्धन्यनाड्योत्क्रान्तो विद्वान् 'रश्म्यनुसारी' आदित्यं गच्छति, 'अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इत्युपक्रम्य 'स यावत् क्षिप्येत् मनस्तावदादित्य गच्छति' ( छा० ८।६।५)इतिश्रुतेः, अत्र रश्मिभिरेवोर्ध्वमाक्रमते इति नियमो वा सति सम्भवे रश्मिभिरूर्ध्वमाक्रमत इति रश्म्यनुसारित्वानियमो वेति संशये निशि मृतस्य रश्म्यनुसारासम्भवादनियम इति प्राप्तेऽभिधीयते 'रश्म्यनुसारी' रश्म्यनुसार्यवोर्ध्वमाक्रमते सर्वे निर्देशाः सावधारणाभवन्त्यसति वाधे इति न्यायात् । नियप्यास्ति सूर्यरश्मिसम्बन्धः, निदाघे नियप्युष्मोपलब्धे । शैशिरे तदनुपलब्धिस्तु शिशिरादिभिरभिभवाद् दुर्दिनवत् । श्रूयते च आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीत्यादिवचनानन्तरम्, 'त आसु नाडीषु सृप्ता

आभ्यो नाडीभ्यः प्रतायन्ते' इति नाडीरश्मीनामनिशमेवमन्योन्यसम्बन्धः, तस्मान्निशि मृतोऽपि विद्वान् रश्म्यनुसार्य्येवोदूर्ध्वं व्याप्नुयात इति सिद्धम् ॥४।१।१८॥

अथ निशि मृतस्य विदुष उर्द्ध्वगतिर्भवति न वेति विचार्यते—

( निशाधिकरणम्—११ )

## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥४।२।१९॥

आदित्यरश्मिसद्भावेऽपि निशि मृतस्योर्द्ध्वगतिर्नास्ति, मुक्तिर्नेभवतीत्यर्थः. 'दिवा च शुक्लपक्षश्च उत्तरायणमेव च। मुमूर्षतां प्रशस्तानि विपरीत तु गर्हितम्।' इति श्रीभाष्यधृतस्मृतेः। इति चेन्न निशि मृतस्यापि विदुष उद्ध्वंगत्यभावो नास्तीत्यर्थः। 'सम्बन्धस्य' कर्मसम्बन्धस्य प्रारब्धकार्यकर्मसम्बन्धस्य यावद्देहभावित्वात् स्मृत्यवच्छेदपदेहावधिकत्वात्, अनारब्धकार्य्ययोरुत्तरपूर्वयोरश्लेषविनाशाभ्यां बन्धहेतुत्वभावात् मुक्तिर्भवत्येव। दर्शयति चेममर्थं श्रुतिः "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये' (छा० ६।१४।२) इति। स्मृतिस्तवविद्वद्विषयेति निरवद्यम् ॥४।२।१९॥

अथ दक्षिणायनमृतस्य विदुषो गतिश्चिन्त्यते,—

( दक्षिणायनाधिकरणम्—१२ )

## अतश्चायनेऽपि दक्षिणे ॥४।२।२०॥

'अत' बन्धहेतुत्वमाभावात् दक्षिणेऽयने मृतस्यापि विदुष ऊर्द्ध्वगति-

मुक्तिपर्य्यवसायिनी भवतीत्यर्थः । अथ कथं पुनरिदमधिकरणं, निशाधिकरणेनैवास्य गतार्थत्वादिति चेन्न, 'अथ यो दक्षिणे म्रियते, पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति' इति दक्षिणायनमृतस्य चन्द्रप्राप्तिश्रवणाच्चन्द्रमस प्राप्तानां च 'यदा तत्पर्य्यवैत्यथैतमेवाध्वानं पुनर्निवर्त्तन्ते' इति पुनरावृत्तिश्रवणाद् ब्रह्मविदो भीष्मस्य मरणार्थमुत्तरायणप्रतीक्षा स्मरणाच्च पृथगधिकरणरूपेण विचारस्यौचित्यात् । नन्वेवं नास्याः शङ्कायाः परिहारायास्ति हेत्वन्तरमितिचेदत्रापि यन्महेत्वभावस्यैव हेतुत्वमितिब्रूमः, येयं चन्द्रप्राप्तिरुक्ता सा विदुषः क्षणविश्रामाय,—न तु तद्भोगानन्तरं पुनरावृत्तये, न स पुनरावर्त्तत इति श्रुतेः, भीष्मस्य विदुषोऽप्युत्तरायणप्रतीक्षणं तु पितृवरलब्धस्वच्छन्दमृत्युताप्रदर्शनेन लोकशिक्षार्थं सर्वो हि लोकः पितृप्रियकृद्भूयादितीत्यवधेयम् ॥४।२।२०॥

नन्वस्ति विद्वद्विषयकसाधारणं प्रयाणकालोपदेशो भगवद्गीतायाम्, 'यत्र काले त्वनावृत्तिमावृत्तिञ्चापि योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ । अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः । धूमो रात्रिस्तथा कृष्णः षण्मासादक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते । इत्ययं कथमुपपद्यते ? इत्याशङ्कायामाह—

## योगिनः प्रति स्मर्य्यते स्मार्त्ते चैते ॥४।२।२१॥

अयमुपदेशो योगिनः प्रति स्मर्य्यते न तु मुमुक्षून् प्रति कालविशेषो विधीयते । 'नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।

एकया यात्यनावृत्तिमन्यया वर्त्तते पुनः' इत्युत्तरवाक्यात् । 'स्मार्त्ते चैते—' चकारोहेत्वर्थे एत' एते सृती स्मार्त्ते योगिना प्रतिदिनं स्मृतिविषयभूते कर्त्तव्ये इत्युपदेशः । योगिनां देवयानपितृयानस्मृतिचिन्तन योगाङ्गतया कर्त्तव्यमित्यभिप्रायकं गीतावचनम् । तस्माद्दक्षिणायने मरणदोषोऽप्यविद्वद्विषयो विदुषस्तु दिनरात्र्ययनभेदकृतावुत्कर्षापकर्षौ न स्त इति विवेकः ॥४।२।२१॥

इति ब्रह्मसूत्रशक्तिभाष्ये फलोपदेशाख्ये चतुर्थाध्याये

उत्क्रान्तिगतिनिरूपणं नाम द्वितीयः पादः ।



## चतुर्थाध्याये तृतीयः पादः ।

ऊर्ध्वगतिविषयशिष्टविचारार्थं चतुर्थपादो निबध्यते तत्र मूर्द्धन्यनाड्योत्क्रान्तस्य विदुषः पथिचिन्ताप्रथममुपतिष्ठते, बहुप्रकारतया तच्छ्रवणात्। तथाहि रश्मिभिरेकः, परोऽर्चिरादिभिः, अन्योऽग्निलोकादिक्रमेणापरो वायुलोकादिक्रमेण, इतरश्च सूर्य्यद्वारेणेति तदत्र रश्मिश्रुतिरुक्ता ( छा० ८।६।५ ) 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरिति' ( छा० ५।१०।१ ) 'स एतं देवयान पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकम्' ( कौ० १।३ ) इति, 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति' ( बृ० ५।१०।१ ) इति 'सूर्य्यद्वारेण ते विरजाः प्रयान्ति' ( मुण्ड० १।२।११ ) इति च, ता एताः श्रुतयो यथायथंप्रमाणम्। तथा बृहदारण्यकेऽर्चिरादिमध्ये देवलोकश्रुतिरेकत्र वाय्वादित्यादिक्रमश्रुतिरन्यत्रेति। तस्मादत्र संशय्यते किमेते पन्थानो मिथो भिन्ना आहोस्विदेको विभिन्नविशेषण इति ? । अत्राह भिन्ना एव विद्याभेदाद्यनुबन्धिनः, स्वरूपतो भेदप्रतीतेरित्येवं प्राप्तेऽभिधीयते—

( अर्चिराद्यधिकरणम्—१ )

### अर्चिरादिना तत्प्रथितेः ।४।३।१।

'अर्चिरादिना' अर्चिरादिक्रमेणैव पन्था एकः प्रतिपत्तव्यः कुतः ? तत्प्रथितेः, तस्य=पथः प्रथितेः प्रसिद्धेः, प्रसिद्धिश्च, इतरथाश्रुत्या

ब्रह्मप्रापकत्वेनानेकशाखासूपादानात्, सर्वत्रैक्यबोधकप्रत्यभिज्ञानाच्च, निदर्शनं छान्दोग्येऽग्निपुरुषविद्याखण्डे पञ्चाग्निविद्याखण्डे च, बृहदारण्यके पञ्चाग्निविद्याब्राह्मणे च । तत्र च्छान्दोग्ये एतमर्चिरादिकमं देवयानं धूमादिकमं पितृयानञ्च पन्थानमुपदिश्याम्नातम्, 'अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति' इति, बृहदारण्यके च इममर्चिरादिकमं देवयानं पन्थानं पितृयानञ्चोपदिश्याम्नातम्, 'य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्' इति । पथ्यन्तरसत्त्वे द्वितीयभिन्नपथजुगुप्सनी श्रुतिः पीड्येत, एतदुभयावेदनरोपश्रुतिश्च नातिसमञ्जसा स्यात् । तस्माद् गौडमण्डलादेकेनैव पथा काशीं प्रस्थितानामान्तरालिकग्रामनिवेदनवेलायां क्वचिद्भेदो भवन्नपि यथा न पथिभेदमुपपादयति समासव्यासौ च प्रत्याययति तद्वदित्यर्थः । रश्मितुल्यै रश्मिभिराक्रम्यार्चिस्थानं नीयमानो विद्वान् क्रमादादित्यं यथा प्राप्नोति तथोपपादयिष्यते । तस्मादुत्क्रान्तिभाजामर्चिरादिकम एक एव देवयानः पन्था ब्रह्मप्राप्तेरिति सिद्धान्तः ॥४।३।१॥

ननु कथमेवं स्याद् यावता पथ्यन्तरोपदेशः श्रुतिपूपदर्शितः, अथ तत्र सत्यपि विशेषे प्रत्यभिज्ञानमुपलभ्यते चेत् कथन्त्विति जिज्ञासायामाह—

( वाय्वधिकरणम्—२ )

वायुमब्दादविशेषविशेषाभ्याम् ४।३।२।

कौषीतकिनः पठन्ति—'स एतं देवयानं पन्थानमापद्याग्निलोकमा-

गच्छति, स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' ( कौ० १।३ ) इति, अत्राग्निलोकशब्दश्छान्दोग्यबृहदारण्यकोक्तार्चिःपर इति प्रत्यभिज्ञानं भवितुमर्हति अवयवावयविनोरनन्यत्वात् । ननु 'स वायुलोकम्' इत्युक्तो वायुलोको यदि वायोर्लोको यदि वा वायुरेव लोकः, उभयथा तदागमनं प्रयतो न सम्भवति, 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' ( छा० ५।१०।१-२ ) इत्येतच्छान्दोग्यश्रुत्युक्तक्रमे पथि वायोरप्रवेशादिति चेन्, अत्रोच्यते,-'वायुमब्दात्' अब्दात् संवत्सरादव्यवहितोत्तरं वायुमभिसंभवन्ति, कुतः 'अविशेषविशेषाभ्याम्' कौषीतकिब्राह्मणे स वायुलोकमिति सामान्येनोपदिष्टं—न तु क्रम विशेषेण, विशेषेण=क्रमविशेषेणोपदिष्टं तु बृहदारण्यके 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खम्, तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति (बृ० ५।१०।१ ) इत्यादित्यादव्यवहितपूर्वं वायोर्विशिष्य निर्देशात् छान्दोग्यश्रुतावपि संवत्सरादित्ययोरन्तराले वायोः स्थानप्राप्तेः । बृहदारण्यके यदा प्रैति स वायुमागच्छतीति प्रायणानन्तरवचनं तु संवत्सराभिसंभवपर्यन्तानामुपलक्षणपरम् । सूत्रेऽब्दादिति छान्दोग्याभिप्रायेणोक्तमादित्यादव्यवहितपूर्वमित्यत्रैव तु तस्य तात्पर्यम् । तेन बृहदारण्यके

'मासेभ्यो देवलोकं देवलोकादादित्यम् ।' इत्यत्राब्दस्यानभिधानेऽपि नासङ्गतिः, आदित्यादव्यवहितपूर्ववायोः सन्निवेशादेव बृहदारण्यकक्रमस्योपपादनीयत्वात् । वस्तुतः, बृहदारण्यके पञ्चाग्निविद्याप्रकरणे देवयानपथेऽर्चिरादिक्रमे 'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति यच्छ्रूयते, तत्र देवलोकशब्दो विशेषवचनः, अन्यथाचिरादेर्भेदो न स्यात्, देवलोकत्वाविशेषात् । संवत्सरपरोऽयंदेवलोकशब्दइत्येव तादृशो विशेषः । योगवललभ्यश्चायमर्थः—लोकन्ते सुखादिसाक्षात्कारं कुर्वन्त्यस्मिन्निति लोकोऽहोरात्रं, यद्वा लोको दिनमालोकप्रकर्षात् प्रबोधकालत्वाच, सोमयागश्रुतावह्नःपदस्याहोरात्रपरत्ववदत्रापि लोकपदस्य तत्परत्वमिति देवानां लोकोऽहोरात्रमयनद्वयरूपं तस्य मानवसंवत्सररूपतया देवलोकशब्दादेव संवत्सरो लभ्यते श्रूयते हि'यदुत्तरायणं तद्देवानां दिनं दक्षिणायनं देवानां रात्रिः' इति। संवत्सरकालाभिमानि देवलोकः संवत्सरः इति प्रकृतम् । अतश्छान्दोग्यश्रुत्या बृहदारण्यकीयैतत्प्रकरणकब्राह्मणस्य तुल्यार्थकतया वायुमब्दादितिसूत्र शाखाद्वयाभिप्रायकम् । तस्मादेक एवार्चिरादिक्रमः पन्थाः ॥४।३।२॥

कौषीतकिनां वरुणलोकश्रुतिं सङ्गमयितुमाह—

( तडिदधिकरणं वरुणाधिकरणं वा—३ )

तडितोऽधि वरुणः सम्बन्धात् ॥४।३।३॥

'तडितः' चन्द्रमसो विद्युतम् इतिच्छान्दोग्यश्रुत्युक्ताया विद्युतः, 'अधि' उपरिष्टाद्, 'वरुणः' कौषीतकिब्राह्मणोक्तो वरुणलोकः प्रतिपत्तव्यः 'सम्बन्धात्' वर्षणलिङ्गभूतया विद्युता सह जलाधिपते-

वैरुणस्य सम्बन्धाद् राजकीयदानविनियेदकाधिकारिपुरुषेण राज्ञ इव । वरुणादुपरिष्टादिन्द्रप्रजापतिलोकौ 'आगन्तुकानामन्तेऽभिनिवेश.' इति न्यायेन च्छान्दोग्यश्रुतिस्थक्रमंऽनुपस्थितत्वात् कौषीतकिब्राह्मणोक्तपाठक्रमादागन्तुकौ छान्दोग्योक्ते ब्रह्मलोकपथेऽन्त्या विद्युत्, या तत्संबद्धवरुणलोकान्ते निवेशनीयौ । अत्र बृहदारण्यकच्छान्दोग्ययोरर्चिरादिक्रमस्यैकपथत्वे प्रत्यभिज्ञानभूतादित्यचन्द्रमसावपीति वेदितव्यम् ॥४।३।३॥

अर्चिरादीनां स्वरूपमुपदिशति—

( आतिवाहिकाधिकरणम्—४ )

आतिवाहिकास्तल्लिङ्गात् ॥४।३।४॥

अर्चिषमभिसम्भवन्तीत्यादिश्रुतावर्चिरादयः किं पथश्चिह्नविशेषाः किं वा भोगभूमिविशेषा उत ब्रह्मप्राप्तये गच्छतां विदुषामातिवाहिका देवताविशेषा इति संशये पथश्चिह्नभूता इति युज्यते लौकिकोपदेशसाम्यात्, अपरिचितमार्गं गच्छन्नुपदिश्यते,अयं पन्थास्तं ग्राममुपतिष्ठते पौरस्त्यं न्यग्रोधमतीत्योत्तीर्य्य च तदनन्तरवाहिनीं स्रवन्तीं तं ग्रामं लप्स्यस इति तथापि, अथार्चिरस्थिरं वस्तु न चिह्नं भवितुमर्हति, न ह्युपदिशति कश्चिद् गामतिक्रम्य गच्छन् ग्रामं लप्स्यस इति, यत्रैव भोगभूमिविशेषा एव, तास्तु स्थिरा', न त्वातिवाहिका देवताविशेषाः, सूरसवद् रश्मिभिराकृष्य नीयमानानामतिवहनस्य प्रयोजनाभावात् । इति प्राप्तेऽभिधीयते, आतिवाहिका इति, अर्चिः समीपान्तं रश्मिभिरानीतानामह.समीपनयनार्थं

महाशक्तिनियुक्ता देवताविशेषा एव, कुतः ? तल्लिङ्गात् ; अतिवहन-रूपाल्लिङ्गात्, 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इत्युत्तर-वाक्येन ह्यतिवहनं ज्ञाप्यते, गन्तॄणां वोढृत्वस्याप्यतिवाहनपदार्थत्वात्। न च एतैरेव रश्मिभिरूर्ध्वमाक्रमते' इत्युपक्रम्य 'स यावत् क्षिप्येन् मनस्तावदादित्यं गच्छति' इति श्रुतेरादित्यपर्यन्तं क्षणक्षेपमन्तरेण नयतां रश्मीनामेवातिवाहिकत्वावगमात्, आदित्यचन्द्रमसोस्तथा-त्वेऽपि अर्चिरादीनां तथात्वायोगात्, इति वाच्यम्, ऊर्ध्वं क्रमणमात्रस्य रश्मिसाध्यत्वकथनेऽपि 'अर्चिषमभिसंभवन्ति' इत्यादिश्रुतेरर्चिरभि-सम्भवनान्तं रश्मीनामाकर्षणशक्त्यभ्युपगमात्तदूर्ध्वं नयनायार्चिरादीनां विनियोगात्तेषामातिवाहिकत्वोपपत्तेः । 'स यावत् क्षिप्येन् मनः' इत्यादिवचनन्तु निमेषमात्रेणोपयातं गच्छतीतिवत् क्षेपिमाशिरा-यद्योतकम्। नन्वेवमपि विद्युतो ब्रह्मनयने लिङ्गावगतेरपि अर्चिरा-दीनामतिवहनलिङ्गं कथमुपपद्यत इति चेन्न, तत्रामानव इति पुरुषविशेषणस्यार्चिरादिदेवताविशेषपक्षे मानवपुरुषकर्तृकातिवहने लिङ्गत्वात्। स्वायम्भुवमनुसृष्टानां मानवतया देवतानामपि तद्व्यपदेशभागित्वात्। तस्मादर्चिरादय आतिवाहिका देवताविशेषा एवेति सिद्धम् ॥४।३।४॥

नन्वर्चिरादीनामातिवाहिकत्वेऽपि यमयस्थानमाविधा ...देह-विशेषतस्तेषामप्यचेतनत्वमस्तु न [illegible] देवत्वमित्याशङ्कायामाह—

उभयव्यामोहात्तत्सिद्धेः ॥४।३।५॥

'उभयोः' आगन्तुकस्य विद्वत्प्रेतस्य, अर्चिरादीनामेवैकस्य

च 'व्यामोहात्' चेतनत्वाभावात् चेतनत्वाभावाभ्युपगमाद् गमनानुपपत्ते, 'तत्सिद्धेः' अर्चिरादेर्देवतात्वसिद्धेर्नेयमाशङ्का युज्यते। नीयमानस्य प्रेतस्य सम्पिण्डितान्तःकरणतया मोहमापन्नस्य चेतनान्तरसाहाय्यकमन्तरेण देशान्तरगमनासम्भवादर्चिरादेस्तदभिमानिदेवतापरत्वाभ्युपगमस्यावश्यकत्वादिति भाव ॥४।३।५॥

नन्वेव विद्युद्देवता न चेत्याशङ्कायां समाधत्ते—

वैद्युतेनैव ततस्तच्छ्रुतेः ॥४।३।६॥

'तत' विद्युदभिसम्भवनानन्तरम्, 'वैद्युतेनैव' विद्युत्सम्बन्धिनैव, ब्रह्मनयन 'तच्छ्रुते' तद् = तच्छब्दस्य श्रुते, 'तत्पुरुषोऽमानव एनान् ब्रह्म गमयति' इति वाक्ये पुरुषशब्दात् प्राक् तत्पदश्रुतेरित्यर्थ, तस्या पुरुषस्तत्पुरुष इति बोधयितु तत्र तत्प्रयोगात्, या: खलु अतिवहनाय नियुक्ता देवतास्तासां स्वयमेवातिवहन कर्तव्यमिति न नियोग, किन्तु, यथातिवहन स्यात्तथा कर्तव्यम्, विद्युद्देवता स्वनियुक्तेन पुरुषेणैनान् ब्रह्म गमयन्त्यातिवाहिकदेवतैव। न च 'पुरुषो मानस एत्य ब्रह्मलोकान् गमयति' इति ( बृ० ६।२।१५ ) श्रुत्यन्तरे तद् श्रुतिर्नास्त्यपि तु 'एत्य' इति श्रुतिर्वैद्युतस्य पुरुषस्य सूचयतीति वाच्यम्, छान्दोग्ये तत्पदश्रवणेनात्रापि तथा प्रतिपत्तावव्याघात, एत्येति प्रयोगस्योपसर्पणेऽपि सम्भवात्, विद्युत इच्छामात्रेण मानसपुरुषस्योपस्थितौ राजसमीप इव भृत्यस्यैत्येति तद्रूपतया भृत्योरेकार्थत्वात्। वरुणेन्द्रप्रजापतयस्तु एनान् ब्रह्म नयतो विद्युत्पुरुषस्य गमनप्रतिबन्धापसारणेनैवातिवहनसहायभूत-

तया आतिवाहिका एव । वस्तुत, छान्दोग्यबृहदारण्यकौषीतक्यर्चिरादिमार्गे या विद्युत्, सा महाशक्तेर्लीलामूर्त्तिर्विद्युद्गौरी, सा ऊर्द्ध्वं वरुणेन्द्रप्रजापतित्रिलोकात्मकस्वार्चिःपदाभिधेयाग्निपर्यन्तं स्वतेजसोल्लासयन्ती तिष्ठति, तदाज्ञयैव ब्रह्मनयनं तदीयपुरुषेण सम्पाद्यते, मनुष्यदेहस्य मध्यवर्त्तिनि हृत्स्थाने इव जीवस्य भुवनस्य मध्यवर्त्तिनि गौरीलोके जीवयात्रवस्वरूपब्रह्मणो विद्युद्गौरीरूपेण स्थितिः। वरुणेन्द्रप्रजापतीनां विद्युद्गौरीस्वरूपब्रह्मतत्त्वज्ञानसन्निकर्षाद् आदरातिशयेन जननी कक्षे स्कन्धे शिरसि च सुतानिव क्रमेणोर्द्ध्वं वरुणेन्द्रप्रजापतिलोकान् बिभर्त्ति । अस्या एव विभूतिरूपतया छान्दोग्यादौ तेषां न पृथङ्निर्देशः, कौषीतकिब्राह्मणे च प्रपञ्चार्थं विभूतिनिर्देशाद्विभूतिमन्निर्देशो वेदितव्यः। प्राणतोषणीधृतनारदपञ्चरात्रे विद्युद्गौरीलीलोक्ता, विद्युद्रूपाभवद्गौरी विद्युद्गौरीति सा स्मृतेत्यादिनेति दिक् ॥४।३।६॥

एतान् ब्रह्म गमयतीति श्रुतिस्थो ब्रह्मशब्दः परब्रह्मणि प्रयुक्तः कार्ये ब्रह्मणि हिरण्यगर्भाख्ये वा ? इति संशये परब्रह्मणीति पूर्वपक्षः, नपुंसकलिङ्गब्रह्मशब्दस्य तत्रैव मुख्यत्वादिति प्राप्तेऽभिधीयते—

( कार्याधिकरणम्—५ )

कार्यं बादरिरस्य गत्युपपत्तेः ॥४।३।७॥

'बादरिः' तन्नामाचार्यो मन्यते, 'कार्यं' कार्यंब्रह्म हिरण्यगर्भं गमयतीति तत्रैव ब्रह्मशब्दप्रयोगः। कुतः? 'गत्युपपत्तेः'

गमयतीत्यनेन प्राप्ता या गतिः परप्रयुक्ता प्राप्तिस्तस्या उपपत्तेः, पर ब्रह्मणो नित्यप्राप्ततया परप्रयुक्तप्राप्तेस्तत्रासम्भवात्, यद्वा 'गत्युपपत्तेः' गतेः=पूर्वदेशसंयोगाध्यवसानान्तरोत्तरदेशसंयोगानुकूल-व्यापाररूपगमनस्य, सर्वव्यापके परब्रह्मण्यनुपपत्तेः, कार्य्यब्रह्मणि च तदुपपत्तेः, प्रदेशवत्त्वादिति भावः ॥४।३।७॥

सन्दिग्धार्थकश्रुतिमपहाय स्पष्टार्थश्रुतिं प्रमाणयति—

विशेषितत्वाच्च ॥४।३।८॥

एनान् ब्रह्म गमयतीति हि छान्दोग्यश्रुतिः, बृहदारण्यक-श्रुतिस्तु ब्रह्मलोकान् गमयतीति। अत्र बहुवचनान्तब्रह्मलोक-शब्दप्रयोगेणास्य 'एष ब्रह्मलोक सम्राडेनं प्रापितोऽसि' (बृ० ४।४।२३) इत्येकवचनान्तब्रह्मलोकशब्दार्थात् परब्रह्मणः 'विशेषितत्वात्' व्यावर्त्तितत्वात्, चकारो हेत्वन्तरापेक्षः ॥४।३।८॥

ननु '*यो ब्रह्माणं विदधाति पूर्वम्*' '*ब्रह्मा देवानां प्रथमः सम्बभूव*' इत्यादिषु कार्य्ये ब्रह्मणि पुलिङ्गप्रयोगात् नपुंसकलिङ्ग ब्रह्म शब्दः कथमत्र तस्मिन्नर्थे प्रयुक्त इत्याशङ्कायामुत्तरं पठति—

सामीप्यात्तु तद्व्यपदेशः ॥४।३।९॥

'तु' शब्द आशङ्काव्यवच्छेदकः, 'सामीप्यात्' यो ब्रह्माणं विदधाति पूर्वमित्यादिश्रुतिभिः कार्य्यब्रह्मणः परब्रह्मसन्निकर्ष-प्रतिपादनात्. 'तद्व्यपदेशः' तत्र नपुंसकलिङ्गब्रह्मशब्दस्य प्रयोगो नानुपपन्नः राजपुत्र इव राजशब्दस्य। तस्माद् ब्रह्म गमयतीति ब्रह्मशब्दप्रयोगः कार्य्ये ब्रह्मण्येवेति सिद्धम् ॥४।३।९॥

ननु च 'तयोर्द्ध्वमायन्नमृतत्वमेति' इति श्रुतिः कार्य्यब्रह्मपक्षे नोपपद्यते तल्लोकानां क्षयित्वादित्यत आह—

**कार्य्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥४।३।१०॥**

'तदध्यक्षेण' तस्य तत्पदवाच्यस्य परब्रह्मणः अध्यक्षेण प्रत्यक्षेण सह 'कार्य्यात्यये' कार्य्यस्य=भोगस्य भोगहेत्वदृष्टस्य वा अत्यये =क्षये, 'अतः' तत्प्रत्यक्षात् 'परम्' परब्रह्म सम्पद्यते, 'अभिधानात्' 'विद्याञ्चाविद्यां च यस्तद्वेदोभयं सह। अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते।' इति मन्त्रवर्णात्। अविद्यया मृत्यूत्तरणं हि भोगेन कर्मक्षयः। अमृतत्वाप्तिर्विद्ययेति तु निर्विवादम्। ब्रह्म-साक्षात्कारस्य विद्यारूपत्वादमृतत्वाप्तेर्ब्रह्मसम्पत्तिरूपत्वोक्तेः।

न चाविद्याविद्याशब्दयोरचित्चित्परतया कृतपूर्वव्याख्यानेनेदं विरुध्यत इति वाच्यम्, अचितस्त्रैगुण्यतया कर्मरूपत्वेन चितश्च ज्ञानरूपत्वेन तदुभयात्मकब्रह्मविषयकं यत् परोक्षज्ञानं तद्वतो ब्रह्मणो भावनात्मककर्मजन्यभोगेन मृत्युरूपं कर्म्मफलं विनाश्य विद्यात्मकब्रह्मसाक्षात्कारेणामृतत्वाप्तिरित्येतत्परत्वेन विरोधाभावात्। अत एव पूर्वमन्त्रे विद्याञ्चाविद्यां च यस्तद्वेदोभयं सहेति द्वयोर्वेदनोक्तिर्विनैव लक्षणां सार्थिका भवति। यद्वा काण्वमाध्यन्दिनशाखा-भेदेनेशाद्युपनिषदो मन्त्रादिभेददर्शनात् मन्त्रार्थभेदाभ्युपगमे बाधा-भावात्। एकशाखीयमन्त्रस्यापि सिद्धान्ताविरुद्धवैकल्पिकार्थकथनाय सर्वाचार्य्यसम्मतत्वाच्च। श्रुतौ सूत्रे च—सहेति कथनम्, तल्लोकप्रच्युति-प्रतिरोधज्ञापनाय, ब्रह्मसाक्षात्कारात्प्राग् भोगक्षये तत प्रच्युतेरवश्य-

ग्भावात् तथा च ब्रह्मलोकभोगावसानक्षण एव ब्रह्मसाक्षात्कारेण मोहनिवृत्त्या मोक्ष इति फलितार्थः ॥४।३।१०॥

कर्मणा भोगक्षये सति मुक्तौ स्मृतिं प्रमाणयति—

स्मृतेश्च ॥४।३।११॥

तथा हि, 'केशिध्वजोऽपि मुक्त्यर्थं स्वकर्मक्षपणोन्मुखः। बुभुजे विषयान् कर्म चक्रे चानभिसंहितम्। सकल्पनोपभोगैश्च क्षीणपापोऽमलस्ततः। अवाप सिद्धिमत्यन्तं तापक्षयफलां द्विज।' ( विष्णु पु० ६ अंश० ) इति अत्र पापशब्दः कर्मसामान्यपर, स्वकर्मक्षपणोन्मुख इति सामान्योक्तेः भवति च भोगान्ते मोक्ष इति बादरिमतम्।

अथानयोः सूत्रयोरेकाऽन्तरमुच्यते—तत्र 'कार्यात्यये' कार्यस्य = ब्रह्मलोकस्य अत्यये नाशे, 'तदध्यक्षेण' हिरण्यगर्भेण 'सह' 'अतः परम्' ब्रह्मलोकभोगात् परं तत्रैव कृतनिर्विशेषब्रह्मसाक्षात्कारोऽमृतत्वमेति 'अभिधानात्' अचिरादिगतानामपुनरावृत्त्यमृतत्ववचनात् इमं 'मानवमावर्तं नावर्तन्ते' इत्यादिनाऽऽम्नानात्, 'ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' इति वचनाच्चेति कार्यात्यय इत्यादिसूत्रस्य। 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति स्मृते.। परशब्दस्य परार्द्धद्वितयमर्थः। तच्च ब्राह्माहर्मानेन वत्सराणां शतं हिरण्यगर्भस्य तावदायुष्कत्वादिति, स्मृतेश्चेति सूत्रयेति पूर्वाचार्यापेक्षमिति ध्येयम् ॥४।३।११॥

जैमिनिमतमुपन्यस्यति—

## परं जैमिनिर्मुख्यत्वात् ॥४।३।१२॥

ब्रह्म गमयतीत्यत्र नपुंसकलिङ्गो ब्रह्मशब्दः परं ब्रह्म प्रतिपादयति न कार्य्यब्रह्म, कुतः 'मुख्यत्वात्' नपुंसकलिङ्गब्रह्मशब्दस्य तत्रैव मुख्यवृत्तित्वात्, मुख्यवृत्तिसम्भवे गौणीसमाश्रयणस्यायुक्तत्वात्। इति जैमिनिराचार्य्यो मन्यते। परप्रयुक्ता गतिश्च परब्रह्मण्यप्युपपद्यते,—'एष ब्रह्मलोकः सम्राडेन प्रापितोऽसि' इति याज्ञवल्क्यस्य जनकं प्रत्युक्तिश्रुतेः, खे पक्षिणां गतेरिव जीवानां ब्रह्मणि गतेः सम्भवात्, कर्म्मधारयापेक्षया तत्पुरुषस्य जघन्यतया ब्रह्मलोकामित्यत्र ब्रह्मैव लोका इति समासाश्रयणस्य युक्तत्वाच्च। सर्वलोकाधिष्ठानत्वद्योतकं च तत्र बहुवचनम्, तदपि परब्रह्मणो लिङ्गम्। तस्मिन् लोकाः श्रिताः सर्वे इति श्रुतेः ॥४।३।१२॥

अत्र हेत्वन्तरमाह—

## दर्शनाच्च ॥४।३।१३॥

पूर्वहेत्वपेक्षश्चकारः। 'तयोर्द्ध्वमायन्नमृतत्वमेति' (छा० ८।६।६) इति गतिपूर्वकामृतत्वे प्रत्यक्षश्रुते ॥४।३।१३॥

उपपादकान्तरमाह—

## न च कार्य्ये प्रतिपत्त्यभिसन्धिः ॥४।३।१४॥

'कार्य्ये' कार्य्यब्रह्मणि 'न च प्रतिपत्त्यभिसन्धिः' 'प्रजापतेः सभां वेश्म प्रपद्ये' इति प्रतिपत्त्यभिसन्धिः स न कार्य्यब्रह्मविषयः,

'नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा०८।१४।१) इति, कार्य्यविलक्षणस्य सर्वकारणस्य ब्रह्मणः प्रक्रान्तत्वात्, प्रजापतिशब्देन तस्यैव ग्रहणात्। 'यशो भवामि ब्राह्मणानाम्' इत्यादिश्रुतेः 'तस्य नाम महद्यशः' इति श्रुत्यन्तरैकवाक्यतया मुख्यब्रह्मभावबोधनात्। प्रपद्ये इत्यस्य पद्लृ गताविति धातूत्पन्नतया गतिप्रत्यायनाच्च। तस्माद् गतिश्रुतिः परब्रह्मविषयेति जैमिनिसम्मतः पक्षः। अत्रेदमवधेयम्, जैमिनिमते कार्य्यब्रह्मशब्देन हिरण्यगर्भोपाधच्छेदकं चतुर्मुखशरीरं तल्लोको वोच्यते, मुख्यं च ब्रह्म तदीयात्मा; तल्लोके तद्देहसारूप्यं न मुक्तिः, किन्तु तद्देहावच्छेदेन स्थितस्य तदात्मनो महिममाभिरत्तल्लोके नित्यसुखसाक्षात्काररूपेति ॥४।३।१४॥

अत्र सूत्रकारः स्वसिद्धान्तमाह—

अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च ॥४।३।१५॥

'अप्रतीकालम्बनान्' ईषत्प्रतीकालम्बनान् प्रतीकालम्बनरहितांश्च विदुष उपासकान् 'अमानवस्तत्पुरुषो ब्रह्म नयति' इति बादरायण आचार्य्यो मन्यते, उभयथा एतेन उभयप्रकारेण 'अदोषः' श्रुतिस्मृत्योरविरोधः 'तत्क्रतुश्च' ब्रह्मक्रतुश्च ब्रह्म सम्पद्यते इत्यक्षरार्थः, अयमाशयः प्रतीकालम्बनोपासना द्विविधा भवति प्रतीकस्पर्शा ब्रह्मप्रधाना, ब्रह्मस्पर्शा प्रतीकप्रधाना च, तत्राद्या ईषत्प्रतीकालम्बना ईषदालम्बितप्रतीकार्था, यथा—'सन्दर्शनार्थमम्बाया नदीपुलिनसंस्थितः। स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन्। तौ

तस्मिन् पुलिने देव्याः कृत्वा मूर्तिं महीमयीम्। अर्हणां चक्रतुस्तस्याः पुष्पधूपाग्नितर्पणैः।। निराहारौ यताहारौ तन्मनस्कौ समाहितौ' इत्यादिसप्तशत्युक्तमृन्मयप्रतिमाश्रयदुर्गाकारब्रह्मोपासना, जपपूजाऽऽश्रयचित्तैकाग्र्यसमाधिषु साकारब्रह्मैव प्रधानं यान्योपचारप्रतिपत्तिदशायां मृन्मयी प्रतिमाधारमात्रमितीपदालम्बनतामापद्यते। मृन्मयप्रतिमाश्रया साकार-ब्रह्मोपासना च मुक्तिदा भवति 'मृदैव मृन्मयी प्रोक्ता प्रतिमा शुभदायिनी। भोगदा मोक्षदा सा तु प्रतिमा कथिता मया' इति गौतमीयतन्त्रवचनात्। अत्र मूलभूतात् 'पुरमेकादशद्वारमजस्यावक्रचेतसः। अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते' ( क० २।५।१ ) इति काठकमन्त्राच्च। तदितः प्रतिमायां साकारब्रह्मोपासनफलम्, विमुक्तस्य = ब्रह्मलोकप्राप्तिरूपगौणमुक्तिप्राप्तस्य मोक्ष इति चावगम्यते। एकादशद्वारं पुरमित्युक्तेन त्रिनयनी श्रोत्रद्वयी नासाद्वयी मुखं नाभिरधश्छिद्रद्वयी चे येकादशद्वारस्य पुरस्यानुष्ठानं दुर्गादिप्रतिमानिर्माणपूर्वकतदाकारब्रह्मोपासनमेव। देवशरीरस्य प्रतिकृतिमन्तरेण मानुषेणानुष्ठानासम्भवात् केवलस्य प्रतिकृतिनिर्माणस्य शोकाभावादिफलासम्भवाच्च 'ब्रह्मपुरम्' इत्यादौ पुरशब्दस्य शरीरपरत्वस्य प्रसिद्धेः। प्रतिष्ठाविधौ चाथर्वणादिमन्त्राः प्रतीकाधिकरणे प्रदर्शिताः, तदनुगततया मत्स्यपुराणगौतमीयतन्त्रादौ च प्रतिमातत्प्रतिष्ठादेरुक्तेः 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति महाभारतवचनेन काठकमन्त्रस्यान्यार्थपरत्वबाधात् तादृशोपासकानां भोगाय मुक्तये च ब्रह्मलोकप्राप्तिरुचितैवेति स्थितम्। तस्मादीषत्पतीकालम्बनानामपि ब्रह्म-

लोकनयनम्। द्वितीया तु 'नाम ब्रह्मेत्युपास्ते' ( छा० ७।१।५ ) इत्याद्युक्तोपासना सम्यक् प्रतीकालम्बना, नामादिप्रतीकानाम् उपासनक्रियायां कर्मतया प्राधान्यात् नास्त्येतदुपासकानां ब्रह्मलोकाप्तिः। फलन्तु तत्रोक्तं 'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' इत्यादिकमुक्तम्। प्रतीकालम्बनविरहितायामुपासनायां पञ्चाग्निविद्यादिमतामपि ब्रह्मलोकाप्राप्तिरित्युभयप्रकारेणैव नास्ति श्रुतिस्मृतिविरोधः, अन्यथा प्रतीकालम्बनोपासकमात्रस्य ब्रह्मलोकप्राप्त्यभावे, मृन्मयप्रतिमायां साकारब्रह्मोपासकस्य भोगमोक्षानुपपत्त्या प्रदर्शिते श्रुतिस्मृती व्याहन्येयाताम्। प्राणदेवतादिरूपेण ब्रह्मदृष्ट्या श्रीदुर्गोपासनादिकमप्येतदुपासने निविशते। एतेन ब्रह्मपरोक्ष्यमनुपदधन् मातृभावाविना निर्विशेषोपासनान्तरमपि व्याख्यातम्। यद्यपि सकृत् प्रयुक्तः शब्दः सकृदर्थं गमयतीत्युत्सर्गोद्प्रतीकालम्बनशब्दस्यार्थद्वयपरत्व न युज्यते, तथापि सूत्रे उभयथेत्युपादानाद्र्थद्वयपरत्वं श्लेषकाव्यादाविवेत्यत्रापि ज्ञेयम्। तत्क्रतुश्चेत्यनेन, 'स क्रतुं कुर्वीत' ( छा० ३।१४।१ ) इति शाण्डिल्यविद्योक्तोपासनतज्जातीयदहरविद्याद्युक्तोपासनानां सग्रहः। ततोऽपि ब्रह्मलोकप्राप्तिस्तदुत्तर मोक्षश्चासाद्यते। एतदुपासनं वैदिकतान्त्रिकादिभेदेन विविधरूपं तत्रोक्तपूर्वम् 'इति बादरायणः' आचार्यो मन्यत इति शेषः। तथाच इह गमयतीत्यत्र ब्रह्मशब्दः ब्रह्मपरः परब्रह्मपरो वा भवितुमर्हति। क्रमाद् द्वयोः प्राप्तेरिति भावः ॥४।३।१५॥

कथं प्रतीकप्रधानोपासकानां न ब्रह्मलोकनयनमिति स्वयमाह—

## विशेषं तु दर्शयति ॥४।३।१६॥

'तु' शब्दः पूर्वसूत्रोक्तगतिव्यवच्छेदद्योतकः। यद्यपि 'यो नाम ब्रह्मेत्युपास्ते' इत्यादौ ब्रह्मोपासनमिति प्रतीयते तथाप्युपासनक्रियायां कर्मणो विशेषेण 'विशेषम्' फलविशेषं 'दर्शयति' प्रतिपादयति श्रुतिः, 'यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' 'यो वाचं ब्रह्मेत्युपास्ते, 'यावद्वाचो गतं तत्रास्य यथाकामचारो भवति' इत्यादिना। यद्येतान्युपासनानि ब्रह्मोपासनानि स्युः कथमत्र फलभेदा भवेयुरेकरूपत्वाद् ब्रह्मणः। यद्यधिकारिभेदादुपासनभेदस्ततश्च फलभेद इति वाढम, तदेव मतमस्माकं प्रतीकप्रधानोपासकानामधिकारिणां नास्ति परब्रह्मभावासिद्धेतु ब्रह्मलोकावाप्तिः फलम, वर्त्तत एव फलान्तरम्, तेन,न तेषां पितृयानः पन्थाः, कुतः पुनस्तृतीयस्थानम् ? तस्मादर्चिरादिपथेन गतस्याप्यमानवपुरुषेण न ब्रह्मलोकनयनं यथायोगं विद्युल्लोकान्तभोगस्त्वभ्युपगम्यते। नामादिगतिस्थानतया कार्य्यब्रह्मलोकविचरणं तु तेषामपि भवति। एतेन उभयथा कार्य्यब्रह्मपरत्वेन परब्रह्मपरत्वेन चादोपात्, इत्यर्थोऽपि प्रतिपादित इति सर्वं निरवद्यम् ॥४।३।१६॥

इति फलोपदेशाख्ये चतुर्थाध्याये प्रतीकोपासनादिगतिभेदनिरूपणं नाम तृतीयः पादः॥

## चतुर्थाध्याये चतुर्थः पादः ।

गतिनिरूपणप्रसङ्गेनोत्तमगतिमैश्वर्य्यं च विज्ञापयितुं चतुर्थपादो निबध्यते, निरवशेषब्रह्मनिरूपणसमापनाय । तत्र ब्रह्मलोकप्राप्तस्येहैवोत्पन्नब्रह्मसाक्षात्कारस्य च मुक्तस्याव्यवहितप्राप्तावपि यो विशेषः प्रथमं तमाह—

( सम्पद्याविर्भावाधिकरणम्—१ )

**सम्पद्याविर्भावः स्वेनशब्दात् ।४।४।१।**

श्रूयते हि, 'एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' ( छा०८।३।४ ) इति, अत्र संशयौ भवतः, तत्रैकः, परज्योतिरुपसम्पत्तिरियं सर्वमुक्तसाधारणी उत नेति, अपरश्च यस्य परज्योतिरुपसम्पत्तिस्तस्य देवताशरीरवदपूर्वशरीरान्तरेण सम्बन्धो भवति न वेति । ननु कथमयं संशयः, अस्याः श्रुतेः सुषुप्तिपरतया प्रतिपादितत्वात्, मुक्तसाधारण्यस्याप्राप्तेरितिचेन्न, 'तद् य एव ब्रह्मलोकं ब्रह्मचर्य्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः' ( छा० ८।४।३ ) इत्यव्यवहितोत्तरखण्डवाक्येनासन्नसिद्धिकोपासकानामेषा परज्योतिरुपसम्पत्त्यनन्तरं स्वरूपेणाभिनिष्पत्तिः सुषुप्तौ भवति उत्क्रमणानन्तरं तथैव ।

विशेषस्त्वयं सुषुप्तिवत् परा वृत्तिर्नास्तीत्याम्नानान्मुक्तसाधारणस्य प्राप्तेः। अत्र पूर्वपक्षः, अविशेषश्रवणात् सर्वमुक्तसाधारणीत्याद्ये, अभिनिष्पद्यत इति श्रवणादपूर्वशरीरसम्बन्धो भवतीति द्वितीये प्राप्तः, अत्रोच्यते 'सम्पद्याविर्भावः स्वेन शब्दात्' इति। शब्दो हि 'अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति, अत्रस्मान्निर्णीयते यस्य शरीरात् समुत्थानं नामोत्क्रान्तिः, तस्यैव परंज्योतिरुपसम्पत्ति न सर्वेषां मुक्तिभाजाम्। किञ्च स्वेन रूपेणेति स्वशब्दात् नापूर्वशरीरसम्बन्धः, स्वञ्च रूपमपहतपाप्मत्वविजरत्वादिकम्। अभिनिष्पद्यत इति तु नोत्पत्त्यर्थकम् अपि तु प्राप्त्यर्थकम्, प्राप्तिश्च अज्ञानान्धकारावृतस्य ज्ञानदीपेन प्रकाश उपाधिलयात् प्रतिबिम्बस्य बिम्बरूपेण पर्य्यवसानमिति यावत्। परं ज्योतिरुपसम्पद्य = हिरण्यगर्भस्य सारूप्यं रक्तं ज्योतिः प्राप्येत्यर्थः, ब्रह्मलोकान्मुक्तस्यायं विशेषः। हिरण्यगर्भस्य रूपमाह गृह्यम्,—'रक्तवर्णं चतुर्मुखं द्विभुजमक्षसूत्रकमण्डलुधरं ब्रह्माणम्' इति 'ब्रह्माणं जगतः पतिम्। ज्योतीरूपम्' इति च कालिकापुराणम्। 'एष लोहितः' इत्युत्तरज्योतिषो लोहितत्वस्य तत्रैव श्रुतत्वाद् रक्तज्योतिर्मयो भूत्वा भोगानन्तरं विगलिततद्रूपः स्वैनैव निर्विशेषब्रह्मभावेन प्रकाशत इत्ययं समुदितार्थः ॥४।४।१॥

एवम्भावस्य वास्तवत्वमुपपादयति—

मुक्तः प्रतिज्ञानात् ॥४।४।२॥

यो जागरणाद्यवस्थात्रयकालुष्यदोषग्रस्ततया प्रतिभात आसीत्

सः 'मुक्तः' सर्वदोषनिर्मुक्तः इति वस्तुगतिः, कुतः ? 'प्रतिज्ञानात्' प्रतिज्ञोपसंहारात्, अवस्थात्रयविहीनमात्मानम् 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इति(छा०८।११।३) व्याख्येयत्वेन प्रतिज्ञाय, 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इत्युक्त्वा 'स्वेन रूपेणाभिनिष्पद्यते' इत्युपसंहारादित्यर्थः। तथाच शरीरसम्बन्धो जाग्रदाद्यवस्थात्रयकालुष्यमुक्तस्य कदापि न सम्भवतीति भावः ॥४।४।२॥

ननु संप्रसादशब्देन शारीर एवोच्यते तस्य स्वरूपं तु नापहतपाप्मत्वादिकमपि त्वयस्थात्रयवत्त्वम्, तत्रत्रापि सुप्त-इत्यन्तस्य तत्सामानाधिकरण्यप्रयोगदर्शनात्, तथाच कथं मुक्तिः? इत्याशङ्कायामाह—

## आत्मा प्रकरणात् ॥४।४।३॥

सुप्त इति प्रयोगदर्शनेन यः शारीर इत्युच्यते 'प्रकरणात्'—य आत्मापहतपाप्मा विजरो विमृत्युरित्यादिना प्रकृतत्वात्, सः 'आत्मा' न तु तद्भिन्नः कश्चित् अपहतपाप्मत्वादिविशेषणकः आत्मैवायं सुप्तपदसमार्थकसम्प्रसादादिशब्दोपस्थापितः शारीर इत्यर्थः, तथा च अपहतपाप्मत्वादिकमेव तस्य रूपं धर्म्मः=जाग्रदाद्यवस्थात्रयञ्च पररूपं परस्योपाधेर्धर्म्मः। तस्मात् उत्क्रान्तिभाज एव शारीरस्य हिरण्यगर्भलोकप्राप्तस्य तत्सारूप्यमवाप्यौत्पन्नपरब्रह्मसाक्षात्कारस्य विगलिते शरीराद्युपाधिसम्बन्धे बिम्बरूपतया मुक्तिरभिनिष्पद्यते रोगनिवृत्तावारोग्यमिवेति निरवद्यम् ॥४।४।३॥

उत्क्रान्तिप्राक्क्षणपर्य्यन्तं विदुषां चाविदुषां च मुमूर्षूणां यागादिलये साम्यमुक्तम्, वैषम्यं च मरणक्षणात्, तत्र इहैवोत्पन्नब्रह्मसाक्षात्काराणां नोत्क्रान्तिसापेक्षार्चिरादिमार्गेण गतिः, देहपाते प्रारब्धक्षयात् मुक्तिरिहानुत्पन्ननिर्विशेषब्रह्मसाक्षात्काराणां विदुषाञ्च सुषुम्नानाड्योत्क्रमणमर्चिरादिपथेन हिरण्यगर्भलोकगमनं तत्र भोगस्ततसारूप्यलाभस्तत्र च निर्विशेषब्रह्मसाक्षात्कारात् मुक्तिरिति प्रतिपादितम्—इत्येव मुक्तिलाभात् पूर्वावस्थायां विदुषामपि दृष्टेन मिथोभेदलक्षणेन विभागेन संशय्यते मुक्तावपि तादृशविभागेन भूयते न वेति ? तस्मिन् संशये परेण निरुद्धकोटौ स्थापित सूत्रकारः स्वयमपाकरोति—

( अविभागाधिकरणम्—२ )

**अविभागेन दृष्टत्वात् ॥४।४।४॥**

'अविभागेन' अभेदेन भूयते, 'दृष्टत्वात्' श्रुतौ दर्शनात्; यश स्वरूपं हि ब्रह्म, 'न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः' ( श्वेता० ४।१९ ) इति श्रुते, उत्क्रान्तिपक्षे यथा 'यशोऽहं भवामि' इत्यादि श्रुत्या ब्रह्मभावो दृष्ट, तथा 'न तस्य प्राणा उत्क्रामन्ति ब्रह्म सन् ब्रह्माप्येति' इत्यनुत्क्रान्तिपक्षेऽपीति मुक्तिरन्रूपे विभागाभाव एवेति सिद्धम् ॥४।४।४॥

अत्र मतान्तरमाह—

( ब्राह्माधिकरणम्—३ )

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥४।४।५॥**

स्वपदम् आत्मसामान्यपरम्, तथा च स्वेन रूपेणेति सुदे

रात्मधर्म्मेणेत्यर्थः, ब्रह्म च कश्चिदात्मैव,—तस्य धर्म्मेण अपहतपाप्मत्वसर्वज्ञत्वादिनाभिनिष्पद्यते, तद्धर्म्मापन्नो भवति, कुतः ? 'उपन्यासादिभ्यः' आदिपदाद् विधिव्यपदेशयोः संग्रहः, उपन्यासः = उद्देशः, प्राप्तस्यैवायं भवति, सः 'य आत्मा अपहतपाप्मा' इत्यादिः सोऽन्वेष्टव्य इत्यादिनात्र विधेयप्रतिपत्तेः, 'स तत्र पर्य्येति जक्षत्क्रीडन् रममाणः' इति 'तस्य सर्व्वेषु लोकेषु कामचारो भवति' इत्येतदज्ञातज्ञापनं विधिः, 'सर्वज्ञः सर्वेश्वरः' इति तु विधेयाभावान्नोद्देशो न वा विधिरपूर्वत्वाभावात्, तस्माद्भूतार्थवादोऽयं व्यपदेशाख्यः। एभ्यो हेतुभ्यो ज्ञातेन भावाभावात्मयेन अपहतपाप्मत्वसत्यसङ्कल्पत्वादिना पारमेश्वरेण धर्म्मेण युक्तो भवति यो मुक्तः स्यात्। अयमर्थः 'निरञ्जनः परमं साम्यमुपैति' इति श्रुत्यन्तरेणाप्यनुगृहीतः। यशोऽहं भवामीति श्रुतिश्च पारमेश्वरधर्म्मप्राप्तिमेव सूचयति। न तु स्वस्यैव तदात्मतासम्पत्तिरूपोऽविभाग इति जैमिनिराह ॥४।४।५॥

एतद्विरुद्धं मतान्तरमाह—

चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥४।४।६॥

'चितितन्मात्रेण' चितिर्ज्ञानशक्तिः, चितिश्च, तन्मात्रं च, सत्यकामत्वादिमात्रं च, समाहारद्वन्द्वः, मात्रपदेन कार्य्यावस्थाव्यवच्छेदः न खल्वचित्तसद्भावमन्तरेण सत्यकामत्वं सम्भवति केवलज्ञानस्य सत्यकामत्वायोगात् तथा च नित्यसम्बद्धचिदचिन्मात्रत्वेन चिदचिदुभयवृत्तिर्या नित्यसत्ता तन्मात्रेणेति फलितम्, न च चितिमात्रेण इत्येव चितितन्मात्रेण इत्यस्यार्थः, तत्पदवैयर्थ्यापातात्।

चिदचिद्भयात्मब्रह्मसाक्षात्कारेण स्वस्य परिच्छिन्नत्वज्ञानरूप-मोहनिवृत्त्या मुक्तिः, 'तदात्मकत्वात्' तथाविधनित्यसत्तावदात्म-कत्वादित्यौडुलोमिराचार्य्य आह । जैमिनिमते नानात्मवाद औडु-लोमिमते एकात्मवाद इति जैमिनिमते स्वोपास्यसाक्षात्कारेण स्वात्मसाक्षात्कारान्मुक्तिरिति च भेदः ॥४।४।६॥

स्वसिद्धान्तमाह—

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥४।४।७॥

'एवमपि' औडुलोमिमतस्य सिद्धान्तरूपत्वेऽपि 'पूर्वभावात्' जैमिनिमते पूर्वस्मिन् = हिरण्यगर्भे तल्लोके वा भावात् सालोक्यादि-सम्बन्धात्, औडुलोमिमते पूर्वस्मिन् = कारणस्वरूपे परब्रह्मणि 'भावात्' तत्सत्ताव्यतिरिक्तसत्ताकत्वविरहात्—तमभिप्रेत्येति ल्यबूलोपे पञ्चमी, 'उपन्यासात्' उद्देशात् 'अविरोधं' मुक्तजीवस्याप-हतपाप्मत्वादिसत्यसङ्कल्पत्वान्तधर्म्मवत्त्वेन मतद्वयेऽपि उक्तश्रुत्य-विरोधम् बादरायण आचार्य्यो मन्यते। तस्मात् इहोत्पन्नब्रह्मसाक्षा-त्कारस्य हिरण्यगर्भलोकोत्पन्नब्रह्मसाक्षात्कारस्य च तादृशधर्म्म-वत्तया मुक्तत्वविशेष इत्यत्र तु द्वयोराचार्य्ययोः सम्मतिः । आत्मनानात्वतदैक्याभ्यां विशेषस्तु वर्त्तते न ह्यसौ मुक्तमात्रविषयक इत्यतोऽत्र तदुपेक्षा । परं मतद्वय एव प्रथमस्य कैवल्यं सद्यः, द्वितीयस्य च भोगानन्तरमित्यवधेयम् ॥४।४।७॥

हार्दविद्याविदुषोऽमुत्र मुक्तिभाजो मृतस्य मुक्तेः पूर्वं विशेष-

नभिधातुं सत्यसङ्कल्प इत्युपस्थापितसङ्कल्पसत्यताप्रतिपादक-तच्छ्रुतिमधिकृत्य विचार्यते—

( सङ्कल्पाधिकरणम्—४ )

सङ्कल्पादेव तु तच्छ्रुतेः ॥४।४।८॥

'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' (छा० ८।२।१) इत्यादिकं हार्दविद्यायां श्रूयते, तत्र संशय; एवकारोऽयमितरयोगव्यवच्छेदार्थ उत स्वायोगव्यवच्छेदार्थः ? प्रथमस्य मुख्यत्वेऽपि, सर्वत्रैव सङ्कल्पयितृसम्पाद्यनिमित्तान्तर-सहकारेण कार्य्योत्पत्तिदर्शनात्, 'मनसा सङ्कल्पयति वाचा भिलपति, कर्म्मणा चोपपादयति' इति स्मृतेश्च, स्वायोगव्यवच्छेदार्थोऽयमेव शब्दः, इति प्राप्तेऽभिधीयते 'सङ्कल्पादेव' इति। 'तु' शब्दः स्वायोगव्यवच्छेदपक्षव्यावर्त्तकः। अतएव, एवशब्दस्य मुख्यार्थाभिप्रायेण सङ्कल्पादेवेत्युक्त तत्सम्पाद्य निमित्तान्तरनैरपेक्ष्येण केवलात् तस्य सङ्कल्पात् पित्रादयः समुत्तिष्ठन्तीत्यर्थः, तेनेतरयोगव्यवच्छेदार्थोऽयमेवकारः = कुतः 'तच्छ्रुतेः', सङ्कल्पादेवास्य पितरः समुपतिष्ठन्तीत्यादिश्रुतेः। नन्वत्र सामान्यतो निमित्तान्तरमेवैवकारेण व्यवच्छिद्यते, न त्वेवं भवति, पितॄणां समुत्थाने हार्द्दविद्याया अपि निमित्तत्वात्,—इति चेन्न, सङ्कल्पयितृसम्पाद्यनिमित्तान्तरव्यवच्छेदस्य तदर्थत्वोपगमात्। न हि हार्द विद्या तदानीं सङ्कल्पयितृसम्पाद्यनिमित्तं पूर्वं सम्पादितत्वात् कालादीनां च प्रयत्नानपेक्षत्वादिति तस्मात् सङ्कल्पादेवेत्यत्रैव

शब्दः सङ्कल्पयितृसम्पाद्यनिमित्तान्तरयोगव्यवच्छेदार्थ इति निरवद्यम् ॥४।४।८॥

उपसंहरति—

अतएव चानन्याधिपतिः ॥४।४।९॥

'अतएव' सत्यसङ्कल्पत्वादेव, अनन्याधिपतिश्च भवति,—नहि कश्चिदपि सति सम्भवे पारतन्त्र्यं कामयते। अनेन सिद्धान्तिमतोत्कर्षः सूचितः ॥४।४।९॥

( अभावाधिकरणम्—५ )

अभावं बादरिराह ह्येवम् ॥४।४।१०॥

सङ्कल्पश्रुत्या मनःसत्त्वे सिद्धे, भोगायतनम् अयोनिजं बहिरिन्द्रियव्यापारहेतुस्थूलशरीरान्तरं तस्य भवति न वेति संशयः। तत्र 'अभावं' तादृशशरीरान्तरस्याभावं तत् न भवतीति बादरिराचार्य्य आह। हि यतः 'एवं हि' 'मनसैतान् कामान् पश्यन् रमते' (छा० ८।१२।५) इत्येवं श्रूयते। तथाविधशरीरसत्त्वे मनसा पश्यन्निति विशेषो नोपादीयेतेति भावः ॥४।४।१०॥

अत्र मतान्तरमाह—

भावं जैमिनिर्विकल्पामननात् ॥४।४।११॥

तथाविधस्थूलशरीरान्तरस्य 'भावम्' तद्भवतीति जैमिनिराचार्य्य आह—अत्र हेतुः 'विकल्पामननात्' 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव' (छा० ७।२६।२) इत्यादि श्रुत्या विकल्पानाम्=शरीरान्तरग्रहणेनैकधेत्यादिना विविधकल्पानाम्,

ऽभिधानात्। न चेदं विविधकल्पाभिधानं स्थूलशरीरान्तरग्रहण-रान्तरेण सम्भवति, आत्मन. स्वयं समतया शरीरभेदेनैव प्रकारभेद-सम्भवात्। नन्विदमिह निर्विशेषब्रह्मसाक्षात्कारवतो विभूतिबोधना-र्थेति चेत्, न, तादृशानह्मसाक्षात्कारवतो जीवतो विभूतियोगात्। तत्र श्रुतौ च तद्विशेषानभिधानेन जीवदजीवत्साधारण्यप्राप्तौ बाधकाभावादर्चिरादिमार्गगतमुक्तेऽपि शरीरसम्बन्धस्य तच्छ्रुति-तात्पर्यविषयतया जैमिनिसम्मतत्वादिति पुष्कलम् ॥४।४।११॥

अत्र सूत्रकृत् स्वसिद्धान्तमाह—

द्वादशाहवदुभयविधं बादरायणोऽतः ॥४।४।१२॥

'अतः' उभयविधश्रुतिदर्शनात्, 'बादरायणः' सूत्रकृदाचार्यः 'उभयविधम्' मुक्तावस्थायां यथासङ्कल्पं सशरीरत्वमशरीरत्वं चाह द्वादशाहवत्, यथा द्वादशाहनामकर्म्म 'द्वादशाहमृद्धिकामा उपेयु' इत्युपायिविधिना 'एवं विद्वांसः सत्रमुपयन्ति' इति बहुकर्तृकतया प्राप्तेन सत्रत्वेन 'द्वादशाहेन प्रजाकामं याजयेत्' इति यजति विधिना नियतकर्तृपरिमाणत्वेन 'द्विरात्रेण यजेत' इत्यादि-वदहीनत्वेन चोभयविध तद्वत ॥४।४।१२॥

अशरीरस्य भोगमुपपादयति—

तन्वभावे सन्ध्यवदुपपत्तेः ॥४।४।१३॥

तादृशस्थूलशरीराभावेऽपि 'सन्ध्यवत्' स्वप्नवत् मनसैव भोगो-पपत्तेः ॥४।४।१३॥

शरीरसद्भावे भोगवैलक्षण्यमुपपादयति—

## भावे जाग्रद्वत् ॥४।४।१४॥

मङ्कल्पेन शरीरग्रहे तु जाग्रद्वद् भोगोपपत्तेः शरीराभावतद्भावयोरनियमः । इयांस्तु विशेषः शरीराभावे सूक्ष्मो मानसो भोग, शरीरसद्भावे तु,—स्थूलो भोग परैरपि यो वेदितु शक्यत इति ॥४।४।१४॥

जैमिनिमते नियमेन बादरायणमते चानियमेनानेकशरीरस्यात्ममनसोरेकत्वेन, तदधिष्ठानशरीरेभिन्न शरीरे निरात्मत्वं न वेति सशयं परैर्विपरीतकोटौ स्थापितायामाह—

### ( प्रदीपाधिकरणम्—६ )

## प्रदीपवदावेशस्तथाहि दर्शयति ॥४।४।१५॥

यथा प्रदीपस्य प्रदीपान्तरे आवेश.—स्वरूपहानिमकृत्वा स्वप्रनतिते दीपान्तरे सारूप्येण निवेशस्तथा सात्मसमनस्कबहिरिन्द्रियाश्रयस्थूलशरीरस्य तथाविधशरीरान्तर आवेशः । नन्वक्रियस्य नित्यस्यात्मन कथ तादृगावेश इति चेन्नोपाध्युत्पत्तेः जैमिनिमते विभुत्वाद् बादरायणमते प्रतिबिम्बपातेन तदवच्छेदेनावेशस्य सम्भवात् । 'तथाहि दर्शयति' तत्प्रकारेणैः 'स एकधा भवति त्रिधा भवति' (छा० ७।२६।२) इति श्रुतिरिममर्थं प्रतिपादयति । स इत्यस्य, समनस्कबहिरिन्द्रियाश्रयशरीरा

वच्छिन्नात्मपरामर्शकत्वात्—तस्य त्रिधाभवनादेः आत्ममनो-र्हितशरीरत्रैविध्यादिमात्रेणासम्भवादिति तात्पर्यम् ॥४।४।१५॥

ननु ब्रह्मगमितस्य शरीरसम्बन्धाभ्युपगमे 'तत् केन कं विजानीयात्' ( बृ० ४।५।१५ ) नतु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तं यद् विजानीयात् ( बृ० ४।३।३० ) इत्येवंजातीयश्रुतिविरोध इत्याशङ्कायामाह—

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥४।४।१६॥

स्वाप्ययः=सुषुप्तिः, सम्पत्तिः=कैवल्यम्, वाङ्मनसि सम्पद्यते इत्युपक्रम्य तेजः परस्यां देवतायामिति श्रुतिप्रतिपादितायाः सम्पत्तेः 'ब्रह्मैव सन् ब्रह्माप्येति ( बृ० ४।४।६ ) इतिश्रुत्येकवाक्यतया कैवल्यार्थकत्वात् । तयोरन्यतरावस्थापेक्षमेतद्विभागवचनम् । अथ कथमेतन्निर्णीयते तत्राह—'आविष्कृतं हि' हि=यतः सुतायेतदधिकारे स्पष्टमुक्तमिदम् 'यत्र सुप्तो न कञ्चन कामं कामयते' ( बृ० ४।३।१९ ) इति 'एतेभ्योभूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' ( बृ० २।४।१२ ) इति, 'यत्र त्वस्य सर्वमात्मैवाभूत्' ( बृ० २।४।१४ ) इति च, तथाच ब्रह्मलोकं गमितस्यापि कैवल्यं यावन्न स्यात्, तावत् तल्लोकभोगदशायां स्थूल-शरीरसद्भावासद्भावपक्षावत्र दर्शिताविति बोध्यम् ॥४।४।१६॥

अथ 'सर्व्वेऽस्मै देवा बलिमाहरन्ति' ( तै० १।५।३ ) इति 'आप्नोति स्वाराज्यम्' ( तै० १।६।२ ) इति 'एषां सर्व्वेषु लोकेषु कामचारो भवति' (७।२५।२) इति चैवमादिश्रुतिभ्यो विदुषामुपा-

सत्ताविशेषेण प्राप्तमीश्वरत्वं निर्बाधं सबाधं वेति संशये निर्बाधकोटौ उपस्थापितायामाह—

( जगद्व्यापारवर्जाधिकरणम्—७ )

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥४।४।१७॥

'जगद्व्यापारवर्जं' जगद्व्यापारं जगतः सृष्टिस्थित्यादिकं वर्जयित्वा ईश्वरत्वं बोध्यमतः सबाधम् जगद्व्यापारे तस्य बाधात्, —तत्र हेतुमाह—'प्रकरणात्' 'यतो वा इमानि भूतानि जायन्ते' 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' 'सदेव सोम्येदमग्र आसीत्' 'एकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेय तत्तेजोऽसृजत' इत्यादिषु ईश्वरस्यैव प्रकृतत्वात्—असन्निहितत्वाच्च जीवानाम्। यदैकस्य सृष्ट्यादिकर्तृत्वं श्रुत्या बोध्यते तदितरेषामपि ऐश्वर्य्येणाभमहिम्ना यदि तत्राधिकारः स्यात् सङ्कल्पमेवेन कार्य्याणां विरोधः प्रतिबन्धो वा प्रसज्येत। अस्मादणिमाद्यैश्वर्य्यं तेषाम्, निर्बाधमैश्वर्य्यं तु परमेश्वरस्यैवेत्याशयः ॥४।४।१७॥

नन्वाप्नोति स्वाराज्यमिति प्रत्यक्षश्रुतेः कथं सबाधमैश्वर्य्यमुच्यते इत्याशङ्कागर्भितसमाधानमाह—

प्रत्यक्षोपदेशान्नेतिचेन्नाधिकारिक-
मण्डलस्थोक्तेः ॥४।४।१८॥

'प्रत्यक्षोपदेशात्'—प्रत्यक्षमिति व्यपदिष्टो य उपदेशः श्रुतिरित्यर्थः तस्मात्, श्रुतेः प्रत्यक्षमिति स्मृतेश्चानुमानमितिव्यपदेशयो-

-रसङ्कृदुक्तेः । सा श्रुतिः 'स्वाराज्यं प्राप्नोति' इति, 'न' जगद्व्यापारवर्जमिति यदुक्तं तन्न युज्यते । न हि परतन्त्रः स्वराड् भवति जगद्व्यापारे स्वातन्त्र्यरहितस्य पारतन्त्र्यसिद्धेः, 'इति चेत् न' 'आधिकारिका:=अधिकारनियुक्ताः सवित्रादयस्तेषां मण्डले स्थितो यः परमेश्वरः तस्य, 'उक्तेः' श्रुत्या वचनात्, तदधीनतया स्वराज्यप्राप्तिकथनात् 'आप्नोति मनसस्पतिम्' इति हि तदनन्तरा श्रुतिर्भवति । यः सर्वमनस्पतिः पूर्वसिद्ध ईश्वरस्तमाप्नोति तत्प्राप्त्या चायं वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिर्भवतीत्युक्तम्, इदमेव मनस्पत्यधीनत्वम्, वागादीनां मनोऽधीनत्वाद् वागाधिपतीनां मनस्पत्यधीनत्वस्य सिद्धेः, देशाधिपतीनां सार्वभौमाधीनत्ववत् । परमेश्वरनियन्त्रणेन जगद्व्यापारे तेषां सङ्कल्पस्यैवानुदयाद् जगद्व्यापारवर्जमिति सूपपन्नम् ॥४।४।१८॥

नन्वाधिकारिकमण्डलस्थत्वेन परिच्छिन्नत्वप्रसक्तिः परमेश्वरस्येत्याशङ्कायामाह—

## विकारावर्त्ति च तथाहि स्थितिमाह ॥४।४।१९॥

पारमेश्वरं रूपं 'विकारावर्ति च' यथा विकारे वर्त्तते तथा तत्र न वर्त्तते च, 'तथाहि स्थितिमाह' तत्प्रकारेण विकाराश्रयेण अविकाराश्रयेण च परमेश्वरस्य स्थितिं श्रुतिराह–'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः पृथिवी यं न वेद' ( बृ० ३।७।३ ) इत्यादि श्रुतिर्विकाराश्रयेण, 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद' इति वाजसनेयी श्रुतिः आत्मस्वरूपाविकाराश्रयेण विकारावर्त्तित्वमाह ।

विकारवर्त्तित्वस्याव्याप्यवृत्तितया पृथिव्याद्यवच्छेदेन तद्वर्त्तित्व-मात्माद्यवच्छेदेन तदभावं च पारमेश्वररूपे आमनन्ति । तस्मात् "सर्वगतः" इत्यादिश्रुतिप्रसिद्धस्य परमेश्वरस्य न परिच्छिन्नत्वा-पत्तिरिति ध्येयम् ॥४।४।१९॥

जन्माद्यस्य यत इति सूत्रेण यस्य ब्रह्मणो निरूपणमुपक्रान्तं सा शक्तिरित्युक्तः सैव सर्वेश्वरी, ब्रह्मपरपरमात्मपरमेश्वरादिनामवत् भगवतीपरदेवतादिनामभिः सर्वोपेतेत्यादिशब्दैश्च दर्शनेऽस्मिन्प्रारुयाता। उपक्रमोपसंहारयोरैक्यमुपदर्शयितुं शक्तेरपरिच्छिन्नत्वमुपासन-विशेषप्राप्तैश्वर्य्याणामपि जीवानां तदधीनत्व प्रमाणयति,—

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥४।४।२०॥

'चैवम्' इति निपातद्वयस्य प्राप्तैश्वर्य्याणामपि जगद्व्यापारे शक्त्यधीनत्वम्, शक्तेर्विकारवर्त्तित्वं तदवर्त्तित्वं चेत्यर्थः. 'प्रत्यक्षानुमाने' श्रुतिस्मृती 'दर्शयतः' प्रतिपादयतः । तथा च देवीसूक्ते,'अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा' इति एवकारेणान्यव्यवच्छेदः 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' इति ब्रह्मादीनामैश्वर्य्यभाजां नियन्त्रणं 'ततो वितिष्ठे भुवनानि विश्वोतामूं द्यां वर्ष्मणोपस्पृशामि' इति विकारवर्त्ति त्वं 'परो दिवा पर एना पृथिव्यैतावती महिना' इति विकारावर्त्तित्वं च मन्त्रवर्णजातं प्रतिपादयति । सप्तशतीस्मृतिश्च 'हेतुः समस्तजगताम्' इति 'विष्णुः शरीरग्रहणमहमीशान एव च । कारितास्ते' इति, 'यच्च किञ्चित् क्वचिद्वस्तु सदसद्वाखिलात्मिके । तस्य सर्वस्य या शक्तिः सा' इति च ब्रह्मकर्तृकस्तुतौ, 'सर्वस्वरूपे सर्वेशे' इत्यन्तिम-

स्तुतौ च वचनजातेन तमेवार्थं प्रतिपादयति। सूत्रमिदमस्य शास्त्रस्य शास्त्रदर्शनत्वख्यापनायेति रहस्यम् ॥४।४।२०॥

नन्वनया श्रुत्या स्मृत्या वा प्राप्तैश्वर्य्यस्य जगद्व्यापारे सबाधत्वं न प्रमीयते, प्रमीयते तु 'यो ब्रह्माणं विदधाति' इति श्रुत्यन्तरैकवाक्यतया जगत्कर्तृनिर्म्मातृत्वं शक्तिरूपे परब्रह्मणि 'ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता' ( मु० १।१।१ ) इति श्रुत्या जगद्व्यापारे ब्रह्मणो निर्बाधत्वप्रतिपादनात्, 'यं कामये' इत्यादिदेवीसूक्तमन्त्रवर्णेन तस्यानपोदितत्वादित्याशङ्कायां समाधानमाह—

## भोगमात्रसाम्यलिङ्गाच्च ॥४।४।२१॥

चकारः पूर्वहेत्वपेक्षसमुच्चयार्थः। 'यं कामये तं तमुग्रं कृणोमि' इत्युपक्रमे कामनावीप्सयोः सत्त्वेन यस्मिन् यस्मिन् जीवे महाशक्तिः सकरुणा भवति तस्य तस्य शिवत्वं ब्रह्मत्वं विष्णुत्वं वा सम्पादयतीति पर्य्यवसितार्थलाभात् जगद्व्यापारिशिवब्रह्मादिवद् बहुशिवब्रह्मविष्णुनिर्म्मातृत्वं स्वरसतस्तस्याः प्रतीयते, इदं हि, जगद्व्यापारिषु निर्बाधमैश्वर्य्यमन्येषाञ्च तत्सालोक्यसारूप्यादिना भोगसाम्यमात्रमित्यस्य लिङ्गम्। किञ्च 'यथैतां देवतां सर्वाणि भूतान्यवन्ति, एवं हैवंविदं सर्वाणि भूतान्यवन्ति तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' इत्यादिकमपि लिङ्गान्तरम्। तस्माद् उपासनाविशेषजनितमहाशक्तिकरुणया ब्रह्मसालोक्यादिभोगसाम्येन उग्रब्रह्मत्वादिना व्यपदेशस्तेषां जगद्व्यापारे तु नास्त्यधिकारः प्रागुक्त-

प्रमाणादिति सिद्धम्, एतेन ये निर्विशेषब्रह्म साक्षात्कारेण विगलित-मोहतयोत्क्रान्तिगतिशून्या मुक्तास्तेषां ब्रह्मानन्यतया, ब्रह्मणो यद् भवति तदेव ततो भवतीति जगद्व्यापारवर्जमिति न तद्विषयम्, किन्तु सालोक्यादिमुक्तिभाजामित्ययं सिद्धान्त इत्यवधेयम् ॥४।४।२१॥

ननु भोगश्चेत्, क्षय्येवायं तत्र पुनरावृत्ति प्रसज्यते, किञ्च श्रूयते 'श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये' इति, श्याम-शब्देन यदि साम्यावस्था गृह्यते शबलशब्देन च गुणत्रय-वैषम्यावस्था यदि वा श्यामशब्देनाद्याशक्तिस्वरूपं गृह्यते शबल-शब्देन संसारः, उभयथापि चक्रभ्रमणवत् पुनरावृत्तिप्रसङ्ग इत्याशङ्का शक्तिब्रह्मनिरूपणस्य विशिष्टफलावच्छेदप्रदर्शनरूपतयोपसंहार-व्याजेन निरस्यति—

( अनावृत्त्यधिकरणम्—८ )

**अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥४।४।२२॥**

भोगस्य क्षयित्वेऽपि तदनन्तरं तत्रैव निर्विशेषब्रह्मसाक्षात्कारा-दनावृत्तिः, 'श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये' इति तु श्याम-रूपाश्रयेण पञ्चरूपाश्रयेण वा ब्रह्मणो यदुपासनं तदेकमात्रमहाशक्ति-साधनं विभिन्नान्येव रूपाणि स्मृत्वा तत्सकलाधिष्ठात्रीं निर्विशेष ब्रह्मस्वरूपां महाशक्तिं प्रपद्ये इति ध्यायतो जपतो वा मृत्युरप्यनावृत्तये भवति, कुत शब्दात् ? श्यामाच्छबलं प्रपद्य इति श्यामाद्याकारा-श्रयेण ध्यानाद्युपासनया परिशुद्धचित्तभूमीनां सर्वेषामेवाश्रमिणा-

द्विजाना ब्रह्मप्राप्ति, ततो निर्विशेषब्रह्मनिष्ठाना सन्न्यासिना प्रागुक्तानामुपासकानामनन्तरखण्डे च स्वाध्यायमारभ्य यावज्जीव गृहिधर्म्मं निवृत्तिपरतया पालयता ब्रह्मप्राप्तिरिति तच्छ्रुति तात्पर्य्यम्, अनावृत्तिश्च सर्वेषाम्। न च पुनरावर्त्तत इति सर्वान्त्य-भागस्थशब्दात्। श्यामाच्छबल प्रपद्य इत्यादेर्वर्णकान्तरम्। यज्ञाग्नौ ब्रह्मरूपतया भाविते 'काली कराली चेत्यादि विश्वरुची च देवी लेलायमाना इति सप्तजिह्वा।' इत्यन्तमन्त्रोक्त सविशेषकालीरूपात्—श्यामात् शवल = विश्वरुचीत्यनेनोक्त विविधवर्णाकार दुर्गाषोडशीसरस्वतीप्रभृतिमूर्त्यवच्छिन्न प्रपद्ये सर्वासु मूर्त्तिष्वेकत्वोपलब्धेरपरिच्छिन्नब्रह्मविज्ञानात्। एवमेव शवलाच्छ्याम प्रपद्य इति। अधिकारानुसारेण गृहिणोऽपि यन्मूर्त्यवच्छिन्नब्रह्मोपासन काष्ठा गतेन तेन सिद्धिपर्य्यवसायिना महाशक्ति सद्रूपा स्वगोचरपरिच्छिन्नत्वमोहनिवृत्तिमादधाना मोक्षमर्पयति मुक्तस्य चानावृत्ति 'न च पुनरावर्त्तते' इति शब्दात्, यत्नेना यागकर्म्मणा मुक्तिप्रकारव्याख्यान कृतपूर्वमिति ततो विरम्यते। ग्रन्थसमाप्तिसूचिका सूत्रस्य द्विरावृत्ति ॥४।४।२२॥

बन्ध श्लथस्खलमनोरचनासु दृष्टि
क्षीणा स्मृतिश्च गलिता ललिता च भाषा।
कम्प करे हृदि च, केवलमम्बिकाया
कारुण्यमस्ति शरण मम दुःखितस्य ॥ १ ॥

दुर्गाध्वना विचरतो जरतो ममात्तं
अन्तूयतः प्रतिपदं जगदम्बिकायाम् ।
तस्या निसर्गकरुणा यदि नावलम्ब्यः
किं त्राणकारणमहो मम हीनशक्तेः ॥ २ ॥

धावन्ति धूमशकटानि चलन्ति याना-
न्याकाशवर्त्मनि तरन्त्युदधींश्च पोताः ।
श्रीशक्तिभाष्यमहमारचयामि चैवं
यन्त्राणि नाम वयमत्र परोऽस्ति यन्त्री ॥ ३ ॥

तस्यै पराह्वयजुषे जगदम्बिकायै
नित्यं नमो मम हिमद्युतिशेखरायै ।
यस्याः प्रसादमधिगम्य निसर्गसिद्धं
मूढोऽपि शान्तिसुखसंविदमभ्युपैति ॥ ४ ॥

दोषो न मे न च गुणोऽस्ति तदर्प्यमाण-
सङ्कल्पबुद्धिवचनासुबलप्रवृत्तेः ।
तत्कोविदान् सविनयं विनिवेदयामि
क्षम्योऽस्मि लङ्घितपुरातनभाष्यवादः ॥ ५ ॥

अधिकरणनामसंख्याभेदः कश्चिर्यसंक्षयाद्विहितः ।
सिद्धान्तभेदभाजां पूर्वेषामस्त्ययं पन्थाः ॥ ६ ॥